# चक्रदत्तः ।

(चिकित्सासंग्रहग्रन्थः)

श्रीचक्रपाणिना विरचितः ।

श्रीशिवदाससेनविरचितया
तत्त्वचन्द्रिकासमाख्यया व्याख्यया समलङ्कृतः ।


पण्डितकुलपतिना,
वि, ए, उपाधिधारिणा
श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
संस्कृतः प्रकाशितश्च ।



तृतीयसंस्करणम् ।

कलिकातानगर्य्यां
कलिकातायन्त्रे
मुद्रितः ।

ई १८९७ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर बि, ए,

PANDITA KULAPATI

JIBANANDA VIDYASAGARA, B. A.

*Superintendent, Free Sanskrit College, Calcutta.*

# सूचीपत्रम्।

### अथोदावर्त्तचिकित्सा।

### ( Intussusception or Intestinal obstruction. )



### अथानाहचिकित्सा।

### ( Epistasis. )





### अथ गुल्मचिकित्सा।

### ( Abdominal Tumour. )



### हृद्रोगचिकित्सा।

### ( Heart disease. )

## अथ मूत्रकृच्छ्रचिकित्सा ।

( Painful Micturition. )



## अथ मूत्राघातचिकित्सा ।

( Strangury. )



## अथाश्मरीचिकित्सा ।

( Stone or Calculus. )



## अथ प्रमेहचिकित्सा ।

(Diabetes, Spermatorrhœa, Gonorrhœa, Polyuria, &c.)



## अथ स्थौल्यचिकित्सा ।

( Obesity. )



## अथोदरचिकित्सा ।

(Ovarian Tumour, Ascites, Dropsy, &c. )

## अथ प्लीहयकृच्चिकित्सा ।

( Spleen and Liver )



## अथ शोथचिकित्सा ।

( Dropsy or Anasarca )



## अथ वृद्धिव्रध्नचिकित्सा ।

(Hypertrophy and Bubo.)



## अथ गलगण्डगण्डमालापची-ग्रन्थ्यर्बुदचिकित्सा ।

( Bronchocele, Scrofula, enlargement of Lymphatic Glands, Goitre, and Tumour. )



## अथ श्लीपदचिकित्सा ।

( Elephantiasis. )



## अथ विद्रधिचिकित्सा ।

( Deep-seated Abscess. )

### अथ व्रणशोथचिकित्सा।

( Boils. )



### अथ नाड़ीव्रणचिकित्सा।

( Sinus or Fistula. )



### अथ भगन्दरचिकित्सा।

( Fistula in Ano. )



### अथोपदंशचिकित्सा।

( Syphilis. )



### अथ शूकदोषचिकित्सा।

( On the disease of the penis; arising from the application of the poisonous insects to promote its growth. )



### अथ भग्नचिकित्सा।

( Fracture. )

## अथ कुष्ठचिकित्सा।

( Leprosy. )



## अथोदर्दकोठशीतपित्तचिकि

( Urticaria evanida. )



## अथाम्लपित्तचिकित्सा।

(Acidity and Biliousness



## अथ विसर्पविस्फोटचिकित्सा

( Erysipelas, Boils. )

## अथ मसूरिकाचिकित्सा।

( Small pox. )



## अथ क्षुद्ररोगचिकित्सा।



## अथ मुखरोगचिकित्सा।

( Disease of the mouth. )



## अथ कर्णरोगचिकित्सा।

( Disease of the ear. )

## अथ नासारोगचिकित्सा ।

( Disease of the nose. )



## अथ नेत्ररोगचिकित्सा ।

( Eye disease )





## अथ शिरोरोगचिकित्सा

( Headache. )

## अथासृग्दरचिकित्सा ।

( Menorrhagia. )



## अथ योनिव्यापच्चिकित्सा ।

( Uterine disease )



## अथ स्त्रीरोगचिकित्सा ।

( Disease of women. )



## अथ बालरोगचिकित्सा ।

( Disease of children. )





## अथ विषचिकित्सा ।

( Poisoning )



## अथ रसायनाधिकारः ।



## अथ वृष्याधिकारः ।

---

# चक्रदत्तः ।



## ज्वरचिकित्सा ।

गुणत्रयविभेदेन मूर्त्तित्रयमुपेयुषे ।
त्रयीभुवे त्रिनेत्राय त्रिलोकीपतये नमः ॥ १ ॥
नानायुर्वेदविख्यातसद्योगैश्चक्रपाणिना ।
क्रियते संग्रहो गूढ़वाक्यबोधकवाक्यवान् ॥ २ ॥

---

यः सप्तवर्षदेशीयो दधार धरणीधरम् ।
कंसध्वंसकरं वन्दे तं देवं देवकीसुतम् ॥
तातः किमथ मातेति यं दृष्ट्वा दृष्टपूर्वकम् ।
अभूत् स्कन्दोऽपि सन्देहस्तं देहं शिवयोर्भजे ॥
टीका रत्नप्रभा चक्रदत्तनिर्मितसंग्रहे ।
यद्यप्यास्ते तथाप्येष संक्षेपाय ममोद्यमः ॥
विस्तरोक्तञ्च संक्षिप्य प्रतिक्षिप्य च दुर्वचः ।
व्याख्यान्तरञ्च निक्षिप्य टीकेयं क्रियते मया ॥

विशिष्टशिष्टाचारानुमितश्रुतिबोधितकर्त्तव्यताकं प्रारिप्सितग्रन्थसमाप्तिफलकं तत्प्रतिबन्धकविघ्नध्वंसमात्रफलकं वा स्वयङ्कृतमिष्टदेवतानमस्कारं शिष्यशिक्षार्थमादौ निबध्नाति गुणत्रयेत्यादि ।—गुणत्रयं सत्त्वरजस्तमोरूपम्, मूर्त्तित्रयं ब्रह्महरिहरस्वरूपम् ॥ १ ॥

प्रेक्षावतां प्रवृत्त्यर्थं सम्बन्धाभिधेयप्रयोजनमाह नानेत्यादि ।—सदिति सिद्धफलम् । गूढ़वाक्यं गूढ़ार्थं वचनम्, तद्बोधकं तदर्थप्रतिपादकं यद्वचनं तद्युक्तम्, यथा—नवज्वरे षडङ्गादिभेषजविधानम्, तथा तत्रैव "न दद्यात् तत्र भेषजम्" इति भेषजनिषेधोऽपि, अतो विधिनिषेधयोरेकविषयत्वेन विरोधः स्यात्, अतस्तत्परिहारार्थं "मुख्यभेषजसम्बन्धी निषिद्ध" इत्यादि वचनं निबद्धमिति । संग्रहेण

रोगमादौ परीक्षेत ततोऽनन्तरमौषधम्।
ततः कर्म भिषक् पश्चाज्ज्ञानपूर्वं समाचरेत्॥ ३॥
नवज्वरे दिवास्वप्नस्नानाभ्यङ्गान्नमैथुनम्।
क्रोधप्रवातव्यायामकषायांश्च विवर्जयेत्॥ ४॥
ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात्।
क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्॥ ५॥

---

सह सद्योगानां वाच्य-वाचकलक्षणः सम्बन्धः, सद्योगा एवाभिधेयाः, अवान्तर-प्रयोजनं चिकित्सितम्, मुख्यन्तु आरोग्यमिति॥ २॥

तत्र चिकित्साक्रममाह रोगमित्यादि। आदौ निदानपूर्वरूपादिभिः रोगं परीक्षेत। ततो रोगपरीक्षानन्तरमौषधं परीक्षेत। ज्ञानपूर्वमिति कर्मदर्शन-जनितज्ञानपूर्वम्, ज्ञायते अनेनेति ज्ञानं शास्त्रं तत्पूर्वकमिति वा॥ ३॥

तत्र ज्वरस्य सर्वरोगप्रधानत्वात् प्रथमं तच्चिकित्सिते वक्तव्ये कृतमपि भेषजं निदानसेवनादकृतमिव भवतीति निदानपरिवर्जनस्यैव गरीयस्त्वात् प्रथमं निदान-परिवर्जनरूपं चिकित्सितमाह नवज्वर इत्यादि।—तत्रान्नं गुर्वन्नं लघ्वन्नस्य विधा-नात्, अत एवोक्तं हारीते "गुर्वन्नभोजनाच्चापि विष्टम्भो दोषकोपनम्" इति। कषायांश्चेति न तु कल्पनमुद्दिश्य कषायः प्रतिषिध्यते इति चरकवाक्यस्वरसात्, कषायशब्देनात्र कषायरसमात्रमुच्यते, न तु स्वरसादिः। अतएव जतुकर्णेऽपि "कषायस्वगुरुरूक्षस्निग्धस्नानाभ्यङ्गान् नवज्वरे वर्जयेत्" इत्युक्तम्। हरिश्चन्द्रेणापि "नात्र स्वरसादीनां निषेधः" इत्युक्तम् तथा "स्तभ्यन्ते न विपच्यन्ते कुर्वन्ति विषम-ज्वरम्। दोषा बद्धाः कषायेण स्तम्भित्वात् तरुणज्वरे" इति चरकवचने स्तम्भित्वा-दित्ययं हेतुः कषायरसवर्जनाभिप्रायेणैव सङ्गच्छते। उक्तं हि "कषायः स्तम्भनः शीतः" इति। वाग्भटेऽप्युक्तं "पित्तश्लेष्महरत्वेऽपि कषायः स न शस्यते। नव-ज्वरे मलस्तम्भात् कषायो विषमज्वरम्। कुरुतेऽरुचिहृल्लासहिक्काध्मानादिकानपि" इति॥ ४॥

[illegible]मयानां पूर्वं लङ्घनमौषधमित्युक्तम्; ज्वरोऽप्यामाशयसमुत्थः अत-स्तत्र लङ्घनमुपदिशति ज्वरे लङ्घनमित्यादि।—यद्यपि लङ्घनं तृतीये "चतुःप्रकारा संशुद्धिः" इत्यादिना दशविधमेव लङ्घनमुक्तं तथापि व्यायामप्रवातयोर्वर्जनीयत्वे नैवो-

आमाशयस्थो हत्वाग्निं सामो मार्गान् पिधापयन् ।
विदधाति ज्वरं दोषस्तस्माल्लङ्घनमाचरेत् ॥ ६ ॥
अनवस्थितदोषाग्नेर्लङ्घनं दोषपाचनम् ।

---

क्तत्वात् संशोधनादीनाञ्चावस्थाविशेषनियतत्वात् पारिशेष्यादत्रोपवास एव लङ्घनशब्देनोच्यते । अतएव लङ्घनमेवेत्येवकारेण संशोधनादिरूपं लङ्घनं निषिध्यते । तेन ज्वरस्य पूर्वरूपे यल्लघ्वशनादिविधानं तस्य न निषेधः । वाग्भटेनापि "स्नानाभ्यङ्गप्रदेहांश्च परिशेषञ्च लङ्घनम्" इत्यनेन नवज्वरे अनशनरूपलङ्घनापेक्षया परिशेषलङ्घनप्रतिषेधं कुर्वता संशोधनादिरूपं लङ्घनं निषिध्यते । किं वा चरकेण निदानस्थाने "हितं लघ्वशनमपतर्पणं वा" इति यदुक्तम्, तत्पूर्वरूपावस्थायाम् ; व्यक्तायान्तु लङ्घनमेवेत्येवकारेण लघ्वशनमपि निषिध्यते इति ज्ञेयम् । ननु लङ्घनबृंहणीये कफपित्तज्वरच्छर्द्यादिषु मध्ये ज्वरं पठित्वा उक्तं "पाचनैस्तान्, भिषक् प्राज्ञः प्रायेणादावुपाचरेत्" इति ; इह तु लङ्घनमेवादावित्यतो विरोधः ? नैवम् ; तद्भेषजप्रयोगस्यादौ पाचनं न तु ज्वरस्यादावित्यवगम्यते । किं वा आदावेव लङ्घन कार्य्यमिति योज्यम्, तेन जीर्णज्वरे न लङ्घनं कार्य्यमिति बोधयति । उक्तं हि वाग्भटे "शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् । नेष्यते तेष्वभिहितं शमनं यन्न कर्षणम्" इति । हारीतेन तु "पित्तश्लेष्मविशुद्ध्यर्थं कुर्य्याद्वमनमादितः" इति यदुक्तं तत् कफप्रधानानित्यादिवक्ष्यमाणावस्थायां ज्ञेयम् । क्षयशब्देन धातुक्षयकृतं ज्वरं किं वा राजयक्ष्मकृतं ज्वरं गृह्णाति । अनिलशब्देन निरामानिलग्रहणम् ; उक्तं हि "शुद्धवातक्षयागन्तुजीर्णज्वरिषु लङ्घनम् । नेष्यते" इति । किं वा क्षयानिलशब्देन धातुक्षयकुपितानिलग्रहणम् । यदुक्तं "वायोर्धातुक्षयात् कोपो मार्गस्यावरणेन च" इति । यस्तु वायुर्मार्गावरणेन कुप्यति, स आवरकधर्म्मितया प्रायेण सामो भवति । तत्र लङ्घनं मात्रया कर्त्तव्यमेव । यदुक्तं "सामे वातेऽपि लङ्घनम्" इति । अनिलज्वरमभिधायापि कामादिज्वराभिधानम्, कामादिज्वरेषु कालान्तरेण वातसम्बन्धो भवति, तेन प्रथममपि वातसम्बन्धे कामादिज्वराणामलङ्घनीयतोपदर्शनार्थम् ॥ ५ ॥

लङ्घनोपपत्त्यर्थं ज्वरस्य सम्प्राप्तिमाह आमाशयस्थ इत्यादि ।—वाग्भटस्य । अत्र यत्तदोर्नित्यसम्बन्धात् यस्मादिति लभ्यते ॥ ६ ॥

लङ्घनफलमाह अनवस्थितेत्यादि ।—सुश्रुतस्य । अनवस्थितो स्वस्थाने स्वमाने

ज्वरघ्नं दीपनं काङ्क्षारुचिलाघवकारकम् ॥ ७ ॥
प्राणाविरोधिना चैनं लङ्घनेनोपपादयेत्।
बलाधिष्ठानमारोग्यं यदर्थोऽयं क्रियाक्रमः ॥ ८ ॥
तत्तु मारुतक्षुत्तृष्णामुखशोषभ्रमान्विते।
कार्य्यं न बाले वृद्धे वा न गर्भिण्यां न दुर्ब्बले ॥ ९ ॥
वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये।
कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि ॥ १० ॥
पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्यं श्रोत्रनेत्रयोः ॥

---

चानवस्थितौ दोषाग्नी यस्य स तथा। काङ्क्षा अन्नप्रार्थना, रुचिः अभ्यवहारे पाटवम् ॥ ७ ॥

एतच्च लङ्घनं तथा कार्य्यं यथा न बलहानिः स्यादित्याह प्राणाविरोधिनेत्यादि।—प्राणो बलम्, विरोधश्चातिक्षय इहोच्यते। हेतुमाह बलाधिष्ठानमित्यादि।—अधिष्ठानमाश्रयः, अत्र बहुव्रीहिः। अत एवोक्तम्, "यस्माद्बलवतः सर्वक्रियाप्रवृत्तिस्तस्माद्बलमेव प्रधानमधिकरणानाम्" इति। यदर्थः आरोग्यार्थः ॥ ८ ॥

अलङ्घनीयानाह तत् त्वित्यादि ॥ ९ ॥

सम्यक् कृतस्य लङ्घनस्य लक्षणमाह वातमूत्रेत्यादि।—हृदयस्य शुद्धिः गौरवादिराहित्यम्, कण्ठस्य शुद्धिः कफलिप्तत्वादिविरहः, आस्यस्य शुद्धिः अविकृतरसत्वम्, तन्द्रा निद्रावत् क्लान्तिः, क्लमो दोषजा ग्लानिः। क्षुत्पिपासासहोदय इति क्षुत्पिपासयोर्युगपदुदय इत्यर्थः। वाग्भटेऽप्युक्तं "क्षुत्तृट्सहोदयः शुद्धहृदयोद्गारकण्ठता" इति। किन्तु "सृष्टमारुतविण्मूत्रं क्षुत्पिपासासहं लघुम्। प्रसन्नात्मेन्द्रियं क्षामं नरं विद्यात् सुलङ्घितम्" इति सुश्रुतदर्शनात्, क्षुत्पिपासयोरसहोऽसह्य उदय इति चक्रेण व्याख्यातम्; किन्तु न सहते इत्यसहः पचाद्यजन्तः कर्त्तरि दृश्यते, तेन असहशब्दस्यासह्यार्थत्वकल्पने कष्टं स्यादिति। कृतमिति सम्यक्कृतम्। अन्तरात्मनीति अन्तरिन्द्रिये मनसीत्यर्थः ॥ १० ॥

मनसः सम्भ्रमोऽभीक्ष्णमूर्द्ध्ववातस्तमो हृदि।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत्॥ ११॥
सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते।
वमनं वमनार्हस्य शस्तमित्याह वाग्भटः॥ १२॥
कफप्राधानानुत्क्लिष्टान् दोषानामाशयस्थितान्।
बुद्ध्वा ज्वरकरान् काले वम्यानां वमनैर्हरेत्॥ १३॥
अनुपस्थितदोषाणां वमनं तरुणे ज्वरे।
हृद्रोगं श्वासमानाहं मोहञ्च कुरुते भृशम्॥ १४॥
तृष्यते सलिलञ्चोष्णं दद्याद्वातकफज्वरे।
मद्योत्थे पैत्तिके वापि शीतलं तिक्तकैः शृतम्॥ १५॥
दीपनं पाचनञ्चैव ज्वरघ्नमुभयञ्च तत्।
स्रोतसां शोधनं बल्यं रुचिस्वेदप्रदं शिवम्॥ १६॥

---

अतिलङ्घितलक्षणमाह पर्वभेद इत्यादि।—अरुचिः, सत्यामपि बुभुक्षायाम् अनन्नाभिनन्दनम्; श्रोत्रनेत्रयोर्दौर्बल्यं स्वविषयग्रहणासामर्थ्यम्। सम्भ्रमोऽनवस्थितत्वं, भ्रान्तिरित्यन्ये। अभीक्ष्णमित्यतिशयेन। ऊर्द्ध्ववातः हिक्काश्वासकर्णस्वनजृम्भादयः, न पुनरुद्गारविशेषः, अतिलङ्घनेन कफक्षयात्। स च पुनः कफकोपाद भवति, यदुक्तम् "अधः प्रतिहतो वायुः श्लेष्मणा मारुतेन च। करोति नित्यमुद्गारमूर्द्ध्ववातः स उच्यते।" तमः हृदि मोह इत्यर्थः॥ ११॥

ज्वरारम्भ एव वमनावस्थामाह सद्य इत्यादि।—सन्तर्पणोत्थित इत्यत्र "सामे विशेषतः" इति वाग्भटे पाठो दृश्यते॥ १२॥

तरुणातरुणज्वरे अवस्थाविशेषे अविशेषेण वमनमाह कफप्रधानानित्यादि।—चरकस्य। कफः प्रधानो येषां ते कफप्रधानाः। उत्क्लिष्टान् हृल्लासादिना बहिर्निर्गमनोन्मुखान्। काले यथोक्तामावस्थायां वम्यानामिति वमनयोग्यानां, तेन गर्भिण्यादिनिषेधः॥ १३॥

उक्तावस्थाव्यतिरेकेण वमने दोषमाह अनुपस्थितेत्यादि।—चरकस्य। अनुपस्थितदोषाणाम् अनुत्क्लिष्टदोषाणामित्यर्थः॥ १४॥

लङ्घनकाले तृष्यतो जलमाह तृष्यते इत्यादि।—चरकस्य। वातकफज्वर इति

### षड़ङ्गपानीयम्।

मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः।
शृतशीतं जलं दद्यात् पिपासाज्वरशान्तये ॥ १७ ॥
मुख्यभेषजसम्बन्धो निषिद्धस्तरुणे ज्वरे।
तोयपेयादिसंस्कारे निर्दोषं तेन भेषजम् ॥ १८ ॥

---

वातज्वरे कफज्वरे वातकफज्वरे च उष्णं सलिलमर्द्धशृतं ज्ञेयम्। यदाह अग्निवेशः "क्वाथ्यमानन्तु यत् तोयं निष्फेनं निर्मलीकृतम्। भवत्यर्द्धावशिष्टञ्च तदुष्णोदकमुच्यते"। मद्योत्थ इत्यादि।—मद्यस्य अत्युष्णवीर्य्यत्वादम्लत्वाच्च पित्तकर्तृत्वात् तज्जन्यज्वरस्य पित्तजत्वेन परिग्रहे सिद्धेऽपि पुनस्तदभिधानम् अस्मिन्नपि मद्योत्थरोगे तिक्तकशृतजलस्यैव यौगिकत्वबोधनार्थमित्याहुः। तिक्तकैः शृतमिति वक्ष्यमाणमुस्तादिभिस्तिक्तकैः शृतम्। ज्वरघ्नमुभयञ्च तदिति उभयमुष्णं तथा तिक्तकशृतशीतञ्च। एतत् दीपनमपि न पाचनं, लङ्घनं पाचनमपि न दीपनमित्यत पर्यायोक्तिः, यद्यपि त्रिदोषजकफपित्तज्वरयोः पानीयं नोक्तं, तथापि सामान्येन विमानस्थाने यदुक्तं "किं नु खलु ज्वरितेभ्यः पानीयमुष्णं प्रयच्छन्ति" इत्यादिना तत्प्रामाण्यादुष्णमेव जलं देयम्। वातपित्तज्वरेऽत्यर्थदाहकारके शीतमर्द्धशृतं जलं देयमित्यपि विमाने एवात्यर्थपित्तोत्सर्गे इत्यादिना ग्रन्थेन सूचितम् ॥ १५ ॥ १६ ॥

तिक्तकैः शृतमिति यदुक्तं तदाह मुस्तेत्यादि।—चन्दनं रक्तचन्दनं, यदुक्तम् "उक्ते चन्दनशब्दे तु गृह्यते रक्तचन्दनम्"। उदीच्यं बालकम्। अत्र तु शुण्ठी अतितिक्ताप्यामाशयतुष्टिकारत्वाज्ज्वरहितत्वाद्विहिता। वाग्भटे तु पद्मकाष्ठं पठ्यते न तु शुण्ठी ॥ १७ ॥

ननु "ज्वरितं षडहेऽतीते" इत्यादिना, सप्ताहानन्तरमेवौषधदानं वक्ष्यति, अत्र तु सप्ताहाभ्यन्तरे एव षडङ्गाद्यौषधविधानम्, अतः पूर्वापरग्रन्थविरोधं निराचिकीर्षुराह मुख्यभेषजसम्बन्ध इत्यादि।—अन्नपानादेरसंस्कारकतया यदौषधमुपयुज्यते तत् प्रधानं, तद्भिन्नं पुनरप्रधानमिति। तेन प्रधानौषधस्यैव तरुणज्वरे निषेधः, नाप्रधानस्य षडङ्गादेः। उपयुज्यते इत्यनेन भक्षणविषय उपयोगो विवक्षितः, तेन स्वेदादीनामप्रधानत्वात् तरुणज्वरे न निषेधः। अष्टाङ्गाद्यवलेहोऽपि प्रधानत्वात् तरुणज्वरे देय एव। यतस्त्रिदोषज्वरे तु सप्ताहाभ्यन्तर एव तस्य विधानं तदपवादरूपमेवेति उत्सर्गापवादरूपतया विधिनिषेधयोर्न विरोधः ॥ १८ ॥

यदप्सु शृतशीतासु षड़ङ्गादि प्रयुज्यते।
कर्षमात्रं ततो द्रव्यं साधयेत् प्रास्थिकेऽम्भसि॥
अर्द्धशृतं प्रयोक्तव्यं पाने पेयादिसंविधौ॥ १९॥
वमितं लङ्घितं काले यवागूभिरुपाचरेत्।
यथा स्वौषधसिद्धाभिर्मण्डपूर्वाभिरादितः॥ २०॥
लाजपेयां सुखजरां पिप्पलीनागरैः शृताम्।

---

उक्तषडङ्गतोयसाधनार्थं तथा वक्ष्यमाणस्य कषायसाध्यपेयादेः साधनार्थञ्च भेषजजलमानव्यवस्थापिकां वृद्धवैद्यव्यवहारसिद्धां परिभाषामाह यदप्सु इत्यादि।—शृतशीतं शृतशीतजलनिमित्त यत् षडङ्गादि द्रव्य प्रयुज्यते तत् कर्षमात्रम्। आदिशब्देन पेयादिसम्पादनार्थजलसंस्कारकधान्यपिप्पलीपञ्चमूलीधान्यपञ्चकादिग्रहः। पेयादिसंविधावित्यादिशब्दात् तु यूषरसादीनां ग्रहणम्। अत्र मध्यवीर्य्यस्यापि षडङ्गादेः कर्षो मन्दानलपुरुषविषयतया ज्ञेयः, मध्यवीर्य्यस्य हि द्रव्यस्यार्द्धपलप्रमाणमग्रे व्यवस्थापनीयम्। प्रास्थिक इति द्रव्यद्वैगुण्यात्षोडशशरावचतुष्टये; "द्वैगुण्यं कुडवादूर्द्धं प्रस्थादिष्वितिमानतः" इत्युक्तेः। इमाञ्च परिभाषां क्वाथसाध्ययवागूविषयत्वेन वृद्धाः प्रायः समाद्रियन्ते॥ १९॥

वमनलङ्घनयोरनन्तरं यद्विधेयं तदाह वमितमित्यादि।—चरकस्य। अवस्थावशात् कदाचिद्वमितं कदाचिल्लङ्घितं, कदाचिच्च वमितलङ्घितम्। वमनानन्तरं हि यदि सम्यग्विशुद्धिर्न भवति, तदा तदहर्लङ्घनमपि क्रियते इत्यत उक्त,—काले इत्यन्नदानयोग्यकाले। यथास्वौषधं यस्यां यवाग्वां यद्भेषजं पिप्पलीनागरादि वाच्यं, तत्सिद्धाभिः। किं वा यस्मिन् ज्वरे यद्यद्भेषजं पाचनं वाच्यं तत्सिद्धाभिः; उक्तं हि सुश्रुते "अन्नकाले हिता पेया यथास्वं पाचनैः कृता" इति। यद्यत् स्वं यथास्वमिति वीप्सायामव्ययीभावः। मण्डपूर्वाभिरिति मण्डः पूर्वः प्रधानोऽवयवतया यासां ताभिरित्यर्थः। एतेन पेयाया ग्रहणं, तस्या एव बहुद्रवत्वेन मण्डप्रधानत्वात्; विलेप्यास्तु निरासः, तस्या अल्पद्रवत्वेन मण्डप्रधानत्वाभावात्। अन्ये तु मण्डः पूर्वः प्रथमाभ्यवहार्य्यो यासां ता इत्यर्थः, तेन प्रथमं स्वच्छभागं पीत्वा ततो घनभागः खाद्य इत्याहुः॥ २०॥

लाजपेयामित्यादि।—चरकस्य। अत्र लाजपेयामित्यादिना घृतभृष्टां ज्वरापहा-

पिबेज्ज्वरी ज्वरहरां क्षुद्वानल्पाग्निरार्दितः ॥ २१ ॥
पेयां वा रक्तशालीनां पार्श्ववस्तिशिरोरुजि।
श्वदंष्ट्राकण्टकारीभ्यां सिद्धां ज्वरहरां पिबेत् ॥ २२ ॥
कोष्ठे विबद्धे सरुजि पिबेत् पेयां शृतां ज्वरी।
मृद्वीकापिप्पलीमूलचव्यचित्रकनागरैः ॥ २३ ॥
पञ्चमूल्या लघीयस्या गुर्व्या ताभ्यां सधान्यया।
कणया यूषपेयादि साधनं स्याद्यथाक्रमम् ॥
वातपित्ते वातकफे त्रिदोषे श्लेष्मपित्तजे।
यवागूः स्यात् त्रिदोषघ्नी व्याघ्रीदुःस्पर्शगोक्षुरैः ॥ २४ ॥
कर्षार्द्धं वा कणाशुण्ठ्योः कल्कद्रव्यस्य वा पलम्।
विनीय पाचयेद्युक्त्या वारिप्रस्थेन चापराम् ॥ २५ ॥

---

मित्यन्तेन चरके दश यवाग्वोऽभिहिताः। तत्र पिप्पलीनागरैः शृतामित्यन्ता श्लेष्मणीति हरिश्चन्द्रः। अन्ये तु लाजपेयां सुखजरामित्येका, पिप्पलीनागरैः शृतामिति द्वितीयाम्, एवं शेषाभिः सममेकादश पेया इति व्याचक्षते। किन्तु "प्राक् लाजपेयां सुखजरां सशुण्ठीम्" इति वाग्भटदर्शनात् हरिश्चन्द्रपक्ष एव समीचीनः यतोऽस्मिन् प्रकरणे तत्र लाजपेया नोच्यते ॥ २१ ॥

पेयामित्यादि। चरकस्य। श्वदंष्ट्रा गोक्षुरं मृद्वीका द्राक्षा चित्रकं रक्तचित्रकं मासलत्वात्। पञ्चमूल्येत्यादि चत्वारो योगा अवचारणयैव व्याख्याताः। यवागूः स्यादित्यादौ व्याघ्री कण्टकारी, दुःस्पर्शा दुरालभा ॥ २२ ॥

कल्कसाध्ययवागूसाधनार्थं परिभाषामाह कर्षार्द्धं वेत्यादि। कर्षार्द्धं वेति कर्षार्द्धं प्रत्येकम्। त्रिविधं हि भेषजद्रव्यं वीर्य्यभेदात्; तीक्ष्णवीर्य्यं यथा शुण्ठ्यादि, मध्यवीर्य्यं बिल्वाग्निमन्थादि, मृदुवीर्य्यमामलक्यादि। तत्र कणाशुण्ठ्योरिति तीक्ष्णद्रव्योपलक्षणं, तेन तीक्ष्णद्रव्यमात्रस्यैव कर्षप्रमाणमिति ज्ञापितम्। कल्कद्रव्यस्य वा पलमिति मृदुद्रव्योपलक्षणं, तेनान्यस्यापि मृदुवीर्य्य-द्रव्यस्यामलक्यादेः पलं ग्राह्यमिति ज्ञापयति। एतेन तीक्ष्णमृदुद्रव्ययोः कर्षपल-मानव्यवस्थया मध्यवीर्य्यस्य बिल्वाग्निमन्थादेरनुक्तमप्यर्द्धपलमानं सामर्थ्यादेव ज्ञेयम्। यत् पुनर्मध्यवीर्य्यस्य मण्डूकादेः कर्षप्रमाणमुक्तं, तन्मन्दानलपुरुषाभिप्रायेणेत्युक्तमेव।

षड़ङ्गपरिभाषैव प्रायः पेयादिसम्मता ॥ २६ ॥
यवागूमुचिताद्भक्ताच्चतुर्भागकृतां वदेत् ॥ २७ ॥
सिक्थकै रहितो मण्डः पेया सिक्थसमन्विता।

---

विनीयेति कल्कीकृत्य, प्रक्षिप्येति वा। अपरामित्यन्याम्, अन्यत्वञ्च कषायसाध्य यवागूमपेक्ष्य, तेन कल्कसाध्यामित्यर्थः। एवञ्च तीक्ष्णद्रव्यापेक्षया कर्षप्रमाणं, मृदु द्रव्यापेक्षया च पलप्रमाणं, मध्यवीर्य्यद्रव्यापेक्षया चार्द्धपलप्रमाणं द्रव्यं विनीय कल्कसाध्यां यवागूं वारिप्रस्थेन द्रव्यद्वैगुण्याच्छरावचतुष्टयमानेन साधयेदिति योजना। ननु प्रबलानलबलादौ पुरुषे बहुयवाग्वादि विधेयं तत्र कथं वारिप्रस्थेन यवागूसाधनं भविष्यति? इत्याह युक्त्येति। एतेन यत्र उत्तमबलानले बहुयवागूर्विधेया, तत्र युक्त्या जलप्रस्थद्वयं त्रयं वा तण्डुलानुरूपं दत्त्वा यवागूं साधयेत्, अल्पबलानले तु वारिप्रस्थेनैत्यर्थः। अपरानिति पाठे यूषादीनिति,। तेन पेया-साधनरीत्या यूषादयोऽपि साधनीया इति प्रतिपादितम् ॥ २३—२५ ॥

अथ क्राथसाध्ययवागूसाधनार्थं कथमिह परिभाषा नोक्ता? इत्यत आह षड़ङ्ग परिभाषैव इत्यादि।—अन्ये तु "क्राथ्यद्रव्याञ्जलिं क्षुण्णं श्रपयित्वा जलाढके। अर्द्ध-शृतेन तेनाथ यवाग्वाद्युपकल्पयेत्" इत्येवं परिभाषाग्निवेशसंहितोक्तां क्राथसाध्य-यवागूविषयत्वेनेत्याहुः। अस्यार्थः। अञ्जलिः पलचतुष्टयं श्रपयित्वा जलाढके द्रव्यद्वैगुण्यात् जलस्य षोडशशरावे। द्रव्यं तावद्द्विविधं वीर्य्यप्रधानं रसप्रधानञ्च। तत्र आद्यं भेषजद्रव्यं, द्वितीयं पुनराहारद्रव्यं मांसादि। तत्र रसप्रधानद्रव्याभि-प्रायेणैव चतुःपलद्रव्याभिधानमत्र ज्ञेयम्। तेन परिभाषेयं "सिद्धवराहनिर्य्यूहे यवागूर्बृंहणी मता" इत्यादि यवागूविषया बोध्या। वृन्दस्तु "वृद्धवैद्याः पलं द्रव्यं ग्राहयित्वाढकेऽम्भसि। भेषजस्यातिबाहुल्यात् कदाचिदरुचिर्भवेत्" इति जेज्जड़-व्याख्यातमेव वृद्धव्यवहारं निजपद्येन लिखितवान् ॥ २६ ॥

इदानीं यवाग्वर्थं क्रियमाना दरदलिततण्डुला देया इत्यत आह यवागू-मित्यादि। उचितादित्यभ्यस्तात्, चतुर्भागकृतामिति चतुर्थभागकृतां तद्दिवसीय-बुभुक्षापेक्षया ॥ २७ ॥

पेयादीनां लक्षणमाह सिक्थकैरित्यादि। अत्र द्रवसिक्थसमन्विता यवागू-रिति यवाग्वाः सामान्यलक्षणम्। सा च द्विविधा पेयाविलेपीभेदात्। तत्र यवाग्वा एवोपरितनभागो मण्डः, न तु पृथङ्मण्डः साध्यते। आयुर्वेदशास्त्रेऽदर्शित-

यवागूर्बहुसिक्था स्याद्विलेपी विरलद्रवा ॥ २८ ॥
अन्नं पञ्चगुणे साध्यं विलेपी तु चतुर्गुणे ।
मण्डश्चतुर्दशगुणे यवागूः षड्गुणेऽम्भसि ॥ २९ ॥
पांशुधाने यथा वृष्टिः क्लेदयत्यतिकर्दमम् ।
तथा श्लेष्मणि संवृद्धे यवागूः श्लेष्मवर्द्धनी ॥ ३० ॥

---

त्वात । यस्तु क्वचिन्मण्डगुणो मण्डोपयोगी वा श्रूयते सोऽप्यस्यैव बोध्यः । न मण्डश्चतुर्दशगुणजलसाध्यः, यवागूस्तु षड्गुणजलसाध्या इत्यनन्तरमेव वक्ष्यति ; त कथमुच्यते यवाग्वा उपरितनभागो मण्डः ? नैवम् । तत्र यवागूशब्देन पे विवक्षिता । तेन पेयायाः पृथक्जलमानं नोक्तम् । द्रवसिक्थसमन्वितत्वमे यवागूसामान्यलक्षणं, तेन चतुर्दशगुणजलसिद्धस्यापि मण्डस्य सिक्थसमन्वित वस्थायां यवागूत्वमेव, तेन सूक्तं यवाग्वा उपरितनभागो मण्ड इति । पेया शी संज्ञाबलात् बहुद्रवत्वमल्पसिक्थत्वञ्च ज्ञेयम् । तेन सिक्थसमन्विता यवा पेयेति, पेयालक्षणे बहुद्रवत्वमल्पसिक्थत्वञ्च लक्षणतया बोध्यम् । तथा विरलद्र बहुसिक्था च यवागूर्विलेपीति विलेपीलक्षणं बोध्यम् । तेन पेयाविलेपीव्यतिरेके पृथग्यवागूर्नास्तीत्याहुः । अतएव वाग्भटेऽपि यवागूगुणः पृथङ्नोक्तः । तदुक्त "मण्डपेयाविलेपीनामोदनस्य च लाघवम् । यथापूर्वं शिवस्तत्र मण्डो वातानु लोमनः" इति । तथा चरकेऽप्यन्नमाने मण्डपेयाविलेप्योदनानामेव गुणो दर्शित न पृथग्यवाग्वा इति । यत्तु द्रव्यगुणे माधवकरेण पेयाविलेपीगुणं पठित्व लिखितं, "तृष्णापनयनी लघ्वी दीपनी बस्तिशोधनी । ज्वरे चैवातिसारे च यवागू सर्वदा हिता" इति, तत्सामान्यगुणाभिप्रायेण बोध्यं सामान्यक्षीरगुणवत् । य प्रयोगरत्नाकरे "चतुर्विधं भवेद्भक्तं जलदानप्रमाणतः । तत्र भक्तं विलेपी च यवागू पेयया सह" इति ; तत्र मण्ड एव पेयाशब्देन विवक्षितः, यतस्तदनन्तरमेव पेयाय चतुर्दशगुणजलमुक्तं तत्रैव "पञ्चगुणे जले भक्तं विलेपी च चतुर्गुणे । यवागू षड्गुणे तोये चतुर्दशगुणे पराम्" इति ॥ २८ ॥

यवागूपाकार्थं जलपरिमाणमाह अन्नमित्यादि । सूक्ष्मार्थस्य । यवागूर पेया ॥ २९ ॥

यवागूः कस्मिन् विषये न कर्त्तव्येत्याह पांशुधान इत्यादि । पांशुधाने पांश सञ्चये, अतिकर्दमं यथा स्यात् तथा क्लेदयति क्लेदं जनयति ॥ ३० ॥

मदात्यये मद्यनित्ये ग्रीष्मे पित्तकफाधिके ।
ऊर्द्धगे रक्तपित्ते च यवागूरहिता ज्वरे ॥
तत्र तर्पणमेवाग्रे प्रदेयं लाजशक्तुभिः ।
ज्वरापहैः फलरसैर्युक्तं समधुशर्करम् ॥
द्रवेणालोड़ितास्ते स्युस्तर्पणं लाजशक्तवः ॥ २१ ॥

---

मदात्यय इत्यादि। चरकस्य। चरके एतद्वचनस्योपरि "ज्वरे मद्यसम्-
[भ]ात्" इत्यस्ति, तेन मद्यकारणके ज्वरे यवागूर्निषिद्धैव। तेन मदात्यये व्याधौ
मद्यनित्ये मद्यपे योऽमद्यहेतुकोऽपि ज्वरः सोऽपि पेयानर्हः। तथा ग्रीष्मे
[ज्व]रः, तथा पित्तकफाधिको यो ज्वरः, तथा ऊर्द्धगरक्तपित्तिनो यो ज्वरः, तेषु
यवागूर्न हितेति। इह मदात्ययादीनां पेयानर्हत्वेन तेषु जातोऽपि ज्वरः
[अ]नर्हः। पित्तकफाधिक इत्यनेन पित्तकफयोरतिमात्रोद्गमे सति पेयाया अदानं
[दर्श]यति। तेन कफजे ज्वरे, पित्तजे ज्वरे अनुद्भूतदोषे पेया देया। उक्तं हि
[क]फजेऽपि यदा क्षीणो लङ्घनादिक्रमात् कफः। शस्ता एव यवाग्वस्तु तत्र पित्ते-
[ऽप्य]क्रमः" इति। अतएव चरके "पैत्तिके वाथ शीतां मधुयुतां पिबेद्यवागूम्"
[इत्य]नेन पित्तेऽपि यवागूरुक्ता। पांशुधाने यथा वृष्टिरित्यादि हारीतवचनमपि
[अनु]द्रिक्तकफविषयं ज्ञेयम्। अन्ये तु मिलितपित्तकफाधिके पुरुषे यवागूप्रतिषेध-
[म्]। ऊर्द्धगे कफपित्ते चेति पाठान्तरमनार्षं; पित्तकफाधिक इत्यनेनैव तद्-
लाभात्। सुश्रुतेऽपि "कफपित्तपरीतस्य ऊर्द्धासृक्स्त्रुतिनस्तथा" इत्युक्तम्।
[य]त्तु ऊर्द्धग इति ऊर्द्धगरक्तपित्ते कफपित्ते चेति कफयुक्तपित्ते पित्तस्थानगते
[इ]त्यर्थः। उक्तं हि वाग्भटे "मद्योद्भवे मद्यनित्ये पित्तस्थानगते कफे।
तयोर्बाधिकयोस्तृड्दाहच्छर्दिपीड़िते। ऊर्द्धं प्रवृत्ते रक्ते च पेयां नेच्छन्ति
इति व्याख्याय कफपित्ते चेति पाठमुपपादयन्ति। यद्यपि चरके "ऊर्द्धगे
पूर्वम्" इति वचसा यवागूं बाधित्वा ऊर्द्धगे रक्तपित्ते तर्पणं विहितमेव,
यूर्द्धगरक्तपित्तिनो यो ज्वरस्तत्रापि तर्पणादिक्रमः कार्यः इत्याह तत्रेत्यादि।—
पथ्यानि फलानि द्राक्षादाड़िमादीनि; उक्तं हि "द्राक्षादाड़िमखर्जूरपियालैः
पक्वैः। तर्पणार्हेषु कर्त्तव्यं तर्पणं ज्वरनाशनम्" इति। तर्पणशब्दार्थमाह
[द्रवेणा]लोड़ितास्ते स्युरित्यादि ॥ २१ ॥

श्रमोपवासानिलजे हितो नित्यं रसौदनः।
मुद्गयूषौदनश्चापि देयः कफसमुद्भवे।
स एव सितया युक्तः शीतः पित्तज्वरे हितः॥ ३२॥
रक्तशाल्यादयः शस्ताः पुराणाः यष्टिकैः सह।
यवाग्वोदनलाजार्थे ज्वरितानां ज्वरापहाः॥ ३३॥
मुद्गामलकयूषस्तु वातपित्तात्मके हितः।
ह्रस्वमूलकयूषस्तु कफवातात्मके हितः॥
निम्बकूलकयूषस्तु हितः पित्तकफात्मके॥ ३४॥

---

श्रमेत्यादि। नित्यमिति सर्वदा नवे पुराणे च। रसो मांसरसः, तेनोपसिक्त ओदनः रसौदनः। एवं मुद्गयूषौदनमित्यत्रापि व्याख्येयम्। अयञ्च रसौदनः दीप्ताग्निं प्रति बोध्यः, उक्तं हि सुश्रुते "उपवासश्रमकृते ज्वरे वाताधिके तथा। दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम्" इति। मुद्गयूषौदनश्चापीति कफजे मुद्गयूषौदनो देयो यवाग्वा अहितत्वात्। स एवेति मुद्गयूषौदनः॥ ३२॥

रक्तशाल्यादय इत्यादि। चरकस्य। चरके पुराणा इत्यत्र 'शालयः" इति पठन्ति, तेन यवकादीनां निरास इत्याहुः। ये तु पुराणा इति, पठन्ति तन्मते यद्यपि "शूकधान्यं शमीधान्यं समातीतम्" इत्यनेन पुराणस्योपयोगो लब्धः, तथापि प्रमादादातिनवस्य तथातिपुरातनस्य च ग्रहणं मा भूदित्येतदर्थं पुराणा इत्युक्तम्॥ ३३॥

सम्प्रति द्वन्द्वजेष्वाहारविधिमाह मुद्गामलकेत्यादि। आमलकापेक्षया मुद्गस्य भूयसी मात्रा, आहारद्रव्यत्वात्। योगोऽयं यद्यपि सुश्रुतेन अन्नपानाध्याये कफपित्तज्वरहरत्वेन निर्दिष्टः, तथापीह वातपित्तज्वरेऽभिधानात् वातपित्तज्वरहरत्वमपि वचनबलादेवाध्यवसीयते। ह्रस्वमूलको बालमूलकः अत्र शमीधान्यस्य यूषयोनित्वात् मुद्गाद्यपि बोध्यम्। एवं यत्र नास्ति तत्र सर्वत्र। किंवा व्यञ्जनपरो यूषः। निम्बकूलकेत्यादि। सुश्रुतस्य। निम्बस्य पत्रं, तथा कूलकस्य पटोलस्य च पत्रम्॥ ३४॥

मुद्गान् मसूरांश्चणकान् कुलत्थान् समुकुष्टकान्।
आहारकाले यूषार्थे ज्वरिताय प्रदापयेत्॥ ३५॥
पटोलपत्रं वार्त्ताकुं कूलकं कारवेल्लकम्।
कर्कोटकं पर्पटकं गोजिह्वां बालमूलकम्।
पत्रं गुडूच्याः शाकार्थे ज्वरिताय प्रदापयेत्॥ ३६॥
ज्वरितो हितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत्।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽथ वा॥ ३७॥

---

मुद्गानित्यादि।—सुश्रुतस्य। मुकुष्टको वनमुद्गः॥ ३५॥

पटोलेत्यादि।—सुश्रुतस्य। वार्त्ताकुः वार्त्ताकुफलं कूलकमपि पटोलिफलं कर्कोटकं काकरोल इति ख्यात, गोजिह्वा दार्वीशाक.॥ ३६॥

इदानीं ज्वरितस्यारुचावपि हितभोजनं नियमयन्नाह ज्वरित इत्यादि।—अस्यारुचिर्यदि भवेत् तथापि ज्वरितो हितमेवाश्नीयादेव, इत्युभयत्रापि नियमः। यतो दिनान्ते भोजयदित्यनेन भुजि क्रिया विहितैव। "न हि तस्याहित भुक्तमायुषे वा सुखाय वा" इत्यादिना हितमपि विहितम्; अतः सिद्धे सत्यारम्भो नियमाय भवति। विपक्षे दण्डमाह अन्नकाले हीत्यादि। यतोऽन्नकाले हितमभुञ्जानः पुरुषः क्षीयते म्रियते वा। अन्ये तु अरुचौ सत्याम् अशितुर्भोजने इच्छाभावात् अपिशब्दं भिन्नक्रमेण योजयित्वा नञं प्रश्लिष्यान्यथा व्याचक्षते। अस्य यदि अरुचिर्भवेत् तदा अहितमप्यश्नीयात्, कुत इत्याह अन्नकाले हीत्यादि; यतोऽभुञ्जानस्य धातुक्षयो मरणं वा स्यात् तस्मादहितमश्नीयादित्यर्थः। न चैव व्याख्याने गुर्वभिष्यन्दकाले चेत्याद्युत्तरग्रन्थविरोधः स्यादिति वाच्यम्; यतस्तेनापि ग्रन्थेनाहितं न प्रतिषिध्यते अन्यथा व्याख्यानात्, तथा हि ज्वरी ना पुरुषः गुर्वभिष्यन्दाकाले च कथञ्चन कदाचिदद्यात् सक्रन्नीतेत्यर्थः। यतो भुक्तं भोजनम् आयुषे वा सुखाय वा न अहितं किन्तु हितमेव। हिशब्दस्थाने तुशब्दपाठेऽपि तुशब्दस्यापावस्यानेकार्थत्वात्, हेतौ व्याख्येयः। नन्वेषा व्याख्या तदैव सङ्गच्छते यदि अहितार्थमुपदेशः क्वापि शास्त्रे तिष्ठति किन्तर्हि हितस्यैव सर्वत्रोपदेशः। अवस्थाया तदपि हितमिति चेत् तर्हि अहितमिति व्याहतम्? सत्यं, प्रायः सर्वदा मुद्गादिकं हितमिति कृत्वा अहितमित्युच्यते, अतएवाहुः "मनोऽनुरूपं यदपथ्यं तदपि क्रियत एव" इति। यदुक्तं चरके "मनसोऽप्यानुकूल्येन तुष्टिरूर्जो रुचिर्बलम्।

अरुचौ मातुलुङ्गस्य केशरं साज्यसैन्धवम् ।
धात्रीद्राक्षासितानां वा कल्कमास्येन धारयेत् ॥ ३८ ॥
सातत्यात् स्वाद्वभावाद् वा पथ्यं द्वेष्यत्वमागतम् ।
कल्पनाविधिभिस्तैस्तैः प्रियत्वं गमयेत् पुनः ॥ ३९ ॥
ज्वरितं ज्वरमुक्तं वा दिनान्ते भोजयेल्लघु ।
श्लेष्मक्षये विवृद्धोष्मा बलवाननलस्तदा ॥ ४० ॥

सुखोपभोगिता च स्याद्व्याधेश्चापि बलक्षय.” इति । किन्तु जेज्जडमते एषा व्याख्या न सङ्गच्छते, यतो ज्वरितोहितमित्यादेरनन्तरमेव हितविधायकमहितप्रतिषेधक “सततं विषमं वापि” इत्यादि “वर्जयेच्च समासत ” इत्यन्तं ग्रन्थं जेज्जडः पठति, तन्मध्ये च गुर्वभिष्यन्दीत्यादिग्रन्थोऽप्यस्ति, ततो गुर्वभिष्यन्दीत्यादिवाक्यस्याहितविधायकत्वव्याख्याने प्रकरणमसङ्गतं स्यात् । तथा चन्द्रिकाकारेणापि “ज्वरितस्य मन्दाग्नेर्गुर्वन्नापाकेऽजीर्णम्, अभिष्यन्दिन. स्रोतोरोधकत्वेन ज्वरवृद्धि” इत्यादि व्याख्यातम् । एवञ्च गुर्वभिष्यन्दीत्यादिग्रन्थोऽप्यहितप्रतिषेधकपरतया ऋजुमार्गेणैव व्याख्येयः । ज्वरितो हितमश्नीयादित्याद्यपि हितविधायकतया एव व्याख्येयम् अहितस्य रोगवर्द्धकत्वेन सर्वत्र निषेधात्, उक्तरीत्या गुर्वभिष्यन्दीत्यादिग्रन्थाविरोधश्चेति ॥ ३७ ॥

इदानीं बलवदुपद्रवत्वेनारुचेः प्रतीकारमाह अरुचावित्यादि ।—योगान्तरमाह धात्रीत्यादि ॥ ३८ ॥

अथ हितमेव यदि सततोपयोगादनभिमतरसादियोगाद्वा रुचिविषयो न स्यात, तदा किं कार्य्यम् ? इत्याह सातत्यादित्यादि ।—दृढबलस्य । सातत्यादिति सततोपयोगात् । सततोपयोगाद्धि स्वाद्वन्नमपि अप्रियं भवतीत्यनुभवसिद्धम् अस्वादु तु स्वत एवाप्रियम् । स्वादुरभीष्टो रसः । तैस्तैः कल्पनाविधिभिरिति स्वरसकल्कादिसूदशास्त्रोक्तविधानैः पुनः प्रियत्वं गमयेत् ॥ ३९ ॥

अन्नकालमाह ज्वरितमित्यादि ।—वाग्भटस्य । दिनान्ते इत्यपराह्णे ; सुश्रुतेऽप्युक्तं “सर्वज्वरेषु सप्ताहं मात्रावद्भोजनं हितम् । दिनापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम्” इति । ज्वरितमित्यादिवाक्यानन्तरं वाग्भटवचनं यथा “यथोचितेऽथवा काले देशसात्म्यानुरोधतः । प्रागल्पवह्निर्भुञ्जानो न ह्यजीर्णेन पीड्यते”

गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन।
न हि तस्याहितं भुक्तमायुषे वा सुखाय वा॥ ४१॥
लङ्घनं स्वेदनं कालो यवाग्वस्तिक्तको रसः।
पाचनान्यविपक्वानां दोषाणां तरुणे ज्वरे॥ ४२॥
आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः।
मध्यं द्वादशरात्रन्तु पुराणमत उत्तरम्॥ ४३॥

---

इति। तेन यस्य पुरुषस्य य उचित आहारकालः, तस्मिन्नेव तं भोजयेत्। यथोचिते हि काले देशसात्म्यानुरोधतः प्रायः क्षुदबोधो भवति तदतिक्रमे च क्षुधापगमो भवति, तेन तस्य दिनान्तापेक्षा च कर्त्तव्येत्याह प्रागित्यादि। अल्पवह्निरिति कायाग्नेर्वहिर्निःसरणात् ज्वरितोऽल्पवह्निरेव भवति। देशसात्म्यानुरोधात् अल्परपि प्रागेव पूर्वाह्णेऽपि भुञ्जानोऽजीर्णेन न पीड्यते न बाध्यते इत्यर्थः॥ ४०॥

नन्वरुचावपि सत्यां हितमेव भोक्तव्यम्, नाहितमित्युक्तम्, अतस्तत् किमहितं यन्न भोक्तव्यम्? इत्याह गुर्वित्यादि।—सुगमं। गुरु पिष्टकादि, अभिष्यन्दि, दोषधातुमलस्रोतसां क्लेदजनकम् अम्लिकादि। नाद्यात् न खादेत्। तथा अकाले अप्राप्ते अतीते च काले हितमपि नाद्यात्। कथञ्चन कदाचिदपि। अत्र हेतुर्नहीत्यादि॥ ४१॥

इदानीं लङ्घनमेवादाविति यदुक्तं तस्य पाचनतां दर्शयन्, प्रसङ्गात् स्वेदादीनामपि पाचनतामाह लङ्घनमित्यादि।—काल इत्यष्टाहः। तिक्तकरसोऽत्र यवागूपानीयादिसंस्कारकत्वेन ज्ञेयः। स्वतन्त्रभेषजप्रयोगस्य तरुणे निषेधात्। उक्तञ्च "भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्" इति। अविपक्वानामित्युक्तापि यत् तरुणज्वरे इत्युक्तम्, तदष्टाहादूर्द्ध्वमतरुणे ज्वरे अपक्वेषु दोषेषु पाचनकषायस्य प्राधान्यमावेदयति, न तु लङ्घनादीनाम्। किं वा अविपक्वग्रहणमष्टाहादूर्द्ध्वमपि सामत्वानुवृत्तिर्भवतीति सूचनार्थम्। अत एवाष्टाहादूर्द्ध्वमपि आमपाचनार्थं पाचनं शमनीयं वेत्यादि वक्ष्यति॥ ४२॥

ननु ज्वरस्य तरुणता कियन्तं कालं तिष्ठति? इत्याह आसप्तरात्रमित्यादि।—सप्तरात्रं व्याप्य। आङयमभिविधौ न मर्य्यादायाम्, अष्टाहस्य निरामज्वरकालत्वेनोक्तत्वात्। मध्यं द्वादशरात्रमिति पाठः साधीयान्, न तु मध्यं चतुर्दशाहन्त्विति, जतूकर्णे "जीर्णस्त्रयोदशदिवसः" इत्युक्तत्वात्। अत उत्तरमिति द्वादशाहानन्तरं

**पाचनं शमनीयं वा कषायं पाययेत्तु तम् ।**
**ज्वरितं षडहेऽतीते लघ्वन्नप्रतिभोजितम् ॥ ४४ ॥**

त्रयोदशदिवसमारभ्य, पुराणमिति जीर्णज्वरमाहुः । यत्तु "त्रिसप्ताहव्यतीतस्त
ज्वरो यस्तनुतां गतः । प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते" इति तत्रान्तरम
तदतिजीर्णाभिप्रायेण बोध्यम् । यद्यपि तरुणज्वर एवात्र प्रकृतस्तथापि मध्यपुराण
योरत्राभिधानमेकवाक्यनिबद्धत्वात् ॥ ४३ ॥

ननु लङ्घनानन्तरं किं कर्त्तव्यम् ? इत्याह पाचनमित्यादि ।—एतच्च विकल्पद्व
योग्यतया यथाक्रममामदोषपक्वदोषविषयं ज्ञेयम् । तेन पाचनं सामस्य, निरा
मस्य शमनमिति ज्ञेयम् । षडहेऽतीते इति ज्वरोत्पाददिनमारभ्य षडहेऽतिक्रान्
सप्तमेऽहनि लघ्वन्नप्रतिभोजितं ज्वरितम् अथादष्टमेऽहनि पाचनं शमनीयं वा पायये
दिति योजना । एवञ्च अष्टाहो निरामज्वरलक्षणमिति पूर्ववाक्येण, तथा "नि स
प्तता निरामज्वरलक्षणम्" इति खरनादवाक्येन, तथा सप्तरात्रात् परं केचिन्मन्यन्
देयमौषधम्" इति सुश्रुतवाक्येन, तथा "सप्ताहादौषधं केचित्" इति वाग्भट
वचनेन सहैकवाक्यता उपपन्ना भवति । अन्ये पुनरमुमेवार्थं प्रकारान्तरेणेच्छन्ति—
षडहे अतीते इति ज्वरोत्पाददिनं परित्यज्य गणना कार्य्या वस्तिदिनपरिहारेण परि
हारगणनावत्, तेन षडहे अतीते इत्यस्य सप्तमे अतीते इत्येवार्थो भवति । भट्टार
हरिश्चन्द्रेणापि सप्तमे दिने कषायपानं यद्व्याख्यातं तस्याप्ययमभिप्रायः उन्नेयः
अन्यथा सुश्रुतादिविरोधो दुष्परिहर इति । चन्द्रिकाकारेणोक्तम् "अचिरोग
दिनचतुष्टयवत् ज्वरस्य सप्ताहः सामताकालः, तत्र न पाचनं वा शमनं न शोधनम
इति । यत्तु पेयाद्यनन्तरं हारीतेनोक्तम् "एता क्रियां प्रयुञ्जीत षड्रात्रं सप्तमे
ऽहनि । पिबेत् कषायसंयोगान् ज्वरघ्नान् साधुसाधितान्" इति, तथा "इति
षाड्रात्रिकः प्रोक्तो नवज्वरहितो विधिः । ततः परं पाचनीयं शमनं वा ज्वर
हितम्" इति खरनादवचनञ्च पूर्वोक्तरीत्या अष्टाहप्रतिपादकमेव ज्ञेयम् । अथव
यतः सुश्रुते "सप्तरात्रात् परं केचिन्मन्यन्ते देयमौषधम्" इत्याद्यभिधाय पैत्तिके व
ज्वरे देयमल्पकालसमुत्थिते । अचिरज्वरितस्यापि भेषज्यं दोषपाकतः" इत्यु
क्तम्, वाग्भटेनापि "मृदुर्ज्वरो लघुर्देहश्चलिताश्च मला यदा । अचिरज्वरितस्यापि
भेषज्यं योजयेत् तदा" इति यदुक्तम्, तदपि सुश्रुतसंवादात् पित्तज्वरपरमेव
ज्ञेयम् । एतद्वचनद्वयं सप्ताहादर्वागपि पाचनकषायदानप्रतिपादकमनुक्तसाम

**सप्ताहात् परतोऽस्तब्धे सामे स्यात् पाचनं ज्वरे।**

---

यामेव ज्ञेयम्।. उद्धूतसामतायान्तु भेषजदानस्य बलवदपायजनकत्वात्। अत-
ाह वाग्भटः "सप्ताहादौषधं केचिदाहुरन्ये दशाहतः। केचिल्लघ्वन्नभुक्तस्य
ज्यमामोल्वणे न तु। तीव्रज्वरपरीतस्य दोषवेगोदयो यतः। दोषेऽथवाभिनिचिते
ालेमित्यकारिणि। अपच्यमानं भैषज्यं भूयो जनयति ज्वरम्" इति। अपे-
कज्वरे तु वातजादौ सप्ताहादर्वाक् पाचनमपि न देयमेव। सप्ताहानन्तरमपि
सम्यग्दोषपाकलक्षणानि ज्वरमार्दवक्षुधादीनि न भवन्ति तदा पाचनम्,
था तु शमन देयम्। एतदभिप्रायेणैव "मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम्" इति सुश्रुतवचनं ज्ञेयम्।
तद्वचनं ज्वरमार्दवादौ दोषपाकलक्षणे सञ्जाते सत्येव भेषज्यस्य देयतां बोध-
तत्र च सप्ताहानन्तरमपि नियमो नास्तीति वाच्यम्। सप्तरात्रात् परं केचि-
ादिवचनैः सप्ताहानन्तरमेव भेषजदानस्य बोधितत्वात् तेन सप्ताहादर्वाक् पाचन
ञ्च न देयमिति स्थितम्, व्याख्यानान्तरन्तु "ज्वरे पेयाः कषायाश्च" इत्यादि
्यानावसर एव व्याख्येयम्। ननु सप्तरात्रादूर्द्ध्वं ज्वरस्य निरामत्वात् किमर्थं तत्र
नं दीयते यदुक्तम् "अष्टाहो निरामज्वरलक्षणम्" इति। सत्यमष्टाहे यदि
निरामत्वं तदा लक्षणमेव न स्यात् सामनिरामसाधारणत्वात्। असाधारण-
हि लक्षण भवति। अत्राहुः द्विविधा हि सामता ; एका दोषस्य तरुणत्व-
तरुणत्वञ्च सप्ताहमात्रम्. तदुक्तं पुष्कलावते "आसप्तरात्र तरुणम्" इत्यादि।
ीया तु रसस्य, मुखवैरस्यहृल्लासारोचकादिरूपा। तत्र प्रथमा अष्टाहादपैति,
हरिश्चन्द्रेण हेतुरप्युक्तः "सप्तानां धातूनां धात्वग्निना सप्ताहेनामपाकात् अष्टाहे-
िराम्यम्" इति। उक्तञ्च "सप्ताहेनैव पच्यन्ते सप्तधातुगता मलाः। निराम-
तः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि" इति। द्वितीया पुनः सप्ताहात् परतोऽपि
चिद्दोषबाहुल्यादग्निमान्द्याच्चानुवर्त्तते। उक्तञ्च "श्लेष्मलानामवान्तानां ज्वरः
कफाधिकः। परिपाकं न सप्ताहे नापि याति मृदूष्मणा" इति। अतस्तत्र
नमुचितमेव। अतएवाह सुश्रुतः "बहुदोषस्य मन्दाग्नेः सप्तरात्रात् परं ज्वरे।
ाम्बुयवागूभिर्यदा दोषो न पच्यते। तदा तं मुखवैरस्यहृल्लासारोचकनाशनैः।
ैः पाचनैः हृद्यैर्ज्वरघ्नैः समुपाचरेत्" इति ॥ ४४ ॥

इदानीं सप्ताहानन्तरमेव यस्यामवस्थायां पाचनं शमनञ्च देयं तदाह सप्ताहा-
दि।—अस्तब्धे सामे इति लालाप्रसेक इत्यादि वक्ष्यमाणस्य रससामतालक्ष-

निरामे शमनं स्तब्धे सामे नौषधमाचरेत् ॥ ४५ ॥

रससामतालक्षणमाह।

लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः।
तन्द्रालस्याविपाकास्यवैरस्यं गुरुगात्रता ॥
क्षुन्नाशो बहुमूत्रत्वं स्तब्धता बलवान् ज्वरः।
आमज्वरस्य लिङ्गानि न दद्यात् तत्र भेषजम् ॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम् ॥ ४६ ॥

आमपाकलक्षणमाह।

मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥ ४७ ॥

---

णस्य निवृत्तौ सत्यां प्रागलब्धभावे मध्यमावस्थावलम्पन्यायेन स्थितस्य कोष्ठावलम्ब भागस्य पाकार्थं पाचनं देयम्। निरामे शमनमिति पाचनेन कोष्ठावलम्बकस्य भागस्य पाकात् सम्यङ्निरामत्वे सतीत्यर्थः। सम्यङ्निरामता च दशरात्रात् परं दोषामता रसामतयोः सर्वथा निवृत्त्या प्रायशो भवतीति। अतएव "दशरात्रात् परं केचिद्ज्ञातव्यमिति निश्चितम्" इति सुश्रुतेनोक्तम्। किं वा यत्र दोषाणामनुद्धत्वात् सप्ताहेनैव रससामतापि निवर्त्तते तत्र सप्ताहानन्तरमपि शमनादि देयं "स्तब्धे सामे नौषधमाचरेत्" इति लालाप्रसेकादिरससामतालक्षणानां सत्त्वादगुरुलघुत्वे सप्ताहानन्तरमपि पाचनं शमनञ्च न देयमित्यर्थः ॥ ४५ ॥

रससामतालक्षणमाह लालाप्रसेक इत्यादि। हृदयाशुद्धिः हृदयगौरवम् दद्यादित्यत्र हेतुमाह भेषजमित्यादि ॥ ४६ ॥

पाकलक्षणमाह मृदावित्यादि। सुश्रुतस्य। मृदौ मन्दीभूते। मान्द्यञ्च स्यामरसस्य पाकात् स्रोतसि शुद्धे पुनः कोष्ठगते चौषधे भवति प्रचलेषु प्रबन्धकस्यामरसस्य व्यपगमात् अविरुद्धेषु मलेषु, वातपित्तकफशकृदादिषु। पक्वं निरामम्। दोषमित्यनेन दुष्टिकारकत्वात् शकृदप्युच्यत इत्यर्थः। देयं तदौषधमिति अन्यदोषे अस्तब्धसामतायां पाचनं, सर्वथा निरामत्वे तु शमनं, शोधनं वा देयम्। एतदनन्तरन्तु अन्यदपि पक्वलक्षणम् एकीयमतेन सुश्रुतेनोक्तं "दोषप्रकृतिवैकृत्यादेकैषा पक्वलक्षणम्" इति ज्वरारम्भकाले यो दोषस्वभावः समा

नागरं देवकाष्ठञ्च धन्याकं बृहतीद्वयम्।
दद्यात् पाचनकं पूर्वं ज्वरिताय ज्वरापहम् ॥ ४८ ॥
सर्वज्वरेषु। पीताम्बुर्लङ्घितः क्षीणोऽजीर्णी भुक्तः पिपासितः।
न पिबेदौषधं जन्तुः संशोधनमथेतरत् ॥ ४९ ॥
वीर्य्याधिकं भवति भेषजमन्नहीनम्
हन्यात् तदामयमसंशयमाशु चैव।
तद्बालवृद्धयुवतीमृदुभिश्च पीतम्
ग्लानिं परां नयति चाशु बलक्षयञ्च ॥ ५० ॥
अनुलोमोऽनिलः स्वास्थ्यं क्षुत् तृष्णा सुमनस्कता।
लघुत्वमिन्द्रियोद्गारशुद्धिर्जीर्णौषधाकृतिः ॥ ५१ ॥
क्लमो दाहोऽङ्गसदनं भ्रमो मूर्च्छा शिरोरुजा।
अरतिर्बलहानिश्च सविशेषौषधाकृतिः ॥ ५२ ॥

रूप तद्यान्यथात्वादल्पत्वादेकेषा मत पक्वलक्षणमिति। अन्ये तु प्रथमा प्रकृति शामरसस्य र्निर्गता ज्वरजननसमयाना स्वकार्यस्य ज्वरतीव्रत्व-देहगुरुत्व मल विबन्धादेकत्पादन तती विपर्यया वेकृत्यम। प्रथमा प्रकृतिरप्याम एव। यदुक्त "प्रथमा दोषदुष्टि न चिदाम प्रचक्षते" इति ॥ ४७ ॥

इदानीं सर्वज्वरसाधनाय पाचनकषायमाह नागरमित्यादि। भल्लक्य। योगो ऽय द्रव्यगुणपर्य्यालोचनया वातकफजे इति भट्ट, साधप्रत्यनीकतया तु पित्तजे हितत्वमस्याभ्युपगम्य सर्वज्वरविषयत्वं ज्ञेयमित्याह सर्वज्वरेष्विति अतएव तन्त्रादि एतत्प्रभृतियोगान्ते पठ्यन्ते "सर्वज्वरेषु पठ्यन्ते यथादोषबल प्रति इति ॥ ४८ ॥

यैर्भेषज न पेय तानाह पीताम्बुरित्यादि। भुक्त इति कर्त्तरि क्त, अथशब्द समुच्चये निपातस्यानेकार्थत्वात्, तेनेतरत् शमनञ्च न पिबेदित्यर्थः ॥ ४९ ॥

परिणामप्रयुक्तभेषजगुणमाह वीर्य्याधिकमित्यादि। भोजनसमयक्रियमाणी-मधापेक्षया वीर्य्येणोत्कृष्टमित्यर्थः। अन्नहीनमिति हेतुगर्भविशेषणं, यतोऽन्नहीन-भेषजमावरकदोषाभावादखिलमेव स्रोत प्रतिपद्यते कोष्ठञ्च सम्यग्भावयति। अन्न हीन इति पाठान्तरं कोष्ठ इति शेष. ॥ ५० ॥

भेषजपाकलक्षणमाह अनुलोमोऽनिलः स्वास्थ्यमित्यादि ॥ ५१ ॥

औषधशेषे भुक्तं पीतञ्च तथौषधं सशेषेऽन्ने ।
न करोति गदोपशमं प्रकोपयत्यन्यरोगांश्च ॥ ५३ ॥
शीघ्रं विपाकमुपयाति बलं न हिंस्यात् ।
अन्नावृतं न च मुहुर्वदनान्निरेति ।
प्राग्भुक्तसेवितमथौषधमेतदेव
दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ॥ ५४ ॥
मात्राया नास्त्यवस्थानं दोषमग्निं बलं वयः ।
व्याधिं द्रव्यञ्च कोष्ठञ्च वीक्ष्य मात्रां प्रयोजयेत् ॥ ५५ ॥
उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ।
जघन्यस्य पलार्द्धेन स्नेहक्वाथ्यौषधेषु च ॥ ५६ ॥
कर्षादौ तु पलं यावद्दद्यात् षोड़शिकं जलम् ।

---

भेषजस्यासम्यक्पाकलक्षणमाह क्लम इत्यादि ॥ ५२ ॥

भेषजाजीर्णे भोजने अन्नाजीर्णेऽपि भेषजोपयोगे दोषमाह औषधशेष इत्यादि । भुक्तं भोजनं एतच्चाभ्यवहारोपलक्षणं तेन लेहपानयोरपि ग्रहणम्, भुक्तमित्यस्य सम्बन्धे न करोति गदोपशममित्यन्तर्भावितो ण्यर्थो ज्ञेयः, यतः प्रस्तुतत्वादौषधमेव गदोपशमकं युक्तम्, तेनायमर्थः, भेषजाजीर्णे भोजनमौषधमेव गदोपशमं न कारयतीत्यर्थः । पीतमित्यत्र; परिमार्जनाभिप्रायेणोक्तम्, तेन लेहादीनामपि ग्रहणम् । सशेषेऽन्ने इत्येव पाठः, अन्यथा च्छन्दोभङ्गः स्यात् ॥ ५३ ॥

भोजनसमयोपयुज्यमानस्याप्यौषधस्य विषयविशेषे गुणमाह शीघ्रमित्यादि । शीघ्रपाकिता बुभुक्षितस्य प्रबलजठरानलसम्बन्धादित्यभिसन्धिः । प्राग्भुक्तसेवितमिति भक्तात् पूर्वमव्यवहितकाले सेवितम् ॥ ५४ ॥

तद्भेषजं किंपरिमाणमित्याह मात्राया इत्यादि । अवस्थानमिति नैयत्यम्, अतएव चरकेणाप्युक्तं "मात्रा खलु व्याधिबलापेक्षिणी" इति ॥ ५५ ॥

तर्हि मन्दबुद्धेरनध्यवसायः स्यात् । इत्यतः क्वाथ्यस्य मानं प्रसङ्गात् स्नेहस्याप्याह उत्तमस्येत्यादि । स्नेहक्वाथ्यौषधेष्विति स्नेहरूपाणि क्वाथ्यरूपाणि चौषधानि तेषु, किंवा औषधं खरमगुड़ादि ॥ ५६ ॥

क्वाथ्यस्य तावत् पलमानं तच्च कियता जलेन क्वथनीयमतस्तन्मानमाह कर्षादा-

ततस्तु कुड़वं यावत् तोयमष्टगुणं भवेत् ॥
क्वाथ्यद्रव्यपले कुर्य्यात् प्रस्थार्द्धं पादशेषितम् ॥ ५७ ॥
द्वात्रिंशन्माषकैर्माषश्चरकस्य तु तैः पलम् ।
अष्टचत्वारिंशता स्यात् सुश्रुतस्य तु माषकः ।
द्वादशभिर्धान्यमाषैश्चतुःषष्ट्यां तु तैः पलम् ॥ ५८ ॥
एतच्च तुलितं पञ्चरक्तिमाषात्मकं पलम् ।

---

वित्यादि । अग्निवेशस्य क्वाथविषयेय परिभाषा, पल यावदित्येकपलम् । षोडशिक जलमिति षोडशकर्षादिरूपम्, अतएव कर्षादमानक्वाथ्यापेक्षया दीयमानस्य षोडशगुणजलस्य वस्तुतो कुडवादिमानत्वेऽपि न द्वैगुण्यम्, जलमानस्यापि कर्षादिरूपतया निर्दिष्टत्वात् । उक्तं हि "रक्तिकादिषु मानेषु यावन्न कुडवो भवेत् । शुष्कद्रवार्द्रयोश्चापि तुल्य मानं प्रकीर्त्तितम" इति । रक्तिकादिष्विति रक्तिरूपतया निर्दिष्टेष्वित्यर्थ । तत इति एकपलादूर्द्ध पलद्वयमारभ्य कुडवपर्य्यन्तमित्यर्थः । अत पल यावदत्यन्तस्यैव वचनस्य पेयक्वाथविषयता, ततस्तु कुडव यावदित्यादि तु सम्पूर्णश्लोकानुरोधादेवोक्तम्, अतएव पल यावदित्यस्य पेयक्वाथविषयत्वं द्रढयन् पादावशिष्टत्वञ्च बोधयन् क्रमात्वेयोक्तवचनमुपन्यस्यति क्वाथ्यद्रव्यपले कुर्य्यादित्यादि । प्रस्थार्द्धमिति द्रवद्वैगुण्यात् षोडश पलानि अतएवोक्तमन्यत्र "क्वाथ्यद्रव्यपले वारि द्विरष्टगुणमिष्यते । चतुर्भागावशिष्टञ्च पेय पलचतुष्टयम्" इति द्विरष्टगुणमिति षोडशगुणमित्यर्थः । एतेन पले क्वाथ्ये दीयमानस्यापि षोडशगुण जलस्य पादावशिष्टताबोधनेन कर्षादौ दीयमानस्य षोडशगुणजलस्य पादावशिष्टता कार्य्येति सूचयति । उक्तञ्चान्यत्र "द्रव्यमापोथित क्वाथ्यं दत्त्वा षोडशिक जलम् । पादावशिष्ट कर्त्तव्यमेष क्वाथविधि. स्मृत " इति ॥ ५७ ॥

इदानी क्वाथ्यस्य पलत्रिकर्षादिकमित्यादि यदुक्तं तत् सर्वमकिञ्चित्कर यतो रक्तिकादिज्ञानाधीनं माषकज्ञान माषकज्ञानाधीनञ्च कर्षपलादिज्ञान तदेव मूल निर्णीतम् अतो माषकादिमानं व्यवस्थापयितुं परिभाषामाह द्वात्रिंशन्माषकैरित्यादि । द्वात्रिंशद्धान्यमाषकैरित्यर्थ. । तेन द्वात्रिंशता व्रीहिमाषै. साधारणमाषक., तैश्च माषकैरष्टचत्वारिंशता चरकमते पल स्यादिति योग्यं, सुश्रुतमते पुनर्व्रीहिमाषैर्द्वादशभिर्माषकं, तैर्माषकैश्चतुःषष्ट्या सुश्रुतमते पलमित्यर्थः ॥ ५८ ॥

इदानीं सुश्रुतचरकमते यावतीभीरक्तिभिर्माषको भवति तदाह एतच्चेत्यादि ।

चरकार्द्धपलोन्मानं चरके दशरक्तिकैः ॥
माषैः पलं चतुःषष्ट्या यद्भवेत् तत् तथेरितम् ॥ ५९ ॥
तस्मात् पलं चतुःषष्ट्या माषकैर्दशरक्तिकैः ।
चरकानुमतं वैद्यैश्चिकित्सासूपयुज्यते ॥ ६० ॥

### वातज्वरचिकित्सा ।

विल्वादिपञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ।
पाचनं पिप्पलीमूल गुडूचीविश्वजोऽथवा ॥ ६१ ॥

एतदिति द्वादशधान्यमाषकृतैश्चतुःषष्ट्या माषकैः सुश्रुतेन यत् पलमुक्तं तत् रक्तिकाभिस्तुलितं सत् पञ्चरक्तिमाषात्मकं भूत्वा चरकार्द्धपलोन्मानं भवतीत्यर्थः। एतदेव विशदयति चरके दशरक्तिकैरित्यादि। यतश्चरके द्वात्रिंशन्माषकलाय कृतैरष्टचत्वारिंशन्माषकैः यत् पलमीरितमुक्तं तद्दशरक्तिकैश्चतुःषष्ट्या माषकैस्तुलितं सत् यथा तावन्मानमेव भवेत्, यतश्चतुर्विंशत्या माषकलायैर्दशरक्तिकास्तुल्या भवन्ति ततश्च दशरक्तिकमानाश्चतुःषष्टिमाषकाश्चतुर्विंशतिमाषकलायैर्गुणिताः सन्तः षट्त्रिंशदधिकपञ्चदशशतमाषकलाया भवन्ति। एवं चरकमतेऽपि द्वात्रिंशन्माषकलायप्रमाणा येऽष्टचत्वारिंशन्माषकास्ते द्वात्रिंशता गुणिताः सन्तः षट्त्रिंशदधिकपञ्चदशशतमाषकलायाः स्युरिति दशरक्तिकमाषकृतपलमानेन सह द्वात्रिंशन्माषकलायप्रमाणमाषकृतपलमानस्य तुल्यता। सुश्रुतमते पुनर्द्वादशमाषकलाया माषकः, ते चतुःषष्टिः पलमित्युक्तम्। ते चतुःषष्टिमाषका द्वादशमाषकलायगुणिताः सन्तोऽष्टषष्ट्यधिकसप्तशतमाषकलाया भवन्तीति चरकोक्तपलमानादर्द्धेन सुश्रुतोक्तपलमानमिति ॥ ५९ ॥

इदानीं चरकसुश्रुतोक्तमानयोर्मध्ये चरकोक्तमानमेव व्यवहारोपयोगिकमित्याह तस्मादित्यादि। यस्माच्चरकोक्तमानमेव वैद्यैश्चिकित्सासूपयुज्यते, तस्माद्दशरक्तिकैश्चतुःषष्ट्या माषकैर्यत् पलं तदेव व्यवहारसिद्धमिति शेषः ॥ ६० ॥

पाचनयोगद्वयमाह विल्वादीत्यादि।—विल्वादिपञ्चमूलं महत् पञ्चमूलम्। अवचारणाप्यनेन क्रियते पिप्पलीमूलेत्यादिकं तु क्वाथविषयमेवेति, क्वाथार्थोक्तपाचनयोगेन गणरूपेणैव अवचारणा क्रियते, न पुनरगणरूपेण, अवचारणायोगेनापि गणरूपेणैव कषायोऽपि क्रियते। तेन धान्यपिप्पल्यादिना कषायविधिरित्याहुः; केचित्तु क्वाथार्थोक्तपाचनयोगेनागणरूपेणापि अवचारणमाहुः ॥ ६१ ॥

किराताब्दामृतोदीच्यबृहतीद्वयगोक्षुरैः।
सस्थिराकलसीविश्वैः क्वाथो वातज्वरापहः॥ ६२॥
रास्ना वृक्षादनी दारु सरलं सैलवालुकम्।
कषायः शर्कराक्षौद्रयुक्तो वातज्वरापहः॥ ६३॥
प्रक्षेपः पादिकः क्वाथ्यात् स्नेहे कल्कसमो मतः॥ ६४॥
परिभाषामिमामन्ये प्रक्षेपेऽप्यूचिरे यथा।
कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः॥
द्रवशुक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः।
मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्॥ ६५॥
बिल्वादि पञ्चमूली च गुडूच्यामलके तथा।

---

किरातेत्यादि।—किरात चिरायितेति ख्यातम्; अब्दो मुस्तकम्, अमृता गुडूची, उदीच्यं बालकम्, स्थिरा शालपर्णी; कलसी पृश्निपर्णी, विश्वः शुण्ठी, विश्वस्थाने बिल्वस्य क्वचित् पाठः। "योगवाहः परं वायु" इति पित्तयुते पाचनोऽयं योज्य इति निश्चलः॥ ६२॥

रास्नेत्यादि।—वृक्षादनी वन्दा; एलवालुकं स्वनामख्यातं, हारीतेऽप्ययं योगः, किन्तु तत्रोत्तरार्द्धमन्यथा पठ्यते, "कोष्णं सगुडसर्पिष्कं पिबेद्वातज्वरापहम्" इति एव चन्द्रटेऽपि। शर्कराक्षौद्रपाठस्तु बहुसंग्रहपुस्तकेष्वेवास्ति अत आर्षेणापि भवितव्यम्। अतः पित्तश्लेष्मयुते तत्प्रक्षेपो बोध्यः। अयं योगो गुडमात्रप्रक्षेपादपि गदनिग्रहे न पठ्यते॥ ६३॥

क्षौद्रशर्करयोर्मानार्थं परिभाषामाह प्रक्षेप इत्यादि।—क्वाथ्यात् क्वथनीयद्रव्यात् रास्नादेः उत्तमपक्षापेक्षया पलात् पादिकः कर्ष इत्यर्थः। स्नेहे कल्कसमो मत इति "कल्कस्तु स्नेहपादिकः" इत्युक्तेः कल्कसमः पादिक इत्यर्थः। इमामिति वक्ष्यमाणाम्। कर्ष इत्यादावपि क्षौद्रादीनां मात्रा चूर्णवदित्यतिदेशेन कर्ष एवार्थः। अत एकार्थत्वादनुमतैव। एवं "सितोपलामधुगुडक्षारसामान्यांशप्रकल्पना" इति वचनस्यापि "प्रक्षेपः पादिकः क्वाथ्यात्" इति वचनेन सहैकवाक्यता ज्ञेया। तथा हि सितोपलादिकमत्रोपलक्षणं तेन मध्वादिकमपि ज्ञेयम्; सामान्यमुत्सर्गसिद्धं पलविकर्षार्द्धपलरूपं यत् क्वाथ्यद्रव्यमानं तस्यांशेन चतुर्भागरूपेण प्रकल्पना येषां ते तथा। तेनापि क्वाथ्यात् पादिक एव प्रक्षेपो ज्ञेयः। समानैषा प्रकल्पनेति

कुस्तुम्बुरुसमो ह्येष कषायो वातिके ज्वरे ॥ ६६ ॥
पिप्पलीशारिवाद्राक्षाशतपुष्याहरेणुभिः।
कृतः कषायः सगुड़ो हन्याच्छ्वसनजं ज्वरम् ॥ ६७ ॥
गुडूची शारिवा द्राक्षा शतपुष्पा पुनर्नवा।
सगुड़ोऽयं कषायः स्याद्वातज्वरविनाशनः ॥ ६८ ॥
द्राक्षागुडूचीकाश्मर्य्यत्रायमाणाः सशारिवाः।
निष्क्वाथ्य सगुड़ं क्वाथं पिबेद्वातज्वरापहम् ॥ ६९ ॥

---

पाटपक्षेऽपि समाना चूर्णसमाना कर्ष इत्यर्थः। तेन "मात्रा चौद्रघृतादीनां सं ह-क्वाथेषु चूर्णवत्" इत्यनेन सहैकवाक्यता। यत्र क्वाथप्रधानता तत्र प्रक्षेपः पादिक इत्यादि परिभाषा एवं यत्र चूर्णापेक्षी द्रवः तत्र कर्षचूर्णस्य कल्कस्येति परिभाषा। द्रवशुक्त्या स लेढव्य इति. स लेढव्यश्चेत् तदा द्रवशुक्त्या द्रवार्द्धपलेन इत्यर्थः। पातव्यश्चेत् तदा चतुर्द्रवः चतुर्गुणद्रवः इत्येवंरूपव्यवहारन्तु पञ्चषण्माषकेणेति ॥ ६४ ॥ ६५ ॥

विल्वादीत्यादि।—कुस्तुम्बुरु धनीयकम्। सम इति समभागकृतः कषाय इत्यर्थः, एतेन "भागोऽप्यनुक्ते समता विधेया" इति परिभाषार्थः सूचितः। किंवा शमं तापव्यादिः तेन नायं पाचनयोगः किं तर्हि शमन इत्यर्थः। चन्द्राटेऽपि शमनाधिकारेऽयं योगः पठितः। अत्र शमनलक्षणं यथा "न शोधयति यद्दोषान् समान् नोदीरयत्यपि। समीकरोति च क्रुद्धांस्तत् संशमनमुच्यते" इति न शोधयति यद्दोषानिति दुष्टान् दोषान् न देहान्निःसारयति, एतेन शोधनं व्यवच्छिनत्ति। समान् नोदीरयत्यपीति अदुष्टानतिवृद्धा न विमार्गगान् करोति अनेन पाचनं व्यवच्छिनत्ति, पाचनं हि दोषान् विमार्गीकुर्वन् पचति यथा अग्निः स्थाल्यां जलतण्डुलादीन् विमार्गीकुर्वन्नेव पचति, न कोपयतीति क्वचित् पाठः, स च न सङ्गतः, नोदीरयतीत्यनेन पौनरुक्त्यात् शोधनव्यवच्छेदाय पदान्तरं मृग्यम् ॥ ६६ ॥

पिप्पलीत्यादि।—सुश्रुतस्य। यत्र शारिवैका पठ्यते तत्रानन्तमूलमेव, एवमन्यत्रापि ज्ञेयम्। श्वसनजमिति वातजम्। पिप्पलीशारिवेत्यादिकमारभ्य वातज्वरेऽयं वाच्यास्ते शमनयोगा एव [illegible]ाः यस्मात् सुश्रुते "अतः संशमनीयानि कषायाणि निबोध मे" इत्यभिधाय एते योगा उक्ताः ॥ ६७ ॥

गुडूचीत्यादि।—तन्त्रान्तरे गुडूचीस्थाने पिप्पली पठ्यते ॥ ६८ ॥

द्राक्षेत्यादि।—सुश्रुतस्य। काश्मर्य्यं गाम्भारीफलम् ॥ ६९ ॥

शतावरीगुडूचीभ्यां स्वरसो यन्त्रपीड़ितः ।
गुड़प्रगाढ़ः शमयेत् सद्योऽनिलकृतं ज्वरम् ॥ ७० ॥

## पित्तज्वरचिकित्सा ।

कलिङ्गं कट्फलं मुस्तं पाठा तिक्तकरोहिणी ।
पक्कं सशर्करं पीतं पाचनं पैत्तिके ज्वरे ॥ ७१ ॥
सक्षौद्रं पाचनं पैत्ते तिक्ताब्देन्द्रयवैः कृतम् ॥ ७२ ॥
लोध्रोत्पलामृतापद्मशारिवाणां सशर्करः ।
क्काथः पित्तज्वरं हन्यादथवा पर्पटोद्भवः ॥ ७३ ॥
पटोलयवनिष्क्काथो मधुना मधुरीकृतः ।
तीव्रपित्तज्वरामर्द्दी पानात् तृड्दाहनाशनः ॥ ७४ ॥
दुरालभापर्पटकप्रियङ्गुभूनिम्बवासाकटुरोहिणीनाम् ।
जलं पिबेच्छर्करयावगाढ़ं तृष्णास्रपित्तज्वरदाहयुक्तः ॥७५॥
त्रायमाणा च मधुकं पिप्पलीमूलमेव च ।
किराततिक्तकं मुस्तं मधूकं सविभीतकम् ।
सशर्करं पीतमेतत् पित्तज्वरविनाशनम् ॥ ७६ ॥

---

शतावरीत्यादि ।—अनयोः स्वरस सम एव ग्राह्य ॥ ७० ॥

पैत्तिकज्वरे पाचनयोगमाह कलिङ्गमित्यादि ।—कलिङ्गम् इन्द्रयवः । पाठा
कनथी सक्षौद्रमित्यादौ तिक्ता कटुकी ॥ ७१ ॥ ७२ ॥

लोध्रोत्पलेत्यादि ।—उत्पल नीलोत्पलम् , पद्म च पद्मपुष्पम् । "गुडूचीशारि-
लोध्रकमलोत्पलशर्करा." इत्यायुर्वेदसारदर्शनात् । एक एवायं योग. सुश्रुते तु
गद्वयं पठ्यते "गुडूचीपद्मलोध्राणां शारिवोत्पलयोस्तथा । शर्करामधुर. क्काथः
त पित्तज्वरापह.", इति । किवा एतद्वचनसवादात् सुश्रुतेऽप्येकयोगो व्याख्येय ।
टोद्भव इत्यत्रापि सशर्कर इति योज्यम् ॥ ७३ ॥

पटोलेत्यादि स्पष्टम् ॥ ७४ ॥

दुरालभेत्यादि ।—शर्कराव प्रक्षेपविधिनैव ; अन्ये त्ववगाढमिति वचनात्
द्यापुर्थ्याधिका शर्करा देयेत्याहु: ॥ ७५ ॥

मृद्वीका मधुकं निम्बं कटुका रोहिणी समा ।
अवश्यायस्थितं पाक्यमेतत् पित्तज्वरापहम् ॥ ७७ ॥
एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः ।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥ ७८ ॥
विश्वाम्बुपर्पटोशीरघनचन्दनसाधितम् ।
दद्यात् सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥
पर्पटामृतधात्रीणां क्वाथः पित्तज्वरापहः ॥ ७९ ॥
द्राक्षारग्वधयोश्चापि काश्मर्य्यस्याथवा पुनः ॥ ८० ॥
द्राक्षाभयापर्पटकाब्दतिक्ताक्वाथं सशम्पाकफलं विदध्यात् ।
प्रलापमूर्च्छाभ्रमदाहशोषतृष्णान्विते पित्तभवे ज्वरे तु ॥ ८१ ॥

---

त्रायमाणेत्यादि ।—त्रायमाणा बलीयालता इति, मधुक यष्टिमधु ; मधूक मधूकपुष्पं पित्तहन्तृत्वात् ॥ ७६ ॥

मृद्वीकेत्यादि ।—मृद्वीका द्राक्षा ; कटुका रोहिणी कटुरोहिणी ; अवश्याय स्थित शिशिरस्थितम्, न तु शीतकषायमत आह पाक्यमिति । एतेन पाकं कृत्वा शिशिरे स्थापयेत्, न तु "द्रव्यादापोत्थितात् तोये" इत्यादि शीतकषायविधिना ॥७७॥

एक इत्यादि । चन्दनं रक्तचन्दनम् ; नागरं कटुकमपि न पित्ते विरुध्य मधुरपाकित्वात् ॥ ७८ ॥

विश्वेत्यादि ।—अम्बु बालकम्, घनं मुस्तम् । पर्पटेत्यादि ।—अमृता गडू छान्दसत्वात् ह्रस्वः ॥ ७९ ॥

द्राक्षेत्यादि ।—सुश्रुतस्य । आरग्वधः शोनालुः ; अस्य च चरके फलिनी सुश्रुते पत्रवर्गे पाठात् अन्तःपरिमार्जने फलम्, बहिःपरिमार्जने कुष्ठादौ प ज्ञेयम्, तन्मात्र फलमेव , एवं काश्मर्य्या अपि फलमेव । अत्र द्राक्षारग्वधयोश्चापि त्येको योगः । काश्मर्य्यस्याथवेति द्वितीयः । 'इदञ्च योगद्वयं "गुडूचीपद्मलीभा शारिवोत्पलयोस्तथा । शर्करामधुरः क्वाथः शीतः पित्तज्वरापहः" इत्यस्यानन्त सुश्रुते पठ्यते, तेनात्र योगद्वये शर्करामधुरः क्वाथः इत्यनुवर्त्त्य टीकाकारैः शर्क प्रक्षेपो विधेय इति व्याख्यातम् ॥ ८० ॥

द्राक्षेत्यादि ।—ख्यातमसितप्रभास्य शम्पाकः शोनालुः तस्य मज्जाभागः

व्युषितं धन्याकजलं प्रातः पीतं सशर्करं पुंसाम्।
अन्तर्दाहं शमयत्यचिराद् दूरप्ररूढ़मपि ॥ ८२ ॥
पित्तज्वरेण तप्तस्य क्रियां शीतां समाचरेत् ॥ ८३ ॥
विदारी दाड़िमं लोध्रं दधित्थं वीजपूरकम्।
एभिः प्रदिह्यान्मूर्द्धानं तृड्दाहार्त्तस्य देहिनः ॥ ८४ ॥
घृतभृष्टाम्लपिष्टा च धात्रीलेपाच्च दाहनुत्।
अम्लपिष्टैः सुशीतैर्वा पलाशतरुजैर्दिहेत् ॥
वदरीपल्लवोत्थेन फेणेनारिष्टकस्य वा ॥ ८५ ॥
कालेयचन्दनानन्तायष्टीवदरकाञ्जिकैः।

---

ति केचित्, अयं पक्षः प्रचारी। अन्ये तु तत्फलैः सह मिलित्वा क्वाथ त्याहुः ॥ ८१ ॥

व्युषितमित्यादि।—धन्याक्वाथ एव व्युषितः कार्य्यः इति कश्चित्, अन्ये तु "द्रव्या- पोत्थितात् तोये प्रतप्ते निशि संस्थितात्। कषायो योऽभिनिर्याति स शीतः मुदाहृतः। षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः। आप्लुत भेषजपलं साख्यायां पलद्वयम्" इति शास्त्रयुक्त्या शीतकषायमित्याहुः। वृद्धवैद्यास्तु भेषजार्द्ध- लं जलपलद्वयेन शीतकषाय कुर्व्वन्ति ॥ ८२ ॥

पित्तज्वरेण तप्तस्येत्यादि। तप्तस्येत्यनेन वक्ष्यमाणा प्रदेहाद्या शीतलक्रिया जीर्ण- वर एव कर्त्तव्येति बोधयति। अत एवोक्तं सुश्रुते "परिषेकान् प्रदेहांश्च स्नेहान् शोधनानि च। स्नानाभ्यङ्गदिवास्वप्नशीतव्यायामयोषितः। कषायगुरुभक्ष्याणि धादीनि तथैव च। सारवन्ति च भोज्यानि वर्जयेत् तरुणज्वरी" ॥ ८३ ॥

विदारीत्यादौ।—दधित्थं कपित्थफलम्; दाडिमस्यापि फलं वीजपूरकस्य केश- र् ॥ ८४ ॥

घृतेत्यादि।—धात्री आमलकी, आर्द्रा अम्लकाञ्जिकपिष्टा पश्चान्मनाग्घृत- ष्टेत्यर्थः। अम्लपिष्टैरित्यादि अम्लं काञ्जिकम्; पलाशतरुजैश्च पलाशनवपल्लवैः हेत् लिम्पेत् 'वदरीपल्लवोत्थेनेत्यादि।—अत्रापि वदरीपल्लवं काञ्जिकेन पिष्ट्वा पुरकाञ्जिकेन गोलयित्वा मन्थामदण्डेन प्रमथ्य फेनग्रहणं कर्त्तव्यम्। एवं निम्ब- प्रस्येत्याहुः ॥ ८५ ॥

सघृतैः स्याच्छिरोलेपस्तृष्णादाहार्त्तिशान्तये ॥ ८६ ॥
उत्तानसुप्तस्य गभीरताम्रकांस्यादिपात्रं प्रणिधाय नाभौ ।
तत्राम्बुधारा बहुला पतन्ती निहन्ति दाहं त्वरितं सुशीता ॥८७
पीतकाञ्जिकवस्त्रावगुण्ठनं दाहनाशनम् ॥ ८८ ॥
जिह्वातालुगलक्लोमशोषे मूर्ध्नि तु दापयेत् ।
केशरं मातुलुङ्गस्य मधुसैन्धवसंयुतम् ॥ ८९ ॥
मातुलुङ्गशिफाविश्वब्राह्मीग्रन्थिकसम्भवम् ।
कफज्वरेऽम्बु सक्षारं पाचनं वा कणादिकम् ॥ ९० ॥
पिप्पली पिप्पलीमूलचव्यचित्रकनागरम् ।
मरिचैलाजमोदेन्द्रपाठारेणुकजीरकम् ॥
भार्गी महानिम्बफलं हिङ्गु रोहिणिसर्षपम् ।
विड़ङ्गातिविषे मूर्वा चेत्ययं कीर्त्तितो गणः ॥

---

कालेयेत्यादि ।—कालेयं कालेयकाष्ठम्, अनन्ता अनन्तमूलम्, वदरं वदरफलम् । सघृतैरिति घृतमत्र शतधौत प्रयच्छन्ति वृद्धाः ॥ ८६ ॥

उत्तानेत्यादि ।—सर्वत्रैव कफसम्बन्धं विना यथा गात्रे अम्बुकणा न पतन्ति तथा कार्य्यम् ॥ ८७ ॥

पीतेत्यादि ।—परन्तु सम्यगालोड्यित्वा क्रियते ॥ ८८ ॥

जिह्वेत्यादि ।—सुश्रुतस्य । लेपोऽयम्, क्लोम पिपासास्थानम्; मूर्ध्नि शिरस्तालुमध्ये ॥ ८९ ॥

मातुलुङ्गेत्यादि ।—शिफा मूलम्; ब्राह्मी ब्राह्मीशाकम्, ग्रन्थिकं पिप्पलीमूलम्; सक्षारमिति मातुलुङ्गशिफाविशेषणमेव, न तु कणादिकमित्यस्य, यतस्तन्त्रान्तरे पिप्पल्यादिकन्तु पाचनं कफजे ज्वरे इत्युक्तम् । न तु यवक्षारप्रक्षेप इति ॥ ९० ॥

कणादिकमिति सुश्रुतोक्तपिप्पल्यादिगणः अतस्तमेव गणं निर्दिशति । पिप्पलीत्यादि ॥ ९१ ॥

कटुकमित्यादि ।—तन्त्रान्तरस्य । सुश्रुते "हरिद्रा चित्रकं निम्बमुशीरातिविषे वचा" इति दर्शनात् कटुकस्थाने उशीरमिति निश्चलः पठति । कटुकेत्यादि ।—वचान्त एको योगः, कुष्ठादिपटोलान्तो द्वितीयः अतएव द्वन्द्वे पूर्वार्द्धे परि

पिप्पल्यादिः कफहरः प्रतिश्यारोचकज्वरान्।
निहन्याद्दीपनो गुल्मशूलघ्नश्चामपाचनः ॥ ९१ ॥
कटुकं चित्रकं निम्बं हरिद्रातिविषे वचा।
कुष्ठमिन्द्रयवं मूर्वां पटोलञ्चापि साधितम् ॥
पिबन्मरिचसंयुक्तं सक्षौद्रं श्लैष्मिके ज्वरे ॥ ९२ ॥
निम्बविश्वामृतादारु शटी भूनिम्बपौष्करम्।
पिप्पल्यौ बृहती चेति क्वाथो हन्ति कफज्वरम् ॥ ९३ ॥
सिन्धुवारदलक्वाथः सोषणः कफजे ज्वरे।
जङ्घयोश्च बले क्षीणे कर्णे वा पिहिते पिबेत् ॥ ९४ ॥
आमलक्यभया कृष्णा चित्रकश्चेत्ययं गणः।
सर्वज्वरकफातङ्कभेदी दीपनपाचनः ॥ ९५ ॥
त्रिफला पटोलवासाच्छिन्नरुहातिक्तरोहिणीषड्ग्रन्थाः।
मधुना श्लेष्मसमुत्थे दशमूली वासकस्य वा क्वाथः ॥ ९६ ॥
मुस्तं वत्सकबीजानि त्रिफला कटुरोहिणी।

---

कटुकमित्यादि द्वितीयार्द्धमेव पठ्यते। डल्लणस्तु एकयोगत एव सुश्रुतटीकायां व्याख्यातवान्। पटोलमिति पटोलपत्रम्, "पटोलादेश्छदस्तथा" इति वचनात्। साधितमित्यनन्तरं कषायमिति शेषः। मरिचमल्पं मधु तु प्रचुरं प्रक्षेप्यं तीक्ष्णवीर्यत्वादिति चक्रः ॥ ९२ ॥

निम्बेत्यादि।—पौष्करमूलम्, तदभावे कुष्ठम्, एवं सर्वत्र। बृहती कण्ट- ॥ ९३ ॥

सिन्धुवारेत्यादि।—आयुर्वेदसारस्य। सोषण इति सपिप्पलीकः, अतएव कणाढ्य पठ्यते, अन्ये तु ऊषणशब्देन मरिचं व्याख्यानयन्ति व्यवहरन्ति च ॥ ९४ ॥

आमलकीत्यादि स्पष्टम् ॥ ९५ ॥

त्रिफलेत्यादि।—छिन्नरुहा गुडूची। तिक्तरोहिणी कटुरोहिणी; षड्ग्रन्था …। अयं योगो दशमूलीवासकक्वाथसाहचर्यात् क्वाथ एव, दशमूलीवासकाभ्याम् ताभ्यां क्वाथः। अत्रापि मधु प्रक्षिपन्ति ॥ ९६ ॥

पटूषकाख्वि च क्काथः कफज्वरविनाशनः॥ ९७॥

चातुर्भद्रावलेहिका—

कट्फलं पौष्करं शृङ्गी कृष्णा च मधुना सह।
कासश्वासज्वरहरः श्रेष्ठो लेहः कफान्तकृत्॥ ९८॥
कर्षश्चूर्णस्य कल्कस्य गुडिकानाञ्च सर्वशः।
द्रव्यशक्त्या स लेढव्यः पातव्यश्च चतुर्द्रवः॥ ९९॥
ऊर्द्ध्वजत्रुगरोगघ्नी सायं स्यादवलेहिका।
अधोरोगहरी या तु सा पूर्वं भोजनान्मता॥ १००॥
क्षौद्रोपकुल्यासंयोगः कासश्वासज्वरापहः।
प्लीहानं हन्ति हिक्काञ्च बालानाञ्च प्रशस्यते॥ १०१॥
संसृष्टदोषेषु हितं संसृष्टमथ पाचनम्॥ १०२॥

नवाङ्गः—विश्वामृताब्दभूनिम्बैः पञ्चमूलीसमन्वितैः।
कृतः कषायो हन्त्याशु वातपित्तोद्भवं ज्वरम्॥ १०३॥
त्रिफलाशाल्मलीरास्नाराजवृक्षाटरूषकैः।
शृतमम्बु हरेत् तूर्णं वातपित्तोद्भवं ज्वरम्॥ १०४॥

---

मुस्तमित्यादि।—सुगमम्। वत्सक कुटजः॥ ९७॥

कट्फलमित्यादि।—कट्फल स्वनामख्यातम्, शृङ्गी कर्कटशृङ्गी॥ ९८॥

कर्ष इत्यादि—परिभाषा व्याख्याता पूर्वमेव, किन्तु इद कषमानम् उत्तमपुरु-
मपेक्ष्य कथितम्, तेन मध्यजघन्यापेक्षया कर्षमानादपकर्षो ज्ञेयः। व्यवहार-
हितैश्चूर्णमाषकैरिति॥ ९९॥

अस्योपयोगार्थं समयमाह ऊर्द्ध्वेत्यादि॥ १००॥

क्षौद्रोपकुल्येत्यादौ उपकुल्या पिप्पली॥ १०१॥

द्वन्द्वजाना चिकित्सामाह संसृष्टमित्यादि।—संसृष्टं मिलितं वातज्वरादि-
॥ १०२॥

विश्वामृतेत्यादि।—अमृता गुडूची, पञ्चमूली स्वल्पा पञ्चमूली॥ १०३॥

त्रिफलेत्यादि।—शाल्मलीवृक्षस्य मूलम्। राजवृक्षस्य शोणालुवृक्षस्य फल-
मन्तःपरिमार्जनत्वादिति प्रागेवोक्तम्; अटरूषको वासकः॥ १०४॥

किराततिक्तममृताद्राक्षामामलकीशटीम् ।
निष्क्वाथ्य पित्तानिलजे क्वाथं तं सगुड़ं पिबेत् ॥ १०५ ॥
निदिग्धिकाबलारास्नात्रायमाणामृतायुतैः ।
मसूरविदलैः क्वाथो वातपित्तज्वरं जयेत् ॥ १०६ ॥
पञ्चभद्रम् । गुड़ूची पर्पटं मुस्तं किरातं विश्वभेषजम् ।
वातपित्तज्वरे देयं पञ्चभद्रमिदं शुभम् ॥ १०७ ॥
मधुकं शारिवे द्राक्षा मधुकं चन्दनोत्पलम् ।
काश्मरी पद्मकं लोध्रं त्रिफलां पद्मकेशरम् ॥
परूषकं मृणालञ्च न्यसेदुत्तमवारिणि ।
मधुलाजसितायुक्तं तत् पीतमूषितं निशि ॥
वातपित्तज्वरं दाहतृष्णामूर्च्छावमिभ्रमान् ।
शमयेद्रक्तपित्तञ्च जीमूतानिव मारुतः ॥ १०८ ॥

अथ पित्तश्लेष्मज्वरचिकित्सामाह ।

पटोलादिः—पटोलं चन्दनं मूर्वा तिक्ता पाठामृतागणः ।

---

किराततिक्तमित्यादि ।—सुगमं तस्य । अमृता गुडूची ॥ १०५ ॥

निदिग्धिकेत्यादि ।—निदिग्धिका कण्टकारी । मसूरविदलैरिति व्रीहिमसूर-विदलैरिति वकुलः । अन्ये तु मसूरविदला श्यामलतामाहुः, यद्यप्यस्याः पर्य्याये मसूरविदला पठ्यते, तथापि लिङ्गमशिष्टं लोकाश्रयत्वात् इति लिङ्गे अनादरः । अस्याश्च द्रव्यगुणे ज्वरहन्तृत्वमस्ति, व्यवहारस्तु क्वचिदनया क्वचिद्व्रीहिमसूरेणेति ॥ १०६ ॥

पञ्चभद्रस्य पित्तकफहन्तृत्वमपि बोध्यम् ; यदाह हारीतः, "किरातं पर्पटं मुस्तं गुडूची विश्वभेषजम् । पित्तश्लेष्मज्वरे कुर्य्यात् पाचनं ज्वरनाशनम्" इति ॥१०७॥

मधुकमित्यादि ।—हे शारिवे श्यामलतानन्तमूले ; मधूकं मधूकपुष्पम्, उत्पलं नीलोत्पलम् ; काश्मरी गाम्भारी, अस्याः फलं ग्राह्यमुपदेशात् । पद्मस्य केशरं किञ्जल्कः ; मृणालमुशीरम् ; उत्तमवारिणि तण्डुलोदके । एतत् सर्वं शीतकषायविधिना गृहीत्वा पेयम् ॥ १०८ ॥

पित्तश्लेष्मारुचिच्छर्दिज्वरकण्डूविषापहः॥ १०९॥

गुडूच्यादिः—गुडूची निम्बधन्याकं पद्मकं चन्दनानि च।

एष सर्वज्वरान् हन्ति गुडूच्यादिस्तु दीपनः॥

हृल्लासारोचकच्छर्दिपिपासादाहनाशनः॥ ११०॥

चातुर्भद्रकपाठासप्तकौ—

किरातं नागरं मुस्तं गुडूचीञ्च कफाधिके।

पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्॥ १११॥

कण्टकार्य्यादिः—कण्टकार्य्यमृताभार्गी-नागरेन्द्रयवासकम्।

भूनिम्बं चन्दनं मुस्तं पटोलं कटुरोहिणी॥

कषायं पाययेदेतत् पित्तश्लेष्मज्वरापहम्।

दाहतृष्णारुचिच्छर्दिकासहृत्पार्श्वशूलनुत्॥ ११२॥

सप्तच्छदपुष्पवासाद्यो रसः क्षौद्रसितायुतः।

कफपित्तज्वरं हन्ति सासृक्पित्तं सकामलम्॥ ११३॥

पटोलं पिचुमर्दश्च त्रिफला मधुकं वला।

---

पित्तकफज्वरचिकित्सामाह पटोलमित्यादि।—सुगमस्य। गणोक्तत्वात् क्वाथकल्कादिकल्पनास्य बोध्या॥ १०९॥

गुडूच्यादि।—पद्मकं पद्मकाष्ठम्। यत्र पद्ममित्यस्ति तत्र प्रायः पद्मकेशरमेव गृह्यते। अत्र अत्यन्तदाहपिपासायां वृद्धाः शीतीकृत्य मधु प्रक्षिपन्ति। [तच्च बहुधा दृष्टफलम्॥ ११०॥

किरातमित्यादि।—"पाठोदीच्यमृणालैस्तु सह पित्ताधिके पिबेत्" इति किरातादिभिः सह मिलित्वा पिबेत्; अत पाठासप्तकत्वम्। मृणालमुशीरम्। पित्ताधिक इत्यत्र कफ इति शेषः। जतुकर्णेऽप्युक्तं "भूनिम्ब घन गुडूची-शुण्ठ्यब्द वासक-भार्ग्यभयापाठा" इति॥ १११॥

कण्टकार्य्यादि।—भार्गी वामनहाटी; इन्द्र इन्द्रयवः; यवासकं दुरालभा। एष योगः पित्तोत्तरे कफे इति केचित्॥ ११२॥

सप्तच्छेत्यादि।—रसः स्वरसः तस्य गुरुत्वात् अर्द्धपलं प्रायेणोपयुज्यते। सिता-

साधितोऽयं कषायः स्यात् पित्तश्लेष्मोद्भवे ज्वरे ॥ ११४ ॥

अमृताष्टकः—गुडूचीन्द्रयवारिष्टपटोलं कटुरोहिणी।
नागरं चन्दनं मुस्तं पिप्पलीचूर्णसंयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापहः।
हृल्लासारोचकच्छर्दितृष्णादाहनिवारणः ॥ ११५ ॥
पटोलयवधन्याकं मधुकामलकचन्दनम्।
पैत्तिके श्लेष्मपित्तोत्थे ज्वरे तृट्छर्दिदाहनुत् ॥ ११६ ॥

पञ्चतिक्तम्।

क्षुद्रामृताभ्यां सह नागरेण सपौष्करश्चैव किराततिक्तम्।
पिबेत् कषायन्त्विह पञ्चतिक्तं ज्वरं निहन्त्यष्टविधं समग्रम् ॥११७॥
सशर्करामक्षमात्रां कटुकामुष्णवारिणा।
पीत्वा ज्वरं जयेज्जन्तुः कफपित्तसमुद्भवम् ॥ ११८ ॥
दीपनं कफविच्छेदि वातपित्तानुलोमनम्।

---

मधुनीन्तु प्रत्येकं चतुर्माषकयोरेव प्रक्षेप इति। पटोलमित्यादौ पिचुमर्दो निम्बः ॥ ११३ ॥

पटोलेत्यादि।—स्पष्टम् ॥ ११४ ॥

अमृताष्टके अरिष्टो-निम्ब. ॥ ११५ ॥

पटोलेत्यादि।—स्पष्टम् ॥ ११६ ॥

क्षुद्रेत्यादि।—क्षुद्रा कण्टकारी, नागरस्य कुटुत्वेऽपि छत्रिणो गच्छन्तीति न्यायात् पञ्चतिक्तकसंज्ञा ॥ ११७ ॥

सशर्करामित्यादि।—सुश्रुतस्य। कल्पकल्पनेयम्। शर्कराकटुरोहिण्यौ: मिलित्वा समभागेन कर्षः। वैद्यप्रसारकेऽपि समभाग एवोक्तः। चक्रस्तु शर्कराया उपसर्जनत्वात् कटुकायाश्च प्राधान्यात् कटुकाया द्वादश माषकाः सितायाश्चत्वार इति तन्न, आयुर्वेदसारे "सिता कटुकया युक्ता पीत्वा चोष्णेन वारिणा। जीर्णज्वरं जयेच्छीघ्रं कफपित्तकृतं ज्वरम्" इत्यत्र सितायाः एव प्राधान्येन निर्देशात्, तस्मात् "भागेऽप्यनुक्ते समता विधेया" इति वचनात् समभागतैव युक्ता ॥ ११८ ॥

ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयोः ॥ ११९ ॥

वातश्लेष्मज्वरचिकित्सामाह ।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्मितान् ।
स्रोतसां मार्दवं कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भं स्वेदे ज्वरमपोहति ॥ १२० ॥
खर्परभृष्टपटस्थितकाञ्जिकसिक्तो हि वालुकास्वेदः ।
शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन् ॥ १२१ ॥
मुस्तनागरभूनिम्बं त्रयमेतत् त्रिकार्षिकम् ।
कफवातामशमनं पाचनं ज्वरनाशनम् ॥ १२२ ॥
पञ्चकोलः—पिप्पलीपिप्पलीमूलचव्यचित्रकनागरम् ।
दीपनीयः स्मृतो वर्गः कफानिलगदापहः ॥ १२३ ॥
पिप्पलीभिः शृतं तोयमनभिष्यन्दि दीपनम् ।
वातश्लेष्मविकारघ्नं प्लीहज्वरविनाशनम् ॥ १२४ ॥

---

दीपनमित्यादि ।—अत्र धन्याकस्य दश माषकाः पटोलस्य तु षण्माषका इति केचित, तन्न, समभागबाधकाभावात् । शृतं क्वाथः, व्यवहारस्तु व्यञ्जनेनैव ॥११९॥

वातकफज्वरचिकित्सामाह ।कफवातेत्यादि ।—रूक्षनिर्मितेत्यादि रूक्षनिर्मितानिति करीषबुषपाषाणबाष्पनिर्मितान् । यद्यपि वातश्लेष्मणि स्निग्ध रूक्ष एव स्वेदो युक्तः, यदुक्तं "स्वेदोऽनिले स्निग्धरूक्षौ वातश्लेष्मणि शस्यते" इति तथापि आमाशयगतस्यैव दोषस्य ज्वरारम्भकत्वात् वातेऽपि रूक्ष एव स्वेद उक्तः । उक्तं हि "आमाशयगते वाते रूक्षपूर्वः प्रशस्यते" ॥ १२० ॥

तमेव रूक्षस्वेदमाह खर्पर इत्यादि ।—स्विद्यते अनेनेति स्वेदः, वालुका एव स्वेदः वालुकास्वेदः, तेन खर्परभृष्टेत्यादि विशेषणं सङ्गच्छते । वालुकाप्रकर इत्यपि पाठः ॥ १२१ ॥

मुस्तेत्यादि ।—प्रत्येकं कर्षः ॥ १२२ ॥

पिप्पलीत्यादि ।—योगोऽत्रचारणया क्वाथेनापि क्रियते ; प्रत्येकं कोलप्रमाणयोगादस्य पञ्चकोल इति संज्ञा ज्ञेया ॥ १२३ ॥

पिप्पलीभिः शृतमित्यादि ।—पिप्पल्यास्तीक्ष्णवीर्यत्वात् क्वाथ्यान्तरवत् अस्य अर्द्ध-

आरग्वधग्रन्थिकमुस्ततिक्ताहरीतकीभिः क्वथितः कषायः।
आमे सशूले कफवातयुक्ते ज्वरे हितो दीपनपाचनश्च ॥ १२५ ॥

क्षुद्रादिः वा कण्टकार्य्यादिः।

क्षुद्रामृतानागरपुष्कराह्वयैः कृतः कषायः कफमारुतोद्भवे।
सश्वासकासारुचिपार्श्वरुक्करे ज्वरे त्रिदोषप्रभवे च शस्यते ॥१२६

दशमूलीरसः पेयः कणायुक्तः कफानिले।
अविपाकेऽतिनिद्रायां पार्श्वरुक्श्वासकासके ॥ १२७ ॥
मुस्तं पर्पटकः शुण्ठी गुडूची सदुरालभा।
कफवातारुचिच्छर्दिदाहशोषज्वरापहः ॥ १२८ ॥
दारुपर्पटभार्ग्यब्दवचाधान्यककट्फलैः।
साभयाविश्वपूतीकैः क्वाथो हिङ्गु मधूत्कटः ॥
कफवातज्वरे पीतो हिक्काश्वासगलग्रहान्।
कासश्वासप्रसेकांश्च हन्यात् तरुमिवाशनिः ॥
मात्रा क्षौद्रघृतादीनां स्नेहक्वाथेषु चूर्णवत्।

---

पलादिमानेन क्वाथो न युज्यते ; तेन कर्षमेकमल्पं वा गृहीत्वा कषायः कार्य्यः। प्रबले श्लेष्मणि वाते च योज्यः। वृद्धास्तु क्वाथेन व्यवहरन्ति, अष्टमाषकं गृहीत्वा षड़ङ्गवदर्द्धशृतमामावस्थायामपि कुर्वन्ति ॥ १२४ ॥

आरग्वधेत्यादि।—आरग्वधः शोणालुफलम्, ग्रन्थिक पिप्पलीमूलम्, तिक्ता कटुकी, दीपनपाचनश्चेत्यत्र, "दीपनभेदनोऽसौ" इत्यपि पाठः ॥ १२५ ॥

क्षुद्रेत्यादि।—क्षुद्रा कण्टकारी ॥ १२६ ॥

दशमूलीत्यादि।—रसः क्वाथः। अविपाके दोषाणामीषत्पाके ; तेन पाचनत्वमस्य ॥ १२७ ॥

मुस्तमित्यादि।—क्वाथेन ॥ १२८ ॥

दार्वित्यादि।—पूतिको लाटाकरञ्जः इति निश्चलः। किन्तु भूतीक इति पाठो बहुपुस्तकेषु दृश्यते स च टीकया न व्याख्यातः। भूतीकश्च यमानी। हिङ्गु-क्षौद्रयोः प्रक्षेपार्थं परिभाषामाह मात्रेत्यादि।—चूर्णवदिति कर्ष इत्यर्थः। उत्तमस्य

माषिकं हिङ्गुसिन्धूत्थजरणाद्यास्तु शाणिकाः ॥ १२९ ॥
मातुलुङ्गफलकेशरो धृतः सिन्धुजन्ममरिचान्वितो मुखे ।
हन्ति वातकफरोगमास्यगं शोषमाशु जड़तामरोचकम् ॥१३०॥
सन्निपाते—लङ्घनं वालुकास्वेदो नस्यं निष्ठीवनं तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्यं त्रिदोषजे ॥
सन्निपातज्वरे पूर्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि संक्षीणे शमयेत् पित्तमारुतौ ॥ १३१ ॥

---

पलं माषेति पक्षे इयं मात्रा ज्ञेया; माषिकं हिङ्गुति छेद.। आद्यशब्देन सैन्धव सौवर्च्चलमरिचादयः ॥ १२९ ॥

मातुलुङ्गेत्यादि ।—सिन्धुजन्म सैन्धवम् ॥ १३० ॥

सन्निपातज्वरचिकित्सामाह लङ्घनमित्यादि ।—यद्यपि, सन्निपातज्वरस्त्रिदोषारब्धः, तथापि आमाशयस्य कफस्थानत्वात्, स्थानित्वेन च कफ एव बली, अत तत्प्रत्यनीकचिकित्सा प्रथमतो विधेया। अत कफप्रत्यनीकमेव लङ्घनादिकं प्रथम कर्त्तव्यम् इत्याह लङ्घनमित्यादि। अतएवोक्तमन्यत्र "श्लेष्मनिग्रहमेवादौ कुर्य्यात व्याधौ त्रिदोषजे" इति, यत् पुनस्तन्त्रान्तरे "शमयेत् पित्तमेवादौ ज्वरेषु सम वायिषु। दुर्निवारतमं तद्धि ज्वरार्त्तेषु विशेषत.।" तथा "वातस्यानु जयेत् पित्त पित्तस्यानु जयेत कफम्। त्रयाणां वा जयेत् पूर्वं यो भवेद्बलवत्तमः" इत्युक्त, तत्पुनरवस्थाविशेषे बोध्यम्। तथाहि सामज्वरे कफमेवादितः प्रतिकुर्य्यात्, आमपाकान्ते पित्तमथादौ, .चिरजे मारुतमेवादाविति। अत्रार्थे तन्त्रान्तरं "ज्वरे त्रिदोषजे सामे शमयेत् कफमादितः। पाकान्तमागते पित्तं चिरजे विषमेऽनिलम्" इति। अन्ये पुनः "वातस्यानु जयेत् पित्तम्" इत्यादिश्लोकमतीसारविषयतया वर्णयन्ति। ननु वातादीनां विभिन्नसञ्चयप्रकोपादीनां युगपदवस्थानाभावात् कथ सम्भूय सान्निपातिकव्याध्यारम्भकत्वम्? अथ मन्यते त्रिदोषकरनिदानवशेन प्रकोपादेषां युगपदुपस्थितिरिति; तदपि न मनोरमं यतस्तथाविधनिदानोपसेवनेऽपि दोषाणां विपरीतैर्गुणैः परस्परोपघातात् युगपत्प्रकोपस्य अनुपपत्तेः। अत्रोच्यते न खलु दोषाणां निखिल एव गुणो विपरीतः, समानस्यापि कतिपयगुणस्य सद्भावात् समानेन हि गुणेन दोषाणामन्योन्यप्रकोपस्यापि सम्भवात्। तथाहि रौक्ष्यलाघवाभ्यां वायुस्तैजसं पित्तं प्रकोपयति, पित्तमप्येवमेव वायुम्, वायुरपि शैत्यात्

त्रिरात्रं पञ्चरात्रं वा दशरात्रमथापि वा।
लङ्घनं सन्निपातेषु कुर्य्याद्वारोग्यदर्शनात्॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम्॥ १३२॥
ष्ठीवनमाह। आर्द्रकस्वरसोपेतं सैन्धवं कटुकत्रयम्।
आकण्ठं धारयेदास्ये निष्ठीवेच्च पुनः पुनः।
तेनास्य हृदयात् श्लेष्मा मन्यापार्श्वशिरोगलात्।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते॥
पर्व्वभेदोऽङ्गमर्दश्च मूर्च्छाकासगलामयाः।
मुखाक्षिगौरवं जाड्यमुत्क्लेशश्चोपशाम्यति॥
सकृद्द्वित्रिचतुः कुर्य्यात् दृष्ट्वा दोषबलाबलम्।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम्॥ १३३॥
मातुलुङ्गार्द्रकरसं कोष्णं त्रिलवणान्वितम्।

---

म्, कफोऽपि तथा वायुम्, पित्तञ्च द्रवत्वेन कफम्, कफोऽपि तथा पित्तमिति, साम्यम्। न वाच्यम्, विपरीतस्तु गुणो भूयान् अन्य समानगुणमभिभूय शमयत्येव, कुतो न करोत्येव यतो दूष्यापेक्षया त्रिदोषकरद्रव्यप्रभावाच्च दोषगुणा यन्ति परं न शमयन्तीति। दृढबलस्त्वाह 'विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वात् घोरं विषमहीनिव" इति। अस्यार्थस्तु दीयचरकतत्त्वप्रदीपिकायामनुसन्धेयः॥ १३१॥

लङ्घनं सूचयित्वा दोषभेदेन तदवधिमाह त्रिरात्रमित्यादि।—त्रिरात्र लङ्घन-विकल्पौ यथाक्रममुल्वणवातादापेक्षया ज्ञेयः। कुर्य्याद्वारोग्यदर्शनादित्यभि समस्तदोषत्रयापेक्षया बलसम्पत्तौ च ज्ञेयम्। एतावन्तं कालं कथं लङ्घनं शक्यमित्याशङ्क्याह दोषाणामित्यादि। "लङ्घनादिकम्" इत्यत्र आदिशब्दात् कास्वेदादीनामपि ग्रहणम्॥ १३२॥

निष्ठीवनमाह आर्द्रकेत्यादि।—आर्द्रकस्वरसमुष्णं कृत्वा सैन्धवादिचूर्णमनुरूपं निष्ठीवनमुपदिशन्ति वृद्धाः॥ १३३॥

अन्यदा सिद्धिविहितं तीक्ष्णं नस्यं प्रयोजयेत् ॥
तेन प्रभिद्यते श्लेष्मा प्रभिन्नश्च प्रसिच्यते।
शिरोहृदयकण्ठास्यपार्श्वरुक् चोपशाम्यति ॥ १३४ ॥

मधूकसारादिः।

मधूकसारसिन्धूत्थवचोषणकणाः समाः।
श्लक्ष्णं पिष्टाम्भसा नस्यं कुर्य्यात् संज्ञाप्रबोधनम् ॥ १३५ ॥
सैन्धवं श्वेतमरिचं सर्षपं कुष्ठमेव च।
वस्तमूत्रेण पिष्टानि नस्यं तन्द्रानिवारणम् ॥ १३६ ॥
अञ्जनमाह—शिरीषवीजगोमूत्रकृष्णामरिचसैन्धवैः।
अञ्जनं स्यात् प्रबोधाय सरसोनशिलावचैः ॥ १३७ ॥

अष्टाङ्गावलेहिका—

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी।
श्लक्ष्णचूर्णीकृतञ्चेतन्मधुना सह लेहयेत् ॥

---

नस्यमाह मातुलुङ्गेत्यादि।—लवणत्रय सैन्धवसौवर्चल विडम्। सिद्धिविहितमिति। अस्य योगस्य भालुकितन्त्रोक्तत्वात् भालुकितन्त्रस्यैव सिद्धिस्थाने ज्ञेय ॥ १३४ ॥

मधूकसारेत्यादि।—मधूकं फलविशेषमस्य सारः फलास्थि, ऊषण मरिचम अम्भसा कोष्णेन ॥ १३५ ॥

सैन्धवमित्यादि। —श्वेतमरिच शोभाञ्जनवीजम् ॥ १३६ ॥

अञ्जनमाह। शिरीषेत्यादि।—शिला मनःशिला। सरसोनेत्यादिविशेषादेव योग पृथक्पाठात् पृथक्योगोऽपि बोध्य। यदुक्तमायुर्वेदसारे "शकाह्वबीज गोमूत्र कणा-मरिच-सैन्धवैः। शिलावचारसोनैर्वा अञ्जन स्यात् प्रबोधनम्" इति ॥ १३७ ॥

अवलेहमाह कट्फलमित्यादि।—यासो दुरालभा, कारवी कृष्णजीरकम् सन्निपाते स्वेदस्य सर्वदा हितत्वेन अग्निसम्बन्धसमुद्भूत देहस्य उष्णत्वं मधु उष्णे विरुध्यते, अतस्तत्र मधु त्यक्त्वा आर्द्रकस्वरसेनावलेहः कार्य्य इत्याह उष्णे इत्यादि। एकमुष्णे इति पदं स्वेदादिविशेषणम् अपरञ्चोपपत्त्यर्थम्। यस्मात् उष्ण विरोधि मधु ततो मधु त्यक्त्वा इत्यर्थः। ननु "क्रियायास्तु गुणालाभे क्रियामन्

एषावलेहिका हन्ति सन्निपातं सुदारुणम्।
हिक्कां श्वासञ्च कासञ्च कण्ठरोगं नियच्छति॥
ऊर्द्ध्वगस्रे अस्रहरणे उष्णे स्वेदादिकर्मणि।
विरोध्युष्णे मधु त्यक्त्वा कार्य्यमार्द्रकजै रसैः॥ १३८॥

---

योजयेत्। पूर्वस्यां शान्तवेगायां न क्रियासङ्करो हितः" इत्यनेन सुश्रुते क्रिया-ङ्करो निषिद्ध', तत् कथं नस्यनिष्ठीवनादीना युगपदेव सन्निपातज्वरे विधानम्? वोच्यते, क्रियासङ्करो ह्यनेकक्रियामेलकः, तस्य च दूषकत्वं न सङ्करत्वमात्रेण, क तर्हि अतिमात्रत्वेन अग्निमान्द्यजनकतया तथा परस्परगुणविरोधादुभयोरपि नष्फलतया च। एतद्दोषद्वयमन्तःपरिमार्जन एव सम्भवति, न पुनर्वहिःपरिमार्जने स्यनिष्ठीवनादौ। एतदभिसन्धाय वृन्दोऽपि समाधानमुक्तवान् यथा "क्रियाभि-ल्यरूपाभिः क्रियासाङ्कर्य्यमिष्यते। भिन्नरूपतया यास्तु ताः कुर्वन्ति न दूषणम्" ति। तुल्यरूपता चात्रान्तःपरिमार्जनत्वेनैव ज्ञेया। तेनायमर्थः एकस्मिन् अन्तः रिमार्जने उपयुक्ते यद्यपरमन्तःपरिमार्जनमुपयुज्यते, तेनैव क्रियासाङ्कर्य्यस्य उक्त-त्या दूषकत्वं न वहिःपरिमार्जने नस्यादाविति। कषायादिभेषजोपयोगान्तरं मरवलेहादिदाने च यद्यपि क्रियासाङ्कर्य्यदोषो भवत्येव, तथापि कार्य्याङ्गतया न रोधः। तदङ्गता चानादिवृद्धव्यवहारात् दोषानुपलम्भाच्च बोध्यम्। किं वा यासाङ्कर्य्यस्य दोषस्याल्पतया कण्ठरोधादिबलवदपायप्रशमकतया च निषिद्धमप्य-लेहादिकमवस्थाविशेषे अङ्गीक्रियते। यथा पीतविषे बालादौ वमनम्। अन्ये कल्पनया तुल्यरूपता व्याख्याय कषायावलेहयोर्युगपदुपयोगेऽपि कल्पनाभेदान्न ङ्कर्य्यमित्याहुः। तन्न, सुश्रुते अग्निमान्द्यादिहेतुत्वेन क्रियासङ्करमात्रस्यैव दोषत्व-क्तम्। तत्र चातुल्यरूपता तुल्यरूपता वेति विशेषो नास्ति। केवलं वृन्देनैव षायनस्यादीनां सन्निपाते युगपदुपयुज्यमानानामविरोधार्थम्, क्रियाभिस्तुल्यरूपाभि-ति वचनं निबद्धम्। तच्च क्रियाद्वयं कल्पनया तुल्यरूपमतुल्यरूपं वा भवतु, भयथाप्यतिमात्रादिनाग्निमान्द्यादिहेतुतया निषिद्धमेव। तेनाभिन्नकल्पनात्मके-भेषजद्वये युगपद्युक्ते अतिमात्रत्वादिना अग्निमान्द्यादिहेतुत्वं दूषकताबीजमस्त्ये-व। तस्मात् अन्तःपरिमार्जनत्वेनैव तुल्यरूपत्वम्, वहिःपरिमार्जने च भिन्नरूपत्वं ख्याय कषायनस्याञ्जनादिषु क्रियासाङ्कर्य्यदोषत्वं परिहरणीयम्॥ १३८॥

पञ्चमुष्टिः—यवकोलकुलत्थानां मुद्गामलकशुण्ठयोः ।
एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले ॥
पञ्चमुष्टिक इत्येष वातपित्तकफापहः ।
शस्यते गुल्मशूले च श्वासे कासे चये ज्वरे ॥ १३९ ॥

चातुर्भद्रकपञ्चमूलकम्—

पञ्चमूलीकिरातादिर्गणो योज्यस्त्रिदोषजे ।
पित्तोत्कटे च मधुना कणया च कफोत्कटे ॥ १४० ॥
दशमूलम्—विल्वश्योणाकगाम्भारीपाटलागणिकारिका
दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥
शालपर्णीपृश्निपर्णीवृहतीद्वयगोक्षुरम् ।
वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥
उभयं दशमूलन्तु सन्निपातज्वरापहम् ।
कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥
पिप्पलीचूर्णसंयुक्तं कण्ठहृद्ग्रहनाशनम् ॥ १४१ ॥

---

यवेत्यादि ।—प्रत्येकं यवादीनां मुष्टिमानत्वम्, न तु पलं द्रव्यबाहुल्यात् अयमेव पक्ष प्रचारी । एकैकं द्रव्यमाहृत्य समुदितानामेषां मिलित्वा पलमा पचेदित्यन्ये । चक्र पुनर्यवादीनामाहारद्रव्यत्वात् प्रत्येकं पलमानत्वेऽपि न दो इत्याह । अस्यैव योगस्य धान्यशुण्ठीयोगात् सप्तमुष्टिक इत्यपि नाम । यथा "यवकोलकुलत्थैश्च मुद्गामलकशुण्ठकैः । धन्याकविश्वसंयुक्तैर्यूष स्यात् स मुष्टिकः" ॥ १३९ ॥

पञ्चमूलीत्यादि । वातपित्तोक्तनवाङ्गयोग एवायम् । अत्र पुनर्मधुयोगा पित्तोल्बणत्रिदोषहन्तृत्वम्, पिप्पलीयोगाच्च कफोल्बणत्रिदोषहन्तृत्वमस्य ज्ञेयम् अत्र कनीयस्या एव पञ्चमूल्या व्यवहारः । अन्ये पुनः श्लेष्मोल्बणे महती पञ्चम माहुः ॥ १४० ॥

दशमूलस्य उक्तत्वादुक्तव्याख्याद्वयानुरोधाच्च पञ्चमूलद्वयमाह विल्वेत्यादि । महातरुसम्भवत्वात् विल्वादिपञ्चमूलस्य महत्त्वं स्वल्पतरुसम्भवत्वाच्च शालपर्ण्यादी

चतुर्दशाङ्गः—

चिरज्वरे वातकफोल्वणे वा त्रिदोषजे वा दशमूलमिश्रः।
किराततिक्तादिगणः प्रयोज्यः शुद्ध्यर्थिने वा त्रिवृता विमिश्रः॥१४२

वातश्लेष्महरोऽष्टादशाङ्गः—

दशमूली शटी शृङ्गी पौष्करं सदुरालभम्।
भार्गी कुटजवीजञ्च पटोलं कटुरोहिणी॥
अष्टादशाङ्ग इत्येष सन्निपातज्वरापहः।
कासहृद्ग्रहपार्श्वार्त्तिश्वासहिक्कावमीहरः॥ १४३॥

पित्तश्लेष्महरोऽष्टादशाङ्गः—

भूनिम्बदारुदशमूलमहौषधाब्द-
तिक्तेन्द्रवीजधनिकेभकणाकषायः।
तन्द्रीप्रलापकसनारुचिदाहमोह-
श्वासादियुक्तमखिलं ज्वरमाशु हन्ति॥ १

मुस्तादिगणः—मुस्तपर्पटकोशीरदेवदारुमहौषधम्।
त्रिफला धन्वयासश्च नीली कम्पिल्लकं त्रिवृत्॥
किराततिक्तकं पाठा बला कटुकरोहिणी।
मधुकं पिप्पलीमूलं मुस्तादो गण उच्यते॥
अष्टादशाङ्गमुद्दिष्टमेतद्वा सन्निपातनुत्।

---

ल्पत्वं ज्ञेयम्। सुश्रुते तु गोक्षुरस्थाने एरण्डमूलं पठ्यते, चरके तु गोक्षुर इति। न सुश्रुतप्रयोगेषु एरण्डमूलेन, चरकादिप्रयोगेषु गोक्षुरेणैव व्यवहार इति शान्ति-चाटावप्येरण्डमूलेनैवेति॥ १४१॥

चिरज्वर इत्यादि।—वातकफोल्वण इत्युभयत्रापि सम्बध्यते। शुद्ध्यर्थिने वा त्रिवृता विमिश्र इति मलविबन्धे सति शोधनार्थं त्रिचतुरत्रिवृच्चूर्णमाषकाणां प्रक्षेप आहुः॥ १४२॥

दशमूलीत्यादि।—स्पष्टम्॥ १४३॥

भूनिम्बेत्यादि।—इन्द्रवीजम् इन्द्रयवः। मुस्तेत्यादि।—नीली नीलवृक्षः;

पित्तोत्तरे सन्निपाते हितश्चोक्तं मनीषिभिः ।
मन्यास्तम्भे उरुघाते उरःपार्श्वशिरोग्रहे ॥ १४४ ॥
शट्यादिगणः—शटी पुष्करमूलञ्च व्याघ्री शृङ्गी दुरालभा ।
गुडूची नागरं पाठा किरातं कटुरोहिणी ॥
एष शट्यादिको वर्गः सन्निपातज्वरापहः ।
कासहृद्ग्रहपार्श्वार्त्तिश्वासे तन्द्रासु शस्यते ॥ १४५ ॥
बृहत्यादिगणः—बृहत्यौ पुष्करं भार्गी शटी शृङ्गी दुरालभा ।
वत्सकस्य च वीजानि पटोलं कटुरोहिणी ॥
बृहत्यादिर्गणः प्रोक्तः सन्निपातज्वरापहः ।
कासादिषु च सर्वेषु देयः सोपद्रवेषु च ॥ १४६ ॥
भार्गीं पुष्करमूलञ्च रास्नां विल्वं यमानिकाम् ।
नागरं दशमूलञ्च पिप्पलीश्चाप्सु साधयेत् ॥
सन्निपातज्वरे देयं हृत्पार्श्वानाहशूलिनाम् ।
कासश्वासाग्निमन्दत्वं तन्द्रीञ्च विनिवर्त्तयेत् ॥
द्विपञ्चमूलो षड्ग्रन्था विश्वशठ्यनखोद्वयम् ।
कफवातहरः क्वाथः सन्निपातहरः परः ॥ १४७ ॥

---

काम्पल्लक गुण्डारोचनी । वलास्थाने वचेति न पाठ, आयुर्वेदसारादौ वलापाठा॥ १४४ ॥

शटीत्यादि ।—किरातस्थाने केचित पटोल पठन्ति, तन्न, हारीतजतुकर्णचन्द्रटविदेहेषु किरातस्यैव पाठादिति ॥ १४५ ॥

बृहत्याविव्यादि ।—कासादिष्वित्यत्र आदिशब्दग्रहणात् शट्याद्युक्तहृद्ग्रहादीनग्रहणम । चरकेऽपि शट्याद्यनन्तरमस्य योगस्य पाठात ॥ १४६ ॥

भार्गीमित्यादि ।—भेलस्य । बिल्व विल्वमूल यौगिकमल्पमकत्वात । दशमूलञ्चेति पाटपत्तेऽपि भागद्वय तस्य ग्राह्य, किन्तु भेले "नागरञ्च मृणालञ्च पिप्पलीञ्च' इति पाठो दृश्यते एव चन्द्राटेऽपि, अत एकभागस्तस्येति युक्तम् । द्विपञ्चमूली

अभिन्यासज्वरचिकित्सामाह।

कारवीपुष्करैरण्डत्रायन्तीनागराम्रताः।
दशमूलीशटीशृङ्गीयासभार्गीपुनर्नवाः॥
तुल्या मूत्रेण निष्क्राथ्य पीताः स्रोतोविशोधनाः।
अभिन्यासज्वरं घोरमाशु घ्नन्ति समुद्धतम्॥ १४८॥
मातुलुङ्गाश्मभिद्विल्वव्याघ्रीपाठोरुवूकजः।
क्वाथो लवणमूत्राढ्योऽभिन्यासानाहशूलनुत्॥ १४९॥
निद्रोपेतमभिन्यासं क्षीणं विद्याद्धतौजसम्॥ १५०॥
कण्ठरोधकफश्वासहिक्कासन्न्यासपीड़ितः।
मातुलुङ्गार्द्रकरसं दशमूल्यम्भसा पिबेत्॥ १५१॥
व्योषाब्दत्रिफलातिक्तापटोलारिष्टवासकैः।
सभूनिम्बामृतायासैस्त्रिदोषज्वरनुज्जलम्॥ १५२॥

---

यादि।—द्विपञ्चमूली दशमूली, उग्रगन्धा वचा, ग्रथनखोदय कानागरकुडकारा-ग्निभेदात रक्तश्वेतपुष्पभेदात॥ १४७॥

सन्निपातज्वरभेदस्याभिन्यासस्य चिकित्सामाह कारवीत्यादि।—कारवी कृष्ण जीरकम्; त्रायन्ती त्रायमाणा; मूत्रेण गोमूत्रेण॥ १४८॥

मातुलुङ्गेत्यादि।—अश्मभित् पाषाणभेदी, बिल्वस्य मज्जा, लवणं सैन्धवं, मूत्र गोमूत्रम्। गोमूत्रसैन्धवे प्रक्षिप्य क्वाथः पेयः। गतप्रयोगदर्शनात् गोमूत्रेण क्वाथः प्रक्षेपश्च लवणमित्यके॥ १४९॥

कश्चिनिश्चये अभिन्यासलक्षणस्य अनुक्तत्वात् तल्लक्षणमिहवाह निद्रोपेतमित्यादि।—सन्निपातज्वरमेव निद्रोपेतमभिन्यास विद्यात्। क्षीण वद्याद्धतौजसमिति क्षीणमिति क्षीणधातुगतम्। अभिन्यासज्वरमेव संनिपातज्वरमेव क्षीणधातुगतं हतौजसं विद्यात्। उक्तं सुश्रुते "अभिन्यासन्तु तं प्राहुर्हतौजसमथापरे। सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगु." इति॥ १५०॥

कण्ठरोधेत्यादि।—दशमूलक्वाथमेव मातुलुङ्गार्द्रकरसे प्रक्षिप्य पिबेदित्यर्थः॥ १५१॥

व्योषेत्यादि।—अरिष्टो निम्बः, तस्य त्वक्; जलं क्वाथः॥ १५२॥

त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः।
सक्षारो भेदनः क्वाथः पेयः सर्वज्वरापहः ॥ १५३ ॥
स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थजः।
घर्षेज्जिह्वां जड़ां सिन्धुत्र्यूषणैः साम्लवेतसैः ॥
उच्छुष्कां स्फुटितां जिह्वां द्राक्षया मधुपिष्टया।
लेपयेत् सघृतञ्चास्यं सन्निपातात्मके ज्वरे ॥ १५४ ॥
काकजङ्घा जटा निद्रां जनयेच्छिरसि स्थिता ॥ १५५ ॥
सन्निपाते प्रकम्पन्तं प्रलपन्तं न बृंहयेत्।
तृष्णादाहाभिभूतोऽपि न दद्याच्छीतलं जलम् ॥ १५६ ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः।
शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥
रक्तावसेचनैः पूर्वं सर्पिःपानैश्च तं जयेत्।
प्रदेहैः कफपित्तघ्नैर्वमनैः कवलग्रहैः ॥
गैरिकं पांशुजं शुण्ठीवचाकटुककाञ्जिकैः।
कर्णशोथहरो लेपः सन्निपातज्वरे भृशम् ॥ १५७ ॥
कुलत्थकट्फले शुण्ठी कारवी च समांशिकैः।
सुखोष्णैर्लेपनं कार्य्यं कर्णमूले मुहुर्मुहुः ॥ १५८ ॥

---

त्रिवृदित्यादि।– विशाला गोरक्षकर्कटी, यवक्षारः प्रक्षेप्यः ॥ १५३ ॥

स्वेदोद्गम इत्यादि।—सन्निपातात्मके ज्वर इत्यन्तं स्पष्टम् ॥ १५४ ॥

काकजङ्घा इत्यादि।—जटा मूलम् ॥ १५५ ॥

सन्निपात इत्यादि।—स्पष्टम् ॥ १५६ ॥

सन्निपातज्वरस्यान्ते शेषे सन्निपातज्वरे वा गते इत्यर्थः। रक्तावसेचनैरिति बहुवचनात् रक्तावसेचनं नैरन्तर्य्येण बोध्यम्। जतुकर्णे "शश्वद्रक्तस्य मोक्षणम्" इत्युक्तत्वात्। सर्पिश्च पञ्चतिक्तत्रिफलाघृतादि। 'चकारात् वातकफघ्नलेपोऽपि बोध्यः। यदुक्तं तत्रैव "लेपाश्च कफवातघ्नाः कार्य्याः सकवलग्रहाः। 'त्रिफलाघृतपानं वा बलं ज्ञात्वा समाचरेत्" इति ॥ १५७ ॥

कुलत्थेति स्पष्टं दशमूलेनापि सुखोष्णेनात्र लेपमुपदिशन्ति ॥ १५८ ॥

जीर्णज्वरचिकित्सामाह। निदिग्धिकादिः—

निदिग्धिकानागरकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्।
जीर्णज्वरारोचककासशूलश्वासाग्निमान्द्यार्दितपीनसेषु॥
हन्त्यूर्ध्वगामयं प्रायः सायं तेनोपयुज्यते॥ १५९॥
पिप्पलीचूर्णसंयुक्तः क्वाथश्छिन्नरुहोद्भवः।
जीर्णज्वरकफध्वंसी पञ्चमूलीकृतोऽथवा॥
कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत्।
जीर्णज्वरेऽग्निसादे च शस्यते गुड़पिप्पली॥ १६०॥

विषमज्वर-चिकित्सामाह।

कलिङ्गकाः पटोलस्य पत्रं कटुकरोहिणी।
पटोलं शारिवा मुस्तं पाठा कटुकरोहिणी॥
निम्बं पटोलं त्रिफला मृद्वीका मुस्तवत्सकौ।
किराततिक्तममृता चन्दनं विश्वभेषजम्॥
गुडूच्यामलकं मुस्तमर्द्धश्लोकसमापनाः।

---

जीर्णज्वरचिकित्सामाह निदिग्धिकेत्यादि।—निदिग्धिका कण्टकारी, वातकफे क्रियते, पित्तानुबन्धे पिप्पलीं त्यक्त्वा मधु प्रक्षिपन्ति वृद्धाः। पिप्पलीचूर्णस्य माषकद्वयं प्रक्षेप्यं प्रचारादिति कश्चित्। पुराणप्रतिश्यायेऽप्ययं योगो दृष्टफलः। अस्यैव योगस्य सोपपत्तिकं वैद्यव्यवहारसिद्धमुपयोगकालमाह हन्तीत्यादि।—किन्तु विन्दुसारे प्रातःसमयोऽप्युक्तः। यथा "श्वासकासविनाशाय मन्दाग्नेर्दीपनाय च। अरुचेश्च निवृत्त्यर्थं प्रातरुत्थाय तं पिबेत्" इति तथा वृन्दोऽप्याह "तत्र रात्रिज्वरे सायमन्यत्र प्रातरिष्यते" इति॥ १५९॥

पिप्पलीत्यादि।—छिन्नरुहा गुडूची; पञ्चमूली च महती। योगद्वयेऽपि पिप्पलीचूर्णप्रक्षेपः। पित्तानुबन्धे मधु उपदिशन्ति वृद्धाः। इदञ्च योगद्वयं प्रायः सायमुपयुज्यते। कासेत्यादौ गुड़पिप्पल्योः प्रत्येकं माषकत्रयेण व्यवहरन्ति वृद्धाः॥ १६०॥

विषमज्वरचिकित्सामाह कलिङ्गका इत्यादि।—वाग्भटस्य। एते पञ्च योगाः

कषायाः शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ॥ १६१ ॥
गुडप्रगाढां त्रिफलां पिबेद्वा विषमार्दितः ।
दीर्घपत्रककर्णाख्यनेत्रं खदिरसंयुतम् ॥
ताम्बूलैस्तद्दिने भुक्तं प्रातर्विषमनाशनम् ।
गुडूचीमुस्तधात्रीणां कषायं वा समाक्षिकम् ॥ १६२ ॥

मुस्तकादिः—मुस्तामलकगुडूचीविश्वौषधकण्टकारिकाक्वाथः
पीतः सकणाचूर्णः समधुर्विषमज्वरं हन्ति ॥
महौषधामृतामुस्तचन्दनोशीरधान्यकैः ।
क्वाथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥
वासाधात्रीस्थिरादारुपथ्यानागरसाधितः ।
सितामधुयुतः क्वाथश्चातुर्थकनिवारणः ॥
मधुना सर्वज्वरनुच्छेफालीदलजो रसः ॥ १६३ ॥

---

पञ्चसु सन्तत-सततान्येद्युष्क तृतीयक चतुर्थकेषु यथासंख्य ज्ञेयाः । अन्ये तु सं॰ एव योगाः सर्वत्र इत्याह । तत्र यथासंख्यमेव युक्तं सततोल्लेखेन पटोलादि योगस्य तथा निम्बादेरन्येद्युष्कोल्लेखेन गुडूच्यादेश्च चतुर्थकोल्लेखेन चारपाठ दृष्टवान् । सन्ततसततान्येद्युस्तृतीयकचतुर्थकानिति पाठम्, वाग्भटे चरके नास्ति अन्ते ऽपि नास्ति । तेनायमर्द्धश्लोक सग्रह केनापि प्रमादात् लिखित. ॥ १६१ ॥

गुडप्रगाढामित्यादि ।—सुश्रुतस्य । त्रिफलामित्यत्र कथितामिति शेष इति डल्लण । गुडोऽत्र प्रक्षेप्य । दीर्घपत्रकत्यादि । कर्णाख्य' काणाखोड इति ख्यात । तस्य विशेषणं दीर्घपत्रं ति । नेत्र मूल तदपि शुष्कदेशजात ग्राह्यमुपदिशन्ति वृद्धा । गुडूचीत्यादि । सुश्रुतस्य अयं योगो यद्यपि पूर्वं चतुर्थके पठित, तथापि मधुयोगात् विषमज्वरमात्रहन्तृत्वमप्यस्य बोध्यम् । डल्लणस्तु यद्यपि योगो ऽयं विषमज्वरे पठितः तथापि समानतन्त्रोक्तत्वात् विषमज्वरविशेषे चतुर्थक एवायं बोध्य इत्याह ॥ १६२ ॥

मुस्तादिमहौषधादी स्पष्टौ । वासादौ वासास्थने चन्द्राटे पाठा पठ्यते,

अजाजी गुड़संयुक्ता विषमज्वरनाशिनी।
अग्निसादं जयेत् सम्यग्वातरोगांश्च नाशयेत् ॥ १६४ ॥
रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः।
विमुच्यते सोऽप्यचिराज्ज्वरेण वातामयैश्चापि सुघोररूपैः ॥१६५॥
प्रातः प्रातः ससर्पिर्वा रसोनमुपयोजयेत्।
पिप्पलीवर्द्धमानं वा पिबेत् क्षीररसाशनः।
षट्पलं वा पिबेत् सर्पिः पथ्यां वा मधुना लिहेत् ॥१६६॥
पयस्तैलं घृतञ्चैव विदारीक्षुरसं मधु।
सम्मूर्च्छ्य पाययेदेतद् विषमज्वरनाशनम् ॥ १६७ ॥
पिप्पलीशर्कराक्षौद्रं घृतं क्षीरं यथाबलम्।
खजेन मथितं पेयं विषमज्वरनाशनम् ॥ १६८ ॥
पयसा विषदंशस्य शकृद्वेगागमे पिबेत्।
वृषस्य दधिमण्डेन सुरया वा ससैन्धवम् ॥ १६९ ॥

---

व्यवहारस्तु वासयैव। स्थिरा शालपर्णी। पथ्या हरीतकी मधुनेत्यादौ सर्वज्वरनुत् विषमाविषमज्वरनुत् ॥ १६३ ॥

अजाजीत्यादि।—मनागभ्रष्ट कृष्णजीरकमिति चक्रः। शितजीरजमित्यन्ये ॥ १६४ ॥

रसोनकल्कमित्यादि।—भक्तात् पूर्वं कर्त्तव्य, यदाह चरकः "रसोनस्य सतैलस्य प्राग्भक्तमुपसेवनम्" इति ॥ १६५ ॥

प्रातरित्यादि।—पिप्पल्यादियोगौ सौश्रुतौ। षट्पल सर्पिरत्रैव वक्ष्यमाणम् ॥ १६६ ॥

पय इत्यादि।—दुग्धं शृतं बोध्यम्। विदारीक्षुरसमिति इक्षुरसस्थाने स्वरस इति न पाठः, उक्तं हि हारीते "विदारीक्षुरसः सर्पिर्मधुतैलशृतं पयः। पिबेच्चातुर्थकश्वासकासवातज्वरापहम्" इति। अन्ये तु विदारीस्वरसौ विषमज्वरमात्रे, चातुर्थे इक्षुरसात् योगान्तरमाहुः ॥ १६७ ॥

पिप्पलीत्यादि।—दुग्धं शृतं बोध्यम् ॥ १६८ ॥

पयसेत्यादि।—वृषदंशो विड़ालः। वृषस्यापि शकृदित्यर्थः ॥ १६९ ॥

नीलिनीमजगन्धाञ्च त्रिवृतां कटुरोहिणीम्।
पिबेज्ज्वरस्यागमने स्नेहस्वेदोपपादित:॥ १७०॥
सुरां समण्डां पानार्थे भक्ष्यार्थे चरणायुधान्।
तित्तिरींश्च मयूरांश्च प्रयुञ्ज्याद्विषमज्वरे॥ १७१॥
अङ्कोटजसहस्रेण दलेन सुकृतां पिबेत्।
पेयां घृतप्लुतां जन्तुश्चातुर्थकहरां त्र्यहम्॥ १७२॥
सैन्धवं पिप्पलीनाञ्च तण्डुला: समन:शिला:।
नेत्राञ्जनं तैलपिष्टं विषमज्वरनाशनम्॥
व्याघ्रीवसा हिङ्गुसमा नस्यं तद्वत् ससैन्धवा॥ १७३॥
कृष्णाम्बरदृढ़ाबद्धगुग्गुलूलकपुच्छज:।
धूपश्चातुर्थकं हन्ति तम: सूर्य्य इवोदित:॥ १७४॥
शिरीषपुष्पस्वरसो रजनीद्वयसंयुत:।
नस्यं सर्पि:समायोगाच्चातुर्थकज्वरं जयेत्॥
नस्यं चातुर्थकं हन्ति रसो वागस्त्यपत्रज:॥ १७५॥

अष्टाङ्गधूप:—

पलङ्कषा निम्बपत्रं वचा कुष्ठं हरीतकी।

---

विषमज्वरे विरेकार्थमाह नीलिनीत्यादि।—नीलिनी नीलवृक्षः। आगमने आगमनदिवसे॥ १७०॥

सुरामित्यादि।—चरकस्य स्पष्टम्॥ १७१॥

अङ्कोटजश्चाङ्करी॥ १७२॥

सैन्धवमित्यादि।—चरकस्य। अञ्जनशब्द अभ्यञ्जनेऽपि वर्त्तते, तन्निरासाय नेत्रपदम्। व्याघ्रीत्यादौ स्त्रीलिङ्गनिर्देशात् लिङ्गमेव प्रयोजकं न तु जाति.॥१७३॥

कृष्णाम्बरेत्यादि।—अम्बरस्य कृष्णत्वं शङ्खराजस्वरसादिभि, उलूकः पेचकः॥ १७४॥

नस्यमाह शिरीषेत्यादि।—रजनीद्वयचूर्णं सर्पिश्च प्रक्षेप्यम्। नस्यमित्यादौ अगस्त्यपत्रं वङ्गसेनपत्रम्॥ १७५॥

सर्षपाः सयवाः सर्पिर्धूपनं ज्वरनाशनम् ॥ १७६ ॥

अपराजिताधूपः।

पुरध्यामवचासर्जनिम्बार्कागुरुदारुभिः।
सर्वज्वरहरो धूपः कार्य्योऽयमपराजितः ॥ १७७ ॥
वैड़ालं वा शकृद्योज्यं वेपमानस्य धूपने।
अपामार्गजटा कट्यां लोहितैः सप्ततन्तुभिः।
बद्धा वारे रवेस्तूर्णं ज्वरं हन्ति तृतीयकम् ॥ १७८ ॥
काकजङ्घा बला श्यामा ब्रह्मदण्डी कृताञ्जलिः।
पृश्निपर्णी त्वपामार्गस्तथा भृङ्गराजोऽष्टमः ॥
एषामन्यतमं मूलं पुष्येणोद्धृत्य यत्नतः।
रक्तसूत्रेण संवेष्ट्य बद्धमैकाहिकं जयेत् ॥ १७९ ॥
मूलं जयन्त्याः शिरसा धृतं सर्वज्वरापहम् ॥ १८० ॥
भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह।
कर्मसाधारणं यद्यत् तृतीयकचतुर्थकौ।
आगन्तुरनुबन्धो हि प्रायशो विषमज्वरे ॥ १८१ ॥

---

पलङ्कषेत्यादि।—पलङ्कषा गुग्गुलु ॥ १७६ ॥

पुरेत्यादि।—पुरो गुग्गुलुः ध्याम गन्धतृणम् ॥ १७७ ॥

वैडालमित्यादि स्पष्टम्। अपामार्गस्य जटा मूलं, पृष्ठे पादं दत्त्वा बन्धः कार्य्य इत्याहुः. बन्धनविधिरायुर्वेदसारे यथा "अपामार्गस्य मूलञ्च सम्यगाचालितासनः। बध्नीयाद्वामहस्तेन सर्वज्वरविमोक्षणम्" ॥ १७८ ॥

काकजङ्घेत्यादि।—काकजङ्घा स्वनामख्याता, श्यामा वृद्धदारकः, ब्रह्मदण्डी ब्रह्मयष्टिका, कृताञ्जलिः लाजालिया ॥ १७९ ॥

मूलमित्यादि।—जयन्त्याः श्वेताया इत्याहुः. भूजयन्त्या इत्यन्ये ॥ १८० ॥

भूतानुबन्धिनोस्तृतीयकचतुर्थकयोश्चिकित्सामाह कर्मेत्यादि।—दैवव्यपाश्रयं बलिमङ्गलादि, युक्तिव्यपाश्रयञ्च कषायादि, एतदुभयमपि चिकित्सितं साधारणशब्देनोच्यते। जह्यादिति अनभूतश्चेदं तेन साधारण चिकित्सितं तृतीयक-

गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः।
तस्मै तिलोदकं दद्यान्मुच्यते चाह्निको ज्वरः॥
एतन्मन्त्रेण चाश्वत्थपत्रहस्तः प्रतर्पयेत्।
सोमं सानुचरं देवं समातृगणमीश्वरम्॥
पूजयन् प्रयतः शीघ्रं मुच्यते विषमज्वरात्॥ १८२॥
विष्णुं सहस्रमूर्द्धानं चराचरपतिं विभुम्।
स्तुवन् नामसहस्रेण ज्वरान् सर्वान् व्यपोहति॥ १८३॥

ज्वरे घृतप्रयोगः।

ज्वराः कषायैर्वमनैर्लङ्घनैर्लघुभोजनैः।

---

चतुर्थकौ कर्मरूपौ जह्यात् हापयेत् निराकुर्य्यादित्यर्थः। ननु ज्वरान्तरे सर्वत्र युक्तिव्यपाश्रयम्, कषायादिकमेवोपदिष्टम्, न दैवव्यपाश्रयम् अत्र पुनः किमर्थं दैवव्यपाश्रयमपि कर्त्तव्यत्वेन उपदिश्यते इत्याह आगन्तुरित्यादि।—आगन्तुर्भूतादिः। विषमज्वरशब्देन तृतीयक चतुर्थकावेवाभिमतौ। तृतीयकचतुर्थकशब्देनात्र तद्विपर्य्ययस्यापि ग्रहणम्। अन्ये तु यद्यप्यागन्तुरनुबन्धो हि इत्यादिवचनबलाद् विषमज्वरमात्र एव दैवव्यपाश्रयं कर्म कर्त्तव्यमित्यायाति तथापि तृतीयकचतुर्थकाविति यदुक्तं तद्विशेषार्थम्। तेन तृतीयक-चतुर्थकयोः प्रायेण भूतानुबन्धजन्यत्वात् तयोरेव विशेषेण दैवव्यपाश्रयं कर्म कर्त्तव्यमित्याहुः। अन्ये तु साधारणशब्देन दोषमात्रसाधारणं युक्तिव्यपाश्रयमात्रं कर्मोच्यते। जह्यादित्यस्य त्यजतीत्यर्थः तेन तृतीयकचतुर्थके युक्तिव्यपाश्रयमात्रं न कार्य्यं किन्तूभयमपि कार्य्यम्। एवञ्चागन्तुरनुबन्धो हीत्यादि द्वितीयार्द्धमपि सङ्गच्छत इत्याहुः॥ १८१॥

गङ्गाया इत्यादि।—एकहस्तायाः पुष्करिण्या अकाकरुदिते पानीयं नूतनघटेनानेतव्यम्; उदिते च रवौ पालिदिने तर्पणं कार्य्यम्। अत्र कुशा यवाः कुसुमानि च एतस्मिन्नमापभक्तादिना बलिश्चेत्युपदिशन्ति वृद्धाः। अस्य मन्त्रस्य केचिदाद्यश्लोकं पठन्ति यथा। "अङ्ग वङ्ग-कलिङ्गेषु सौराष्ट्रमगधेषु च। वाराणस्याश्च यद्वृत्तं तत्र स्मरसि हे ज्वर।" इति। सोममित्युमया सहितम्; अनुचरैर्नन्द्यादिभिश्च सहितम्॥ १८२॥

विष्णुमित्यादि।—नामसहस्रेण महाभारताद्युक्तेन॥ १८३॥

रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषां भिषग्जितम् ॥
निर्दशाहमपि ज्ञात्वा कफोत्तरमलङ्घितम्।
न सर्पिः पाययेत् प्राज्ञः शमनैस्तमुपाचरेत् ॥
यावल्लघुत्वादशनं दद्यान्मांसरसेन तु ॥ १८४ ॥
मांसार्थमेणलावादीन् युक्त्या दद्याद्विचक्षणः।
कुक्कुटांश्च मयूरांश्च तित्तिरिं क्रौञ्चमेव च ॥
गुरूष्णत्वान्न शंसन्ति ज्वरे केचिच्चिकित्सकाः।
लङ्घनेनानिलबलं ज्वरे यद्यधिकं भवेत् ॥
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥ १८५ ॥

---

इदानीं घृतप्रयोगान् विवक्षुः घृतस्य कालविषयमाह ज्वरा' कषायैरित्यादि।— अत्र कषायैरित्यसमासनिर्देशेन व्यस्तैरपि कषायादिप्रयोगैः रूक्षस्य सर्पिःपानं कर्त्तव्यमिति दर्शयति। वमनैरित्यनेन अवस्थाविधेयवमनप्रयोगान् सर्पिःषडहपूर्वभाविनो दर्शयति, लङ्घनैरित्यनेन च लङ्घनं स्वेदनं, काल इत्याद्युक्ता लङ्घनसमानफलाः स्वेदादयोऽपि गृह्यन्ते। रूक्षस्येति वचनेन कषायादिप्रयोगे सत्यपि यद्यपि सामानुबन्धत्वात् कफोत्तरतया वा यत्र रूक्षत्वं न भवति, तत्र सर्पिर्न दातव्यमिति दर्शयति। भिषग्जितं चिकित्सितम्। दशाहादूर्द्ध्वं हि घृतपानावस्था चरकेणोक्ता, इदानीं तदपवादमाह निर्दशाहमपीत्यादि।— निर्गतो दशाहान्निर्दशाहः। अलङ्घितमिति असञ्जातलङ्घितफलम्, इयञ्चावस्था प्रबलसामदोषारब्धत्वात् ज्वरस्य, तथा असम्यगुपचाराच्च भवतीति ज्ञेयम्। यावल्लघुत्वादिति छेदः। लघुत्वे तु जाते कफोत्तरता अलङ्घितता चापयाति, तेन तदा सर्पिःपानमनुज्ञातं कर्त्तव्यमित्यर्थः। यावदिति यावल्लघुत्वात् लघुत्वपर्यन्तं शमनैरुपाचरेत् लघुत्वे सति सर्पिष्पानम् अथवा यावत् तावत् नित्ययोगित्वात् लघुत्वात् यावत्पर्यन्तं शमनैरुपाचरेत् तावत् मांसरसेन। अशनन्तु निर्दशाहज्वरे कफोत्तरेऽप्यलङ्घितेऽपि मांसरसेन देयमित्याह: अशनं दद्यान्मांसरसेनेति। ननु किमर्थमेतादृशमशनं कफविरुद्धमपि कफप्रधानावस्थाया दीयते? सत्यं मांसरसस्य बलजनकत्वात्, बलस्य च दोषनिग्रहसमर्थकत्वात्, अत एवोक्तं तत्रैव "बलं ह्यलं निग्रहाय दोषाणां बलकृच्च तत्" इति ॥ १८४ ॥

एणलावादीनित्यादिशब्दात् कपिञ्जलादीनां ग्रहणम्। मात्राविकल्पज्ञ इति,

पिप्पल्याद्यं घृतम्—

पिप्पल्यश्चन्दनं मुस्तमुशीरं कटुरोहिणी।
कलिङ्गकास्तामलकी शारिवातिविषे स्थिरा॥
द्राक्षामलकविल्वानि त्रायमाणा निदिग्धिका।
सिद्धमेतैर्घृतं सद्यो ज्वरं जीर्णमपोहति॥
क्षयं कासं शिरःशूलं पार्श्वशूलं हलीमकम्।
अङ्गाभितापमग्निञ्च विषमं सन्नियच्छति॥
पिप्पल्याद्यमिदं क्वापि तन्त्रे क्षीरेण पच्यते॥ १८६॥

---

विकल्पो विशिष्टकल्पना संस्कार इत्यर्थः। मात्राशी विकल्पज्ञश्चेत्यर्थः। तेन तावती मात्रा कर्त्तव्या, तादृशः संस्कारः कार्य्यः, यथा लघुत्वानुगत्वं भवत इत्यर्थः॥१८५॥

सर्पिःपानावस्थां प्रतिपाद्य सर्पींष्याह पिप्पल्य इत्यादि।—कलिङ्गक इन्द्रयवं, तामलकी भूम्यामलकी; शारिवा अनन्तमूलम्, विल्व विल्वशलाटु. द्राक्षादिफल साहचर्य्यात्। अत्र यद्यपि घृतस्य मानं नोक्तं, तथापि वृद्धवैद्यव्यवहारात् प्रस्थमात्रं गृह्यते, अत एवोक्तम् "अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते। अनुक्ते क्वाथ्यमाने तु पात्रमेकं प्रशस्यते" इति। अन्ये पक्तव्यघृतस्य मानानिर्देशे अव्यवस्थितमानमेवेच्छातः पक्तव्यमिति। यत्र तु प्रस्थादिमाननिर्देशं करोति, तत्र तावन्मानेनैव स्नेहेन प्रायो रोगोपशमो भवतीति ज्ञेयम्। तथाहि वातव्याध्यादौ भूयिष्ठे हि साध्ये भूयसीमेव स्नेहमात्रां वक्ष्यति। तथा प्रपौण्डरीकाद्यगस्ये योगितया स्नेहस्य कुडवमानमेवोक्तम्। कुष्ठोक्ततिक्तषट्पलादौ तु अत्यल्पघृतसविधानेन तथैव पक्वस्य घृतस्य कार्य्यकर्तृत्वं भवतीति भिषजप्रभावदर्शी महर्षिर्बोधयति। तत्र यदि कुष्ठस्य दीर्घरोगतया भूयसा तिक्तषट्पलेन प्रयोजनं, तदा पुनः पुनः षट्पलमानं घृतं पक्तव्यं "यथा कुर्वन्ति स उपाय" इति वचनात्। एवं पानीयकल्याणगस्त्यहरीतक्यादावपि प्रतिनियतमानकथनप्रयोजनं वाच्यम्। तस्मान्न याद्दृच्छिकमाचार्य्यस्य क्वचिन्मानाभिधानमनभिधानञ्च क्वचिदिति। अत्र क्वचित् पुस्तके हलीमकमिति पाठः क्वचिच्चारोचकमिति पाठद्वयमपि न प्रक्षेपणीयम्। यतः सुश्रुते "जीर्णज्वरशिरःशूलगुल्मोदरहलीमकान्" इति दृश्यते। वाग्भटे च "पिप्पलीन्द्रयवधावनिकाशारिवामलकतामलकीभिः। विल्वमुस्तहिमपाणिनिसेव्यैः द्राक्षयातिविषया

यत्राधिकरणे नोक्तिर्गणे स्यात् स्नेहसंविधौ।
तत्रैव कल्कनिर्य्यूहाविष्येते स्नेहवेदिना॥
एतद्वाक्यबलेनैव कल्कसाध्यपरं घृतम्॥ १८७॥
जलस्नेहौषधानान्तु प्रमाणं यत्र नेरितम्।
तत्र स्यादौषधात् स्नेहः स्नेहात् तोयं चतुर्गुणम्॥
अनुक्ते द्रवकार्य्ये तु सर्व्वत्र सलिलं मतम्॥ १८८॥
घृततैलगुड़ादींश्च नैकाह्नादवतारयेत्।
व्युषितास्तु प्रकुर्वन्ति विशेषेण गुणान् यतः॥
स्नेहकल्को यदाङ्गुल्या वर्त्तितो वर्त्तिवद्भवेत्।
वह्नौ क्षिप्ते च नो शब्दस्तदा सिद्धिं विनिर्दिशेत्॥
शब्दस्योपरमे प्राप्ते फेनस्योपरमे तथा।
गन्धवर्णरसादीनां सम्पत्तौ सिद्धिमादिशेत्॥ १८९॥

---

रया च। घृतमाशु निहन्ति साधित ज्वरमग्निं विषम हलीमकम्। अरुचि
ग्नापमसयोर्भमथु पार्श्वरुज चयम्” इति दृश्यते तस्मात् पाठद्वयमेव युक्तम्
१८६॥

अत्र केचित् “कल्ककाथावनिर्देशे गणात् तस्मात समावपेत” इति सुश्रुतवच
त् पिप्पल्यादीना कल्कत्व कषायत्वञ्चेच्छन्ति। अन्ये तु कल्कत्वमेव ब्रुवन। अत
तत्संशयनिरासार्थं परिभाषामाह यत्रेत्यादि।—अधिकरणेनेत्यधिकारितया, तत्र
ाचार्य्येण गणत्वमधिकृत, तत्रैव विदारिगन्धादिगणादौ कल्ककषायकल्पना।
त्वधिकृतगणत्व नास्ति, तत्र कल्ककल्पनैव। एतेन सुश्रुतोक्ता “कल्ककाथावनि-
ए” इत्यादिका परिभाषा अधिकृतगणविषयेव, न तु भेषजसमूहमात्रविषया इति।
मा भूदुभयकल्पना अनियमेन कदाचित् कल्ककल्पना कदाचित काथकल्पना
ो न स्यात्? इति चेन्नैवम्, कषायकल्पनायां द्रव्य न साक्षात प्रधानभूत स्नेह-
धने व्यवह्रियते। कल्कस्तु साक्षादेव स्नेहसम्बन्धः पठ्यत इति कल्कस्य प्राधा-
त् तथा वृद्धवैद्यव्यवहाराच्चेत्याह एतद्वाक्यबलेनैवेत्यादि॥ १८७॥

जलस्नेहेत्यादौ जलशब्दो द्रवमात्रोपलक्षकः॥ १८८। १८९॥

क्षीरषट्पलकं घृतम्—

पञ्चकोलैः ससिन्धूत्थैः पलिकैः पयसा समम्।
सर्पिःप्रस्थं शृतं प्लीहविषमज्वरगुल्मनुत्॥
अत्र द्रवान्तरानुक्तेः क्षीरमेव चतुर्गुणम्।
द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्॥ १९० ॥

दशमूलषट्पलकं घृतम्—

दशमूलीरसे सर्पिः सक्षीरे पञ्चकोलकैः।
सक्षारैर्हन्ति तत्सिद्धं ज्वरकासाग्निमन्दताः॥
वातपित्तकफव्याधीन् प्लीहानञ्चापि पाण्डुताम्॥ १९१ ॥
क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्।

---

पञ्चकोलैरित्यादि।—पयसा सममित्यस्य समशब्दस्य तुल्यार्थतामङ्गीकारेण स्नेहसमं क्षीरम्, त्रिगुणञ्च जलमर्थाधिकारात्तत्षट्पलघृतमवादात। तदुक्तम् "सक्षारैः पञ्चकोलैस्तु पलिकैस्त्रिगुणोदकम्। समक्षीरं घृतप्रस्थं ज्वरार्शःप्लीहगुल्मनुत्" इति। "क्षीरदध्यारनालेषु पाको यत्रेरितः क्वचित्। चतुर्गुणं जलं तत्र वीर्याधानार्थमावपेत्" परिभाषयमनयात कल्पकोषेण नाद्रियते। अन्ये तु क्षीरादिसाधनविषयमित्याहुः। चक्रस्तु सममित्यस्य सहार्थतामाश्रित्याह अत्रेत्यादि। एतच्चान्ये दूषयन्ति यत् सङ्ग्रहीतादौ पाकास्ते 'षट्पलकेऽस्मिन् घृतप्रस्थे तुल्यक्षीरम्' इति पठ्यते। चरकेऽप्युक्तं 'घृतप्रस्थं विपाचयेत् क्षीरप्रस्थेन' इति। व्यवहारस्तु क्वचित् त्रिगुणोदकेन, क्वचिच्चतुर्गुणोदकेनेति ॥१९०॥

दशमूलीरस इत्यादि।—रसः क्वाथः ... क्वाथचतुर्गुणं क्षीरं स्नेहसमम्। स हि क्वाथाच्चतुर्गुणं वारीत्यादि परिभाषाप्रवृत्त्या बुद्धा क्षीरयोगे स्नेहसमत्वेनैव पाकं व्याचष्टे। चक्रस्त्वाह घृतमध्ये क्षीरञ्चापि तत्र क्षीरेण सह स्नेहाच्चतुर्गुणो द्रवः कार्यः, स्नेहपाके चतुर्गुणद्रवस्य उत्सर्गसिद्धत्वात्। "स्नेहात् तोयं चतुर्गुणम्" इत्यत्र तोयस्य द्रवोपलक्षणत्वात्। अतः क्वाथोऽत्र त्रिगुणः क्षीरञ्च स्नेहसममिति। पञ्चकोलयवक्षाराः प्रत्येकं पलिकाः, पूर्वोक्तषट्पलकसाहचर्यात् षट्पलत्वानुपपत्तेरिति ॥ १९१ ॥

दशमूलीक्वाथार्थं परिभाषामाह क्वाथादित्यादि।—स्नेहसमं क्षीरमिति यथा

स्नेहात् स्नेहसमं क्षीरं कल्कस्तु स्नेहपादिकः।
चतुर्गुणस्त्वष्टगुणं द्रवद्वैगुण्यतो भवेत्॥

वान्तरमस्ति तन्नेदं केवलक्षीरे तु क्षीरमेव चतुर्गुणं पाकस्य चतुर्गुणद्रवेणैवोत्सर्ग-सिद्धत्वात् इति गयदासचक्रौ। अन्ये तु यत्रैव केवलं क्षीरं तत्रैव स्नेहसमं क्षीरम्, न्यत्र चतुर्गुणं क्षीरदध्यारनालैस्त्वित्यादिवचनादित्याहुः। द्रवद्वैगुण्यतो भवेदिति द्यपि "शुष्कद्रव्येष्विदं मानमेवमादि प्रकीर्त्तितम्। द्विगुणं तद्द्रवेष्विष्टं सद्य चोद्धृतेषु च" इति वचनात् द्रवमात्र एव द्वैगुण्यमायाति, तथापि सुनिषण्णक-ङ्गेरोक्त षोडशपलरूपस्य द्रवप्रस्थस्य द्वैगुण्येन द्वात्रिंशत्पलरूपत्वे द्रवत्वेन सिद्धे द्वयमाचार्य "त्रिंशत्पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः" इति करोति, तेन गुण्याभिधायकपरिभाषाव्यभिचारं क्वचिदस्तीति ज्ञापयति। अतएव रक्ति-ादौ त्रिपलपर्य्यन्ते कुडवपूर्वमाने द्रवार्द्रयोर्द्वैगुण्यं न कार्य्यम्। यदाह गोपुर-क्षित "रक्तिकादिषु मानेषु यावन्न कुडवो भवेत्। शुष्के द्रवार्द्रयोश्चापि तुल्य ान प्रकीर्त्तितम्" इति, तथा "द्विगुणं कुडवादौ तु शुष्कान्मानं द्रवस्य च। आर्द्रस्य ाल्पवीर्य्यत्वाज्ज्ञेयमन्यत्र तत्समम्" इति तथा जतुकर्णोऽप्युक्तम "आर्द्राणाञ्च वाणाञ्च द्विगुणाः कुडवादयः।" एवञ्च कुडवादिमानयोग्यस्यापि यत्र पलोल्लेखन ान तत्रापि न द्वैगुण्यं विधेयं तेन 'रास्नासहस्रनिर्यूहे तैलद्रोणं विपाचयेत्" त्यादिषु पलोल्लेखेन जलं गृह्यमाणं द्विगुणं भवति। क्वचित्तु पलोल्लेखविधा-ऽपि तन्त्रान्तरीयवाक्यैकवाक्यतया पलोल्लेखागतद्रवेऽपि कुडवादिविवक्षां कृत्वा गुण्यं विधेयम्। यथा ज्वरक्षीणचिकित्सिते "मधुकाष्टपलं द्राक्षाप्रस्थक्वाथ" त्यादिना चरके यः प्रयोग उक्तः, स जतुकर्णे "द्राक्षाया मधुकाच्च प्रस्थक्वाथ." त्यादिना ग्रन्थेन पठितः। तेन जतुकर्णे मधुकस्याष्टपलोल्लेखपाठात् कृतद्वैगुण्यमेव लस्य भवति। तत्प्रत्ययाच्चरकेऽपि मधुकाष्टपलोल्लेखविहितेऽपि क्वाथे कुडवद्वय-विवक्षया कृतद्वैगुण्यमेव जलं देयम्। एवमन्यदप्यनुसरणीयम्। अत्र केचित् कुडव-पि द्वैगुण्यं नेच्छन्ति, यदि हि द्विगुणः कुडवः स्यात्, तदा क्वाथ्याच्चतुर्गुण-त्यादि कल्कश्च स्नेहपादिक इति परिभाषा सर्वतन्त्रसिद्धा बाधिता स्यादिति; तः सुश्रुते "स्नेहकुडवे साध्ये भेषजपलं कल्कमिष्टम्" इत्युक्तम्, तथा च कृष्णा त्रेयेणाप्युक्तं "स्नेहपाकविधौ यत्र प्रमाणं नोदितं क्वचित्। स्नेहस्य कुडवं तत्र चेत् कल्कपलेन तु" इति अत्र हि यदि कुडवश्चतुःपलरूपः स्यात्, तदैव कल्क-

पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ।
तत्र स्नेहसमान्याहुरर्वाक् च स्याच्चतुर्गुणम्॥ १९२॥

वासाद्यं घृतम्—

वासां गुडूचीं त्रिफलां त्रायमाणां यवासकम्।
पक्त्वा तेन कषायेण पयसा द्विगुणेन च॥

पलस्य स्नेहपादिकत्व घटते। अष्टपलरूपत्वे कल्कपलस्य स्नेहापेक्षया अष्टभागत्वमेव स्यादिति। एतच्च नातिसाधु, यतः सुश्रुत एव "स्नेहकुडवे साध्ये क्वाथ्यद्रव्यप्रस्थौ विधेय," इत्युक्तम तत्र कुडवेनैव यदि स्नेहपलचतुष्टय गृह्यते तदा चतुःपलस्नेहे षोडशपलक्वाथ्यग्रहण स्यात। न च तथा व्यवहरति क्वाथ्यषोडशपले हि अष्टपल एव स्नेह गृह्यते, तस्मादसाधकमेतत कुडवाद्द्वैगुण्यस्येति द्वैगुण्य कुडवे युक्तम्। अगस्त्यहरीतक्या मधुनः कुडव यच्चरकेणोक्त तन्त्रान्तरे "मधुनश्च पलाष्टकम्" इति पठ्यते, तथा तन्त्रान्तरे "त्रायमाणाचतुःपल पक्त्वा दशकेऽम्भसि शेषित। कुडवे कुडवान् सर्पिःक्षीरधात्रीरसान् पचेत्" इत्युक्तम्। तत्र यदि चतुःपल कुडव स्यात तदा चरकोक्तत्रायमाणाघृतेन सह विरोध स्यात्। तथाहि "जलद्विगुणे साध्य त्रायमाणाचतुःपलम्" इत्यादि यावत् "रसस्यामलकानान्तु क्षीरस्य च घृतस्य च। पलानि पृथगष्टाष्टा दत्त्वा सम्यग्विपाचयेत।" तथान्यत्राप्युक्तम। "आर्द्रद्रव्यद्रवद्रव्यपलैरष्टाभिरेव च। शुष्कद्रव्यचतुष्केण कुडव समुदाहृत इति। तस्मात् कुडवे द्वैगुण्य साधु, यत तु अष्टपलेऽपि स्नेहे कल्कस्य पलमानत्वम्, तत् स्वरससाध्यस्नेहाभिप्रायेण पुष्पकल्काभिप्रायेण वा ज्ञेयम्। यदुक्त "स्नेह सिध्यति शुद्धाम्बुनि.क्वाथस्वरसैः क्रमात्। कल्कस्य योजयदंश चतुर्थं षष्ठमष्टमम तथा "शनस्य कोविदारस्य कर्बुदारस्य शाल्मले.। कल्काद्व्यत्वात् पुष्पकल्क प्रशसन्ति चतु.पलम्" इति। अन्न स्नेहप्रस्थापेक्षया चतुःपल कल्क स्नेहादष्टमभाग एव भवतीत्यादि विशेषवचनेन कल्कश्च स्नेह्यादिक् इति सामान्यवचनस्य बाधा क्वचिद्विषयविशेषे भवतीह न विरोधमावहतीति अलमतिप्रपञ्चेन सर्वथा वृद्धव्यवहारानुसृतमेव वक्तानुसरणीयमस्माभिरिति सक्षेप। विस्तर पुनरस्मदीयचरकतत्त्वप्रदीपिकायामेव गवेषणीय इति॥ १९२॥

पञ्चप्रभृतीत्यादिपरिभाषार्थं पुनर्वासाद्यघृतव्याख्यावसर एव व्यक्तीकरिष्यामः

**पिप्पलीमूलमृद्वीकाचन्दनोत्पलनागरैः।**
**कल्कीकृतैश्च विपचेद् घृतं जीर्णज्वरापहम्॥ १८२॥**

सामित्यादि।—यवासकं दुरालभा। अत्र चकाराद्वासादिक्वाथोऽपि घृतादद्विगुण ग्राह्यः। युक्तञ्चैतत्, यतः स्नेहपाके चतुर्गुणमेव द्रवमुत्सर्गसिद्धम्; "स्नेहात् र्थं चतुर्गुणम्" इति वचनात्। तोयशब्दोऽपि तत्र द्रवमात्रोपलक्षक इति। अत्र भ्यामपि चातुर्गुण्यमित्यादि परिभाषयैव क्षीरकषाययोः प्रत्येकं द्वैगुण्ये सिद्धे कारोऽयं क्वाथचातुर्गुण्यार्थ इति केचित्। अन्ये तु परिभाषाबलात् यद्यपि क्षीर षायश्च द्विगुण एव लभ्यते, तथापि स्पष्टार्थं क्षीरद्वैगुण्याभिधानमित्याहुः, तन्न, रस्य हि मानानुक्तौ "क्वाथ्याच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम्। स्नेहात् स्नेहसम क्षीरं कल्कन्तु स्नेहपादिकं" इति वचनात् क्षीरस्य द्रवान्तरसान्निध्ये सति स्नेहसमत्वमेव स्यात्। ततः कषायभागत्रय क्षीरभागश्चैक इति कृत्वा द्वाभ्यामपि चातुर्गुण्यमिति परिभाषार्थोऽप्यनुगृहीतो भवति। तस्मात् कर्त्तव्य क्षीरद्वैगुण्याभिधानम्। अन्ये तु द्वाभ्यामपि चातुर्गुण्यमिति परिभाषाया प्रत्येकमेव द्रवेण चातुर्गुण्यमिच्छन्ति। ततश्चेह कषायस्य चातुर्गुण्यं क्षीरस्य द्वैगुण्यमेव "पयसा द्विगुणेन च" इति वचनात् तत्र एकेनापि चातुर्गुण्यम्, द्वाभ्यामपि चातुर्गुण्य विभिन्न चातुर्गुण्यम्, चतुर्भिः सममिति वचनेन चतुर्भिः स्नेहसमताभिधानेन स्नेहा चातुर्गुण्यमेव द्रवस्योक्तम्। अतो द्वाभ्या त्रिभिरपि तथा चातुर्गुण्य कार्य्यम्। यथा हि चातुर्गुण्य स्यात् तथा च मिलित्वैव चातुर्गुण्य सिध्यति, न प्रत्येकमित्यर्थः। च यदि प्रत्येक चातुर्गुण्यं विवक्षित स्यात् तदा द्वयोस्त्रयाणां चातुर्गुण्यमिति यात। तृतीयानिर्द्देशेन हि साहित्य सूचयता मिलितयोरेव चातुर्गुण्य प्रतीयत। अत एवैतत्परिभाषान्तरमात् "पञ्चप्रभृति यत्र स्युर्द्रवाणि स्नेहसंविधौ। तत्र स्नेहसमान्याहुरर्वाक् तस्माच्चतुर्गुणम्" इति मिलित्वैव चातुर्गुण्यम्। अन्यथा एतद्वच-नविरोधो दुष्परिहरः स्यात्। अन्ये तु "अर्वाक् स्याच्च चतुर्गुणम् इति प्रत्येकमेव चातुर्गुण्यम्। अन्यथा यत्र यत्र स्नेहपाके चत्वारि द्रवाणि सन्ति तत्र यदि द्रवद्वयस्य मिलित्वा चातुर्गुण्यं स्यात् तदा स्नेहसमान्याहुरेतावतापि द्रवचतुष्टयस्य मिलित्वा चातुर्गुण्ये सिद्धे, अर्वाक् स्यात् तु चतुर्गुणमिति वचनं तावदेकद्विविषये चरितार्थमेव। यत्र वा द्रवचतुष्टयविषये चरितार्थमित्युच्यते तावतापि विस्तुवति:। यस्मादेकेनापि चातुर्गुण्यमित्यादि चतुर्भिः सममित्यन्तया परि-

गुडूच्यादिघृतानि—

गुडूच्याः क्वाथकल्काभ्यां त्रिफलाया वृषस्य च ।
मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥ १९४ ।
ज्वरे पेयाः कषायाश्च सर्पिः क्षीरं विरेचनम् ।

---

भाषयो द्रवचतुष्टयविषये तावन्मिलित्वा चातुर्गुण्य सिद्धमेव। तदिदानीं प्रत्ये-कं स्नेहसमत्वेन साध्यताम्, अर्वाक् स्यात्तु चतुर्गुणमिति वचनेन साध्यतामिति। अन्ये पुनरमर्थैवानुपपत्त्या चतु प्रभृतीनि पठन्ति। श्रीकण्ठोऽपि गुड्याधिक-परिभाषायामस्या चतु.प्रभृतीति पाठमेव स्वीकृतवान् ॥ १९३ ॥

गडूच्या इत्यादि।—वाग्भटस्य। गुडूच्यादीनां पञ्चानां पृथक् पृथक् क्वा-कल्काभ्यां सिद्धानि पञ्चघृतानि बोध्यानि ॥ १९४ ॥

अथ पेयादिकं यदिहोक्तं तद्याध्यवच्छिन्नकालविशेषापेक्षमिति प्रतिपाद-क्षीरादिकमभिधातुं पीठिकां रचयति ज्वरे पेया इत्यादि।—अत्र पेया-कषा-सर्पि-क्षीर विरेचनानामुत्सर्गविधया ज्वराहादारभ्य षडहे यथाक्रम देयत्वमुक्त-तेन "वमित लङ्घित काले यवागूभिरुपाचरेत्" इत्यादि विशेषवचनात् लङ्घिता-षड्हातिक्रमेऽपि यत् पेयादिदानमुक्त तन्न विरोधमावहति, सामान्यविधे विशे-विधिना बाधमस्य सर्वत्रैवानुमतत्वात्। ननु पेयादिप्रयोगे "यावज्ज्वर-मृदुभावात् षडहं वा विचक्षणः" इत्यादिना षडहं यावत यवागूदा-चरकेणोक्तं, तथा अत्रापि षडहे पेयादानमुक्तम्, तदय षडहः ज्वरोत्पाददिनं गृहीत्वा भवतु लङ्घनविषयदिनं त्यक्त्वा वा? नाद्य, अनशन-लङ्घनवैयर्थ्यात्। लङ्घन ह्याद्य एवोपक्रम। यदुक्त "ज्वरे लङ्घनमेवादौ" इति नापि द्वितीय., "ज्वरित षडहेऽतीते लघ्वन्नप्रतिभोजित" ज्वरादनादारभ्याष्ट-पाचन शमनीयं वा पाययेदित्युक्तत्वात् ज्वरदिनस्य कोऽडीकृत्यैवाष्टाह, यदु-"अष्टाहो निरामज्वरलक्षणम्" इति। अत्राहुः ज्वरोत्पाददिन गृहीत्वैवाष्टा-प्रत्येतव्यः। "यावज्ज्वरमृदूभावात् षडहं वा विचक्षणः" इत्यनेनापि ज्वरोत्पा-दिनमारभ्यैव षडहपर्यन्तं पेयाप्रयोग उच्यते। पेया हि ज्वरे प्राधान्येन दो-पाचनार्थं क्रियते; यदुक्तं "लङ्घन स्वेदनं कालो यवाग्वस्तिक्तको रसः। पा-नान्यविपक्वानां दोषाणां तरुणे ज्वरे" इति न तु यस्मिन् षडहे पेया, तस्मि-षडहे लङ्घनादिकमपीति। लङ्घनादिभिर्निरवकाशतया पेया षडहस्य निर्विषय-

षड़हे षड़हे देयं कालं वीक्ष्यामयस्य च॥ १९५॥

---

ति वाच्यम्, तस्य वातज्वरविषयत्वात। वातज्वरी ह्यलङ्घनीय। यदुक्त "क्षते
रात क्षयानिलभयक्रोधकामशोकश्रमोद्भवात्" इति तेनालङ्घनीये वातज्वरे पेया
ग्रमेव षडह व्याप्नोति। एकद्वित्रिदिन लङ्घिते पेया न दोषपाचकार्थं क्रियते।
थेऽपि ज्वरे पञ्चचतुस्त्रिदिन यावत् पेयादिकर्मवेति अतो निर्विषयत्वम्? पेया
हस्य यत्र तु दोषाणामतिसामतया सन्निपातज्वरे वा लङ्घनमेव षड्रात्रातिक्रमेणापि
यते। तत्र प्रादेशिके विधौ पेयाया षड्रात्रनियम औत्सर्गिक प्रवर्त्तते। ननु
दोषपाचनार्थं क्रियते, तर्हि अतिलङ्घिते पेया कथ क्रियते? लङ्घनेनैव दोष-
कसिद्धत्वात्। नैवम्, अतिलङ्घिते पेया न दोषपाचनार्थं क्रियते किं तर्हि
पवासक्षीणाग्निसन्धुक्षणाय। तत्राग्निसन्धुक्षणे जात पुनरौषधपानमेव भवति।
रे पेया, कषायाश्चेत्यादावपि समानकार्य्याणा लङ्घनादीनामुपलक्षणभूता पेया।
पेया यत्र प्रतिषिद्धा मद्योत्थे ज्वरादौ तर्पणक्रमेणापि षडहो ग्राह्यः। तत्र
मषडहे उत्सर्गितलङ्घनादि पाचन कार्य्यमिति पेया षडहे देयेति वचनेनोच्यते,
ायषडहोऽपि ज्वरोत्पादात सप्तमदिन परित्यज्याष्टमाहमारभ्यैव ज्ञेया। सप्तमे
स्य तरुणत्वेन कषायपाननिषेधात्, यत् तु हारीते लङ्घनोष्णोदकमुस्तादिषड्ङ्ग-
जलपानीयपानपेयाविधानान्तरमुक्तम् "एता क्रिया प्रयुञ्जीत षड्रात्र सप्तमे-
न। पिबेत् कषायसयोगान् ज्वरघ्नान् साधुसाधितान्" इति, तथा खरनादे-
पि "लङ्घितालङ्घित तस्माद् वमित वा ज्वरार्दितम्। तत्सात्म्यत्वादतस्ताभि-
ी ज्वरमुपाचरेत्" इति यवागूभिर्यथादोषमित्यादि तर्पणादिक्रमकमभिधायोक्तम्
ति षड्रात्रिक: प्रोक्तो नवज्वरहितो विधि। तत. पर पाचनीय शमन वा ज्वरे
म्" इति, तदपि प्रागुक्तरीत्या अष्टाह एव कषायपानविधायकमिति प्रागेव
पादितम्। वस्तुतस्तु सप्तमाष्टमाहकषायपानविधायकाना वचनानामदूरान्तर-
 एव न परस्परविरोध इत्युक्तम्। एतन्मतेऽप्यनुद्भूतसामतायां सप्तमदिन
कषायपानम्। उद्भूतसामतायान्तु अष्टमेऽहनि इति व्यवस्था। तेनैतस्मिन्
व्याने हारीतखरनादवचन यथाश्रुतमेव सङ्गच्छते। तथा ज्वरे पेया: कषाया-
ादिनापि पेया षडहानन्तरमेव सप्तमे दिने यत कषायपानमुक्त तदप्युद्भूत
ताभिप्रायेणेति न विरोधमावहति। कालं वीक्ष्यामयस्य चेति ज्वरलक्षणस्या-
स्यावस्थारूप कालं वीक्ष्य षडहे यथाक्रमं पेयादि देयमित्यर्थ.॥ १९५॥

जीर्णज्वरे कफे क्षीणे क्षीरं स्यादमृतोपमम्।
तदेव तरुणे पीतं विषवद्धन्ति मानवम्॥ १९६॥
कासाच्छ्वासात् शिरःशूलात् पार्श्वशूलात् सपीनसात्।
मुच्यते ज्वरितः पीत्वा पञ्चमूलीशृतं पयः॥ १९७॥
द्रव्यादष्टगुणं क्षीरं क्षीरात् तोयं चतुर्गुणम्।
क्षीरावशेषः कर्त्तव्यः क्षीरपाके त्वयं विधिः॥ १९८॥
त्रिकण्टकबलाव्याघ्रगुड़नागरसाधितम्।
वर्चो मूत्रविबन्धघ्नं शोथज्वरहरं पयः॥ १९९॥
वृश्चीरविल्ववर्षाभूपयश्चोदकमेव च।
पचेत् क्षीरावशिष्टन्तु तद्धि सर्वज्वरापहम्॥ २००॥
शीतं वोष्णं ज्वरे क्षीरं यथास्वैरौषधैर्युतम्॥ २०१॥
एरण्डमूलसिद्धं वा ज्वरे सपरिकर्त्तिके॥ २०२॥
ज्वरिभ्यो बहुदोषेभ्य ऊर्द्ध्वञ्चाधश्च बुद्धिमान्।
दद्यात् संशोधनं काले कल्पे यदुपदेक्ष्यते॥ २०३॥

---

क्षीरपानावस्थामाह जीर्णज्वरे इत्यादि।—कफे क्षीणे इति, कफक्षयात् वा पित्तोत्तरतायां क्षीरममृतायते इत्यर्थः। यदुक्तं "दाहतृष्णापरीतस्य वातपित्तो ज्वरम्। बन्धप्रच्युतदोषं वा निरामं पयसा जयेत्" इति॥ १९६॥

कासादित्यादि।—पञ्चमूली स्वल्पा वातपित्तहन्तृत्वात्॥ १९७॥

क्षीरसाधनपरिभाषामाह द्रव्यादित्यादि।—त्रिकण्टकेत्यादौ गुड़ः प्रक्षेप गुडपाकस्य निष्प्रयोजनत्वादित्याह॥ १९८॥ १९९॥

वृश्चीरेत्यादि।—वृश्चीरः श्वेतपुनर्नवा, वर्षाभूः रक्तपुनर्नवेति। क्षीरोदकयोः प्रधाना पूर्ववदेव मानम्॥ २००॥

शीतं वेत्यादि।—विकल्प इच्छाविशेषकृतः, किंवा वाते उष्णं, पित्ते शीतमिति॥ २०१॥

एरण्डेत्यादि।—अत्र विल्वफलसिद्धं दुग्धमपि बोध्यं चरकोक्तत्वात्। कर्त्तनवत् पीड़ा परिकर्त्तिका॥ २०२॥

संशोधनावस्थामाह ज्वरिभ्य इत्यादि।—बहुदोषेभ्य इति अल्पदोषेषु शमी

मदनं पिप्पलीभिर्वा कलिङ्गैर्मधुकेन वा ।
युक्तमुष्णाम्बुना पीतं वमनं ज्वरशान्तये ॥ २०४ ॥
आरग्वधं वा पयसा मृद्वीकानां रसेन वा ।
त्रिवृतां त्रायमाणां वा पयसा ज्वरितः पिबेत् ॥ २०५ ॥
ज्वरक्षीणस्य न हितं वमनं न विरेचनम् ।
कामन्तु पयसा तस्य निरूहैर्वा हरेन्मलान् ॥
प्रयोजयेज्ज्वरहरान् निरूहान् सानुवासनान् ।
पक्वाशयगते दोषे वक्ष्यन्ते ये च सिद्धिषु ॥ २०६ ॥
गौरवे शिरसः शूले विबद्धेष्विन्द्रियेषु च ।
जीर्णज्वरे रुचिकरं दद्याच्छीर्षविरेचनम् ॥ २०७ ॥
अभ्यङ्गांश्च प्रदेहांश्च ससंस्नेहान् सानुवासनान् ।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥
तैराशु प्रशमं याति बहिर्मार्गगतो ज्वरः ।
लभन्ते सुखमङ्गानि बलं वर्णश्च वर्द्धते ॥ २०८ ॥

---

घार्थमुक्तम् । काल इति यथोक्तवमन-विरेचनयोग्यज्वरावस्थायाम् । कल्प
कल्पस्थाने ग्रन्थे यदुपदिश्यते तद्बोध्यम् ॥ २०३ ॥
वमनयोगत्रयमाह मदनमित्यादि ।—मदन पिप्पलीयुक्त कफे । कलि[illegible]्
व. तद्युक्त पित्तकफे, यष्टिमधुयुक्तन्तु दाहप्राय इत्याहुः ॥ २०४ ॥
चतुरो विरेचनयोगानाह आरग्वधमित्यादि ।—अत्र चरके वाग्भटे च त्रिवृता-
त्रिफलापाठो दृश्यते, टीकाकारैश्च त्रिफलेव व्याख्यायते ॥ २०५ ॥
ज्वरक्षीणस्येत्यादि ।—स्पष्टम् । सिद्धिषु सिद्धिस्थानोक्ताध्यायेषु ॥ २०६ ॥
स्यावस्थामाह गौरव इत्यादि ।—विबद्धेष्विति स्वविषयग्रहणासमर्थेषु ॥ २०७ ॥
जीर्णज्वरेऽभ्यङ्गादीनाह अभ्यङ्गानित्यादि ।—विभज्येति शीतोष्णसमुत्थज्वर-
गेनेत्यर्थः तेन उष्णोत्थे जीर्णज्वरे शीतद्रव्यकृता प्रदेहादयः ; शीतोत्थे तु
व्यकृता देया इत्यर्थः बहिर्मार्गस्त्वगादि । उक्त हि "शाखा रक्तादयो धातव
च स बाह्यो रोगमार्गः" इति ॥ २०८ ॥

षट्कट्वरतैलम्—

सुवर्चिकानागरकुष्ठमूर्वालाक्षानिशालोहितयष्टिकाभिः।
तैलं ज्वरेषड्गुणकट्वसिद्धमभ्यञ्जनाच्छीतविदाहनुत् स्यात्॥
दध्नः ससारकस्यात्र तक्रं कट्वरमिष्यते।
घृतवत् तैलपाकोऽपि तैले फेनोऽधिकः परः॥ २०९॥

अङ्गारकं तैलम्—

मूर्वा लाक्षा दरिद्रे द्वे मञ्जिष्ठा सेन्द्रवारुणी।
वृहती सैन्धवं कुष्ठं रास्ना मांसी शतावरी॥
आरनालाढ़केनैव तैलप्रस्थं विपाचयेत्।
तैलमङ्गारकं नाम सर्वज्वरविमोक्षणम्॥ २१०॥

लाक्षादितैलम्—

लाक्षाहरिद्रामञ्जिष्ठाकल्कैस्तैलं विपाचयेत्।
षड्गुणेनारनालेन दाहशीतज्वरापहम्॥ २११॥
यवचूर्णार्द्धकुड़वं मञ्जिष्ठार्द्धपलेन तु।
तैलप्रस्थः शतगुणे काञ्जिके साधितो जयेत्॥
ज्वरं दाहं महावेगमङ्गानाञ्च प्रहर्षनुत्॥ २१२॥
सर्जकाञ्जिकसंसिद्धं तैलं शीताम्बुमर्दितम्।

---

सुवर्चिकेत्यादि।—'सुवर्चिका सर्जिकाक्षारः, लोहितयष्टिका मञ्जिष्ठा, सुश्रु[illegible] वृद्धवाग्भटादिबहुतरतन्त्रसंवादात्। अन्ये तु लोहितं चन्दनम्, यष्टिका मञ्जि[illegible] विदेहसंवादादित्याहुः। व्यवहारस्तु पूर्वव्याख्ययैव। शीतविदाहहन्तृत्वञ्च योग[illegible] अचिन्त्यशक्तित्वात् तैलपाके विशेषं स्मारयति घृतवदित्यादि॥ २०९॥

मूर्वेत्यादि।—इन्द्रवारुणी गोरक्षकर्कटी; अङ्गारको मङ्गलः, तत्तुल्यत्वादङ्गा[illegible] रकसंज्ञा॥ २१०॥

लाक्षादितैलं स्पष्टम्।—अत्रापि दाहशीतहरत्वं प्रभावात्॥ २११॥

यवेत्यादि।—मञ्जिष्ठा अर्द्धपलेनेत्यत्र द्विपलेनेति न पाठः सुश्रुतचन्द्रा[illegible] अर्द्धपलिकेति पाठात्॥ २१२॥

ज्वरदाहापहं लेपात् सद्योवातास्रदाहनुत् ॥ २१३ ॥
चन्दनाद्यमगुर्वाद्यं तैलं चरककीर्त्तितम् ।
तथा नारायणं तैलं जीर्णज्वरहरं परम् ॥ २१४ ॥
अभिघातज्वरो न स्यात् पानाभ्यङ्गेन सर्पिषः ।
क्षतानां व्रणितानाञ्च क्षतव्रणचिकित्सया ॥ २१५ ॥

आगन्तुज्वरचिकित्सामाह ।

ओषधिगन्धविषजौ विषपीतप्रसाधनम् ।
जयेत् कषायैर्मतिमान् सर्वगन्धकृतैस्तथा ॥ २१६ ॥
अभिचाराभिशापोत्थौ ज्वरौ होमादिना जयेत् ।
दानस्वस्त्ययनातिथ्यैरुत्पातग्रहपीड़जौ ॥ २१७ ॥

क्रोधकामादिज्वरचिकित्सामाह ।

क्रोधजे पित्तजित् काम्या अर्थाः सद्वाक्यमेव च ।

---

प्रदेहमाह सर्ज्ज इत्यादि ।—सर्ज्जो धूनकः कल्कः, काञ्जिकं षड्गुणम्, सिद्ध' क्रम । ततः शीताम्बुमर्दितम् शीतलजलेन तैलं सम्मर्द्य गाढाभ्यङ्गः कार्य्यः ॥२१३॥

नारायणतैलं वातव्याधौ वक्ष्यमाणम् ॥ २१४ ॥

अभिघातेत्यादि ।—न स्यात् न भवेत् शाम्यतीत्यर्थः । क्षतानामित्युरःक्षता- ाम् । अत्रापि ज्वरो न स्यादिति योज्यम् ॥ २१५ ॥

औषधीत्यादि ।—सुश्रुतस्य । प्रसाधनं चिकित्सितम् । विषपीतप्रसाधनैरिति ाठे, विषपीतस्य यानि चिकित्सितानि तैरित्यर्थः । सर्वगन्धकृतैरिति सर्वगन्धः ाश्रुत एलादिगणः, स एवात्र विषहरत्वादुचितः, न तु "चातुर्जातककर्पूरकक्को- ागरुशिह्लकम् । लवङ्गसहितञ्चैव सर्वगन्धं विनिर्दिशेत्" इति निर्घण्टकारोक्तो ाह्यः । तस्योद्वर्त्तनादिमात्रविषयत्वात् ॥ २१६ ॥

अभिचारेत्यादि ।—सुश्रुतस्य । अभिचारोऽथर्ववेदोक्तः श्येनादियागः । अभि- ापो गुर्वादीनामनिष्टाभिशंसनम् । होमादिनेत्यादिशब्दात् प्रायश्चित्तबलिमङ्गला- ायो गृह्यन्ते । उत्पातो निर्घातादिः । ग्रहपीड़जमिति ग्रहपीड़ाजन्यम् "ङ्यापोः ाञ्ज्ञाच्छन्दसोर्बहुलम्" इति पीड़ाशब्दस्याकारस्य ह्रस्वत्वम् । सुश्रुते तु "उत्पात- ग्रहपीड़ितम्" इति पाठो दृश्यते ॥ २१७ ॥

पाठेन्द्रयवभूनिम्बमुस्तपर्पटकामृताः ।
जयन्त्यामममतीसारं सज्वरं समहौषधाः ॥ ३ ॥

नागरादिः—नागरातिविषामुस्तभूनिम्बामृतवत्सकैः ।
सर्वज्वरहरः क्वाथः सर्वातीसारनाशनः ॥ ४ ॥

ह्रीवेरादिः—ह्रीवेरातिविषामुस्तविल्वधान्यकनागरैः ।
पिबेत् पिच्छाविबन्धघ्नं शूलदोषामपाचनम् ॥
सरक्तं हन्त्यतीसारं सज्वरं वाथ विज्वरम् ॥ ५ ॥

गुडूच्यादिः—गुडूच्यतिविषाधान्यशुण्ठीविल्वाब्दबालकैः ।
पाठाभूनिम्बकुटजचन्दनोशीरपद्मकैः ॥
कषायः शीतलः पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दिपिपासादाहनाशनः ॥ ६ ॥

उशीरादिः—उशीरं बालकं मुस्तं धन्याकं विश्वभेषजम् ।
समङ्गा धातकी लोध्रं विल्वं दीपनपाचनम् ॥
हन्त्यरोचकपिच्छामं विबन्धं सातिवेदनम् ।
सशोणितमतीसारं सज्वरं वाथ विज्वरम् ॥ ७ ॥

---

त्यादि ।—सुश्रुते त्वस्मिन् योगे बालकमपि दृश्यते, यथा "पृश्निपर्णीबलाविश्वधान्यकोत्पलबालकैः । सनागरैः पिबन् पेया साधितामुदरामयी" ॥ १ । २ ॥

पाठेत्यादि प्रयोगः क्वाथेन ॥ ३ ॥

नागरेत्यादि ।—वत्सक इन्द्रयवः सिद्धसारे "छिन्नाभूनिम्बशुण्ठ्यब्दकलिङ्गातिविषाकृतः" इत्युक्तत्वात् ॥ ४ ॥

ह्रीवेरादिर्वातश्लेष्मणीति वृद्धाः । योगोऽयमवचारणयापि । विल्वं विल्वशलाटु ग्राहकत्वात् ; एवं वक्ष्यमाणेषु ॥ ५ ॥

गुडूच्यादौ कुटजेन तत्फलं लघुत्वात् पाचकत्वाच्च । अयं योगः पित्तश्लेष्मणीत्यपि व्याचक्षते ॥ ६ ॥

उशीरेत्यादि ।—यद्यपि समङ्गाशब्देन मञ्जिष्ठाप्युच्यते, तथापि वराहक्रान्तां व्यवहरन्ति वृद्धा. ॥ ७ ॥

पञ्चमूल्यादिः—पञ्चमूलीबलाबिल्वगुडूचीमुस्तनागरैः।
पाठाभूनिम्बह्रीबेरकुटजत्वक्फलैः शृतम्॥
हन्ति सर्वानतीसारान् ज्वरदोषं वमिं तथा।
सशूलोपद्रवं श्वासं कासं हन्यात् सुदारुणम्॥ ८॥
कलिङ्गातिविषाशुण्ठीकिराताम्बुयवासकम्।
ज्वरातीसारसन्तापं नाशयेदविकल्पतः॥ ९॥
वत्सकस्य फलं दारुरोहिणी गजपिप्पली।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका॥
द्वावप्येता सिद्धयोगौ श्लोकार्द्धनाभिभाषितौ।
ज्वरातिसारशमनौ विशेषाद्दाहनाशनौ॥ १०॥
नागरामृतभूनिम्बबिल्वबालकवत्सकैः।
समुस्तातिविषोशीरैर्ज्वरातीसारहृज्जलम्॥ ११॥
मुस्तकबिल्वातिविषापाठाभूनिम्बवत्सकैः क्वाथः।
मकरन्दगर्भयुक्तो ज्वरातीसारी जयेद् घोरी॥ १२॥
घनजलपाठातिविषापथ्योत्पलधान्यरोहिणीविश्वैः।
सेन्द्रयवैः कृतमम्भः सातीसारं ज्वरं जयति॥ १३॥

कलिङ्गाद्यगुडिका—

कलिङ्गबिल्वजम्ब्वाम्रकपित्थं सरसाञ्जनम्।
लाक्षाहरिद्रे ह्रीबेरं कट्फलं शुकनासिकाम्।
लोध्रं मोचरसं शङ्खं धातकीवटशुङ्गकम्।

---

पञ्चमूल्यादौ यद्यपि "पञ्चमूलीति सामान्याद् ग्राह्या पित्ते कनीयसी। महती पञ्चमूलीति वातश्लेष्माधिके तथा" इति चन्द्रनीतम्, तथापि स्वल्पपञ्चमूलैव व्यवहरन्ति वृद्धाः॥ ८॥

कलिङ्गेत्यादि यमानिकान्तं योगत्रयं पित्तोत्तरे इत्याहुः। नागरामृतभूनिम्बेत्यादि जयतीत्यन्तं स्पष्टम्॥ ९—१३॥

कलिङ्गेत्यादौ हारीतचन्द्राटसंवादात् कलिङ्गस्थाने कटुङ्गं पठन्ति, कटुङ्गश्च

पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्।
छायाशुष्कान् पिबेच्छीघ्रं ज्वरातीसारशान्तये।
रक्तप्रमादनाश्चैते शूलातीसारनाशनाः॥ १४ ॥
उत्पलं दाडिमत्वक् च पद्मकेशरमेव च।
पिबेत् तण्डुलतोयेन ज्वरातीसारनाशनम्॥ १५ ॥

व्योषाद्यचूर्णम्—

व्योषं वत्सकबीजञ्च निम्बभूनिम्बमार्कवम्।
चित्रकं रोहिणीं पाठां दार्वीमतिविषां समाम्॥
श्लक्ष्णचूर्णीकृतान् सर्वांस्तत्तुल्यां वत्सकत्वचम्।
सर्वमेकत्र संयुज्य प्रपिबेत् तण्डुलाम्बुना॥
सक्षौद्रं वा लिहेदेतत् पाचनं ग्राहि भेषजम्।
तृष्णारुचिप्रशमनं ज्वरातीसारनाशनम्॥
कामलां ग्रहणीदोषान् गुल्मं प्लीहानमेव च।
प्रमेहं पाण्डुरोगञ्च श्वयथुञ्च विनाशयेत्॥ १६ ॥
दशमूलीकषायेण विश्वमक्षसमं पिबेत्।
ज्वरे चैवातिसारे च सशोथे ग्रहणीगदे॥ १७ ॥

---

श्योणाक। जम्ब्वाम्रफलयोरस्थि ग्राह्यम्। दरिद्रे इति हरिद्राद्वयम्। तण्डुलोदकञ्च "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्मणि" इत्यनेन ग्राह्यम्। शुकनासिका चर्मकारवज्क॥ १४ ॥

उत्पलेत्यादौ—दाडिमफलस्य त्वक्, "फलं स्याद्दाडिमादीनाम्" इति वचनात्। एवमन्यत्रापि बोध्यम्। अन्ये वृक्षत्वचमाहुः। पद्मस्य केशरः किञ्जल्कम्। सरक्तपित्तोत्तरे योगोऽयमित्याहुः॥ १५ ॥

व्योषादौ तत्तुल्यां वत्सकत्वचमिति मिलितव्योषादिचूर्णतुल्याम्॥ १६ ॥

दशमूलीत्यादि।—अत्र प्रक्षेप्यस्य शुण्ठीचूर्णस्य यत् कर्षमानत्वमुक्तम्, तत् क्वाथ्यस्य दशमूलस्य पलद्वयात्मकमात्रामपेक्ष्य, तेन मध्यमाधममात्रानुसारेण शुण्ठी-

विड़ङ्गातिविषामुस्तं दारुपाठाकलिङ्गकम् ।
मरिचेन समायुक्तं शोथातिसारनाशनम् ॥ १८ ॥
किराताब्दामृताविश्वचन्दनोदीच्यवत्सकैः ।
शोथातिसारशमनं विशेषाज्ज्वरनाशनम् ॥ १९ ॥
किराताब्दामृतोदीच्यमुस्तचन्दनधान्यकैः ।
शोथातिसारहृड्दाहशमनो ज्वरनाशनः ॥ २० ॥

इति ज्वरातिसारचिकित्सा ।

---

र्णस्य ह्रासोऽपि बोध्यः । तेनात्र प्रक्षेपः पादिकः क्वाथ्यादित्येव परिभाषा प्रवर्त्तते । न तु पातव्यश्च चतुर्द्रव इति वचनाद् विश्वचूर्णापेक्षया दशमूलीक्वाथश्चतुर्गुण कार्य्यः । यतः विश्वचूर्णापेक्षया दशमूलस्य पाचनदीपनत्वेन यौगिकत्वात् प्राधान्यम् । अपिच क्वाथकरणं हि क्वाथ्यमानापेक्षम्, क्वाथ्यमानञ्च उत्तमपुरुषाद्यपेक्षम् । अतस्तत्र पलविकर्षार्द्धपलमानमुत्सर्गतो व्यवस्थितमस्त्येव, तदपेक्षस्य च क्वाथ्यस्य उत्तमपुरुषाद्यपेक्षया व्याधिनिवृत्त्यै प्रयुज्यमानस्य न्यूनत्वकरणे भेषजस्याल्पत्वदोषाद् व्याधिनिवृत्तिरेव न स्यादिति विपक्षे दोषदर्शनाद् यथावस्थितचतुर्भागावशिष्टक्वाथप्रयोगाच्च क्वाथस्यैव प्रधानता । ततश्च यदि पातव्यश्च चतुर्द्रव इत्यनुसाराद् विश्वचूर्णापेक्षया दशमूलीक्वाथश्चतुर्गुणो गृह्यते, तदा प्रधानस्य क्वाथस्य न्यूनता स्यात्, चतुर्भागावशिष्टक्वाथानुसारेण वा यदि चतुर्भागं चूर्णं गृह्यते, तदा चूर्णबाहुल्यं स्यादिति । तेन यत्र क्वाथेन चूर्णपानम्, तत्र प्रक्षेपः पादिकः क्वाथ्यादित्यस्यैव विषयः, न तु पातव्यश्च चतुर्द्रव इत्यस्येति सिद्धः । एवमन्यत्रापि क्वाथेन चूर्णस्य कल्कस्य वा पाने क्वाथस्य प्राधान्यमनुमन्तव्यम् । अतएव रुचकादिचूर्णे वृन्दोऽप्याह "क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता । प्रवर्त्तते न तेनात्र चूर्णापेक्षी चतुर्द्रवः" इति । चूर्णापेक्षी चूर्णमानापेक्षीत्यर्थः ॥ १७ । १८ ॥

किरातेत्यादि स्पष्टम् ॥ १९ । २० ॥

इति ज्वरातीसारचिकित्साविवृतिः ।

—○○—

## अथातीसारचिकित्सा ।

आमपक्वक्रमं हित्वा नातिसारे क्रिया यतः ।
अतः सर्वातिसारेषु ज्ञेयं पक्वामलक्षणम् ॥ १ ॥
मज्जत्यामा गुरुत्वाद्विट् पक्वा तूत्प्लवते जले ।
विनातिद्रवसङ्घातशैत्यश्लेष्मप्रदूषणात् ॥ २ ॥
शकृद्दुर्गन्धि साटोपविष्टम्भार्त्तिप्रसेकिनः ।
विपरीतं निरामन्तु कफात् पक्वञ्च मज्जति ॥ ३ ॥
आमे विलङ्घनं शस्तमादौ पाचनमेव च ।
कार्य्यञ्चानशनस्यान्ते प्रदेयं लघुभोजनम् ॥ ४ ॥
लङ्घनमेकं मुक्त्वा न चान्यदस्तीह भेषजं बलिनः ।
समुदीर्णं दोषचयं शमयति तत् पाचयत्यपि च ॥ ५ ॥

---

ज्वरोपद्रवस्यातीसारस्य चिकित्सामभिधाय सम्प्रति स्वतन्त्रस्यातीसारस्य चिकित्सामाह आमेत्यादि ।—सुश्रुतस्य । क्रिया चिकित्सा ॥ १ ॥

आमपक्वलक्षणमाह मज्जतीत्यादि ।—चरकस्य । आमेति आमान्विता वि जले मज्जति । गुरुत्वादिति आमाहितगुरुत्वात् । पक्वेति निरामा ; प्लवते निरा त्वेन लघुत्वादित्यर्थः । द्वयोरप्यामपक्वलक्षणयोरपवादमाह विनातिद्रवेत्यादि । अतिद्रवत्वात् आमापि प्लवते, तथा अतिसङ्घातात् अतिकाठिन्यात् पक्वापि मज्जति तथा शैत्यसहितश्लेष्मप्रदूषणात् कफसम्बन्धकृतगौरवेण पक्वापि मज्जति । शैत्यस्था श्वैत्यपाठे श्वेतवर्णता । एतेनातिद्रवत्वादिकं विना मज्जनप्लवने सामनिरामत्व तया ज्ञेये इत्यर्थः ॥ २ ॥

सामत्वनिरामत्वयोः सम्यग्ज्ञानार्थमपरमपि लक्षणमाह शकृदित्यादि ।—आटो पविष्टम्भाविवार्त्तो तत्सहितम् । किं वा आर्त्तिः शूलम्, आटोपो रुजापूर्वक उद क्षोभः ; विष्टम्भः सतोदशूलमलाप्रवृत्तिः ; प्रसेकिनः कफप्रसेकिनः, किं वा प्रसे स्तोकस्तोकमलसरणम् । कफात् पक्वञ्च मज्जतीत्यस्य तन्त्रान्तरीयवचनत्वान्न पौ रुक्त्यमाशङ्कनीयम् । इह तु सम्पूर्णश्लोकानुरोधात् पठितम् ॥ ३ ॥

आम इत्यादि ।—प्रद्रवमिति प्रकृष्टद्रवम् ; प्रकर्षश्चात्र शास्त्रविहितत्वेन ज्ञेय तेनाशास्त्रविहितद्रवान्ननिषेधार्थम्, विहितलाजमण्डादिविधानार्थञ्च प्रशब्दोपादा

ह्रीवेरशृङ्गवेराभ्यां मुस्तपर्पटकेन वा।
मुस्तोदीच्यशृतं तोयं देयं वापि पिपासवे॥
युक्तेऽन्नकाले क्षुत्क्षामं लघून्यन्नानि भोजयेत्॥ ६॥
औषधसिद्धाः पेया लाजानां शक्तवोऽतिसारहिताः।
वस्त्रप्रस्रुतमण्डः पेया च मसूरयूषश्च॥ ७॥
गुर्वी पिण्डी खरात्यर्थं लघ्वी सैव विपर्य्ययात्।
शक्तूनामाशु जीर्य्येत मृदुत्वादवलेहिका॥ ८॥

बृहच्छालपर्ण्यादिः—

शालपर्णी पृश्निपर्णी बृहती कण्टकारिका।
बलाश्वदंष्ट्राबिल्वानि पाठानागरधान्यकम्॥
एतदाहारसंयोगे हितं सर्वातिसारिणाम्॥ ९॥

---

म। अत "वर्जयेद्द्विदलं शूली कुष्ठी मांसं ज्वरी स्त्रियम्। द्रवमन्नमतीसारी ष्व तरुणज्वरी" इत्यादि वचनेन सहास्य न विरोध। अन्ये तु प्रशस्तद्रवमिति ख्याय विरोधं परिहरन्ति। अपरे तु निपातस्यानेकार्थत्वात् प्रशब्दस्य ईषदर्थता ख्यानयन्ति। अन्ये तु केवलद्रवस्यैव निषेधो न तु लाजमण्डादेरित्याहुः॥ ४॥

लङ्घनपाचनयोर्मध्ये लङ्घनस्य प्राधान्यमाह लङ्घनमित्यादि।—स्पष्टम्॥ ५॥

ह्रीवेरेत्यादि योगद्वयं षडङ्गविधिना शृतं बोध्यम्। उदीच्यं बालकम्॥६॥

प्रद्रव लघुभोजनमिति यदुक्तं तदेव दर्शयति औषधसिद्धा इत्यादि।—औषध त्यमाणशालपर्ण्यादि-धान्यपञ्चकादिकम्। पेया चेति पेया च वस्त्रप्रस्रुतेत्यर्थः। एवोक्तम् "वस्त्रस्रुता यवागूर्वाऽप्रस्रुता तच्छ्रभक्तकम्" इति॥ ७॥

गुर्वीत्यादि।—अत्यर्थं खरा कठिना शक्तुपिण्डिका गुर्वी स्यात्। सैव विप यादिति मृद्वी सा लघ्वी भवति। अवलेहिका अवलेहयोग्या पिण्डी॥ ८॥

बृहच्छालपर्ण्यादौ—बिल्वानि बिल्वशलाटवः संग्राहित्वात्। यदुक्तं "कफा- लहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम्। कटुतिक्तकषायोष्णं बिल्वमाममुदा- तम्" इति। एवं सर्वत्र स्तम्भनयोगे बोध्यम्। केचित्तु बिल्वस्य मूलं ज्ञेयम्, बिल्वमूलं मरुत्छर्दिघ्नं न तु पित्तकृत्" इति गुणपाठात्। आहारसंयोग ते आहारस्य संयोजने संस्कार इति यावत्। सर्वातिसारिणामपि आमपच्यमान-

### स्वल्पशालपर्ण्यादिः—

शालपर्णीबलाबिल्वैः पृश्निपर्ण्या च साधिता ।
दाड़िमाम्ला हिता पेया पित्तश्लेष्मातिसारिणाम् ॥ १० ॥
यवागूमुपभुञ्जानो न तु व्यञ्जनमाचरेत् ।
शाकमांसफलैर्युक्ता यवाग्वोऽम्लाश्च दुर्जराः ॥ ११ ॥
धान्यपञ्चकसंसिद्धो धान्यविश्वकृतोऽथवा ।
आहारो भिषजा योज्यो वातश्लेष्मातिसारिणाम् ॥ १२ ॥
वातपित्ते पञ्चमूल्या कफे वा पञ्चकोलकैः ॥ १३ ॥
धान्योदीच्यशृतं तोयं तृष्णादाहातिसारनुत् ।
आभ्यामेव सपाठाभ्यां सिद्धमाहारमाचरेत् ॥ १४ ॥
दोषाः सन्निचिता यस्य विदग्धाहारमूर्च्छिताः ।
अतिसाराय कल्पन्ते भूयस्तान् सम्प्रवर्त्तयेत् ॥ १५ ॥
न तु सङ्ग्रहणं दद्यात् पूर्वमामातिसारिणे ।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून् ॥
शोथपाण्ड्वामयप्लीहकुष्ठगुल्मोदरज्वरान् ।

---

पक्कातिसारिणाम्, प्रत्येकद्वन्द्वसन्निपातातिसारिणा वा ॥ ९ ॥

स्वल्पशालपर्ण्यादि ।—वाग्भटस्य ॥ १० ॥

यवाग्वोऽम्ला इति अम्ला अम्लविपाका ॥ ११ ॥

धान्यपञ्चकेत्यादि स्पष्टम् । वातपित्ते पञ्चमूल्या इति स्वल्पपञ्चमूल्या ॥१२ । १३॥

आभ्यामिति धान्योदीच्याभ्याम् ॥ १४ ॥

दोषा इत्यादि ।—सन्निचिता इति सञ्चय प्राप्ता. । विदग्धशब्दे मात्राविपक्काहारवाचिना चतुर्विधमप्यामविदग्धविष्टब्धरसशेषरूपमजीर्णमुच्यते । मूर्च्छिता इति वर्द्धिताः । सम्प्रवर्त्तयेदिति स्वयं प्रवर्त्तमानदोषस्य उपेक्षया प्रवर्त्तनं कारयेत "उक्तं हि तेषूपेक्षैव भेषजम्" इति, तथा स्तोकं स्तोकं विबद्ध वा विरेचनयोगेन प्रवर्त्तयेत्। अतएव वक्ष्यति स्तोकं स्तोकं विबद्ध वेत्यादि ॥ १५ ॥

न तु संग्रहणमित्यादौ—पूर्वमिति विशेषणेनोत्तरकालमामातिसारिणोऽपि अति-

तृष्णाऽऽलस्यबलाध्मानग्रहण्यर्शोगदांस्तथा ॥ १६ ॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनिस्रुतः ।
आमोऽपि स्तम्भनीयः स्यात् पाचनान्मरणं भवेत् ॥ १७ ॥
स्तोकं स्तोकं विबद्धं वा सशूलं योऽतिसार्य्यते ।
अभयापिप्पलीकल्कैः सुखोष्णैस्तं विरेचयेत् ॥ १८ ॥
धान्यपञ्चकम्—धान्यकं नागरं मुस्तं बालकं बिल्वमेव च ।
आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥
इदं धान्यचतुष्कं स्यात् पित्ते शुण्ठीं विना पुनः ॥ १९ ॥
पिप्पलीं नागरं धान्यं भूतीकञ्चाभयां वचाम् ।
ह्रीवेरभद्रमुस्तानि बिल्वं नागरधान्यकम् ॥
पृश्निपर्णी श्वदंष्ट्रा च समङ्गा कण्टकारिका ।

---

...तबहुदोषतया क्षीणधातवे संग्रहणं देयमिति दर्शयति । अतएव वक्ष्यति ...धातुबलार्त्तस्येति । अन्ये तु पूर्वं संग्रहणं न देयमिति वचनेन प्रधानमम्बष्ठा-...कुटजत्वगादिसंग्रहणं न देयमिति बोधयति; मुस्तोदीच्यादि तु पाचन...णत्र यत, पूर्वमपि देयमेवेत्याहुः ॥ १६ ॥

अवस्थायामामेऽपि संग्रहणं देयमित्याह क्षीणेत्यादि ।—पाचनादिति केवल-...नात, पाचनस्तम्भनम् हितमेव ॥ १७ ॥

विरेचनावस्थामाह स्तोकमित्यादि ।—सुश्रुतस्य । अभयापिप्पलीकल्कस्य सुखो-...ता कदुष्णयोगेन ज्ञेया ॥ १८ ॥

धान्यकमित्यादि ।—अयं योगः सामपित्ते बोध्यः । यदुक्तमायुर्वेदसारे "बिल्व-...स्य घनोदीच्य धान्यकैः क्वथितं जलम् । सामपित्तातिसारघ्नं दीपनं धान्यपञ्च-...म् ।" धान्यपञ्चकं यदुक्तं तत शुण्ठीव्यतिरेकेण कर्त्तव्यमित्यतदर्थमाह इद...न्यचतुष्कं स्यादित्यादि । भोजेऽप्युक्तं "धान्यकं बालकं मुस्तं बिल्वं पित्ते प्रयो...तम् । आमशूलविबन्धघ्नं पाचनं वह्निदीपनम्" इति । तथान्यत्राप्युक्तं "धान्यकं ...लकं मुस्तं बिल्वं पित्ते तु दीपनम् । आमशूलविबन्धघ्नं पाचनं नागरान्वितम्" ...ति ॥ १९ ॥

पिप्पलीमित्यादि । प्रमथ्यात्रयं चरकस्य । अत भूतीकं यमानी; भद्रमुस्तं

तिस्रः प्रमथ्या विहिताः श्लोकार्द्धैरतिसारिणाम् ॥
कफे पित्ते च वाते च क्रमादेताः प्रकीर्त्तिताः ।
संज्ञा प्रमथ्या ज्ञातव्या योगे पाचनदीपने ॥ २० ॥
त्र्यूषणातिविषाहिङ्गुवलासौवर्चलाभयाः ।
पीत्वोष्णेनाम्भसा हन्यादामातीसारमुद्धतम् ॥ २१ ॥
अथवा पिप्पलीमूलपिप्पलीद्वयचित्रकान् ।
सौवर्चलवचाव्योषहिङ्गुप्रतिविषाभयाः ।
पिबेत् श्लेष्मातिसारार्त्तश्चूर्णिताश्चोष्णवारिणा ॥ २२ ॥
हरिद्रादिं वचादिं वा पिबेदामेषु बुद्धिमान् ।
खड्यूषयवागूषु पिप्पल्यादिं प्रयोजयेत् ॥ २३ ॥
तक्रं कपित्थचाङ्गेरीमरिचाज्ञाजिचित्रकैः ।

---

मुस्तकमेव ; समङ्गा वराहक्रान्ता । एतास्तिस्रः प्रमथ्याः यथाक्रमं कफपित्त वात ष्विति चरकटीकाकृतो व्याचक्षते । अतस्तमेवार्थ चक्रोऽप्याह कफे पित्ते चेत्यादि। यद्यपि ह्रीवेरमित्यादि द्वितीयो योगो धान्यपञ्चकमेव, तथापि तस्यैव प्रमथ्यासंज्ञा विधानार्थं पुनश्चरकवाक्यं लिखितम्। न च वाच्यं प्रमथ्यामध्यपठितं ह्रीवेर मित्यादिकमेवास्तु, किं धान्यपञ्चकयोगस्य पृथक्कथनेन ? सत्यम् , धान्यपञ्चक संज्ञया हि शास्त्रव्यवहारः कर्त्तव्यो यथा धान्यपञ्चकमसिद्ध इत्यादि। तथा शुण्ठी रहितस्य तस्यैव धान्यचतुष्कसंज्ञयापि, अत एतद्विशेषकथनार्थमेव तस्य पृथक्कथन मिति ज्ञेयम्। संज्ञा प्रमथ्या इत्यादि।—प्रमथ्याशब्दो हि वृद्धपरम्परया पाचन दीपन-कषाये वैद्यशास्त्रे परिभाषितः श्रूयते। यथा विडङ्गकषायः शैखरिककषाय शब्देन वैद्यैरुच्यते इति ॥ २० ॥

त्र्यूषणेत्यादौ त्र्यूषणादीनां चूर्णम्। अथवेत्यादि चित्रकान्त एको योगः। सौव र्चलेत्यादौ प्रतिविषा अतिविषा। हरिद्रादिं वचादिं चाणौ सौश्रुतौ। यदाह "हरिद्रा दारुहरिद्रा कलसी कुटजबीजानि मधुकञ्चेति।" "वचा मुस्तातिविषाभया भद्र दारु नागरञ्चेति।" खडयूष इत्यादि। पिप्पल्यादिश्च सौश्रुतो गणो ज्वराधि कारे चक्रे पठितः ॥ २१—२३ ॥

सुपक्वः खडयूषोऽयमयं काम्बलिकोऽपरः।
दध्यम्लो लवणस्नेहतिलमाषसमन्वितः॥ २४॥
नागरातिविषामुस्तैरथवा धान्यनागरैः।
तृष्णातीसारशूलघ्नं पाचनं दीपनं लघु॥ २५॥
पाठावत्सकबीजानि हरीतक्यो महौषधम्।
एतदामसमुत्थानमतीसारं सवेदनम्।
कफात्मकं सपित्तञ्च वर्चो बध्नाति च ध्रुवम्॥ २६॥
पयस्युत्क्वाथ्य मुस्ता वा विंशतिं भद्रकाह्वयाः।
क्षीरावशिष्टं तत् पीतं हन्यादामं सवेदनम्॥ २७॥
पक्वोऽमकृदतीसारो ग्रहणीमार्दवाद् यदा।
प्रवर्त्तते तदा कार्य्यः क्षिप्रं साङ्ग्राहिको विधिः॥ २८॥
पञ्चमूलीबलाबिल्वधान्यकोत्पलबिल्वजाः।

---

खडयूषमाह तक्रमित्यादि।—अयञ्च यूषः "कषार्द्धं वा कणाशुण्ठीः कल्क-द्रव्यस्य वा पलम्" इत्यादिना बोध्यः। तत्र तीक्ष्णवीर्य्याणां मरीचाजाजीचित्रकाणामल्पमानत्वम्; कपित्थचाङ्गेर्य्योस्तु मध्यवीर्य्यत्वाद् बहुमानत्वम्; तक्रस्य तु प्रस्थमानत्वं कल्पनीयम्। यूषयोनित्वाच्च मुद्गोऽपि देयः। तस्यैव दध्यादियोगात् काम्बलिकसंज्ञामाह दध्यम्ल इत्यादि।—दध्यम्लेति दध्ना अम्लीकृतः॥ २४॥

नागरादौ घृतमिति शेषः। उक्तं हि चरके "नागरातिविषामुस्तक्वाथः स्यादामपाचनः" इति॥ २५॥

पाठेत्यादि।—सुश्रुतस्य। अयं योगः क्वाथेन चूर्णेन वा ज्ञेयः। यतोऽयं सुश्रुते विंशतियोगमध्ये पठितः। तदनन्तरं सुश्रुतेनैवोक्तं यथा "प्रयोज्या विंशतिर्योगाः श्लोकार्द्धविहितास्त्वमी। धान्याम्लोष्णाम्बुमद्यानां पिबेदन्यतमेन वा। निष्क्वाथान् वा पिबेदेषां सुखोष्णान् साधुसाधितान्" इति॥ २६॥

पयस्युत्क्वाथ्येत्यादौ त्रिगुणोदकं बोध्यम्; यदाह वाग्भटः "पयस्युत्क्वाथ्य मुस्ता वा विंशतिं त्रिगुणेऽम्भसि" इत्यादि। अत्र छागदुग्धमित्याहुर्वृद्धाः॥ २७॥

पक्व इत्यादि स्पष्टम्॥ २८॥

वातातिसारिणे देयास्तक्रेणान्यतमेन वा ॥ २९ ॥

कच्चटादिः—कच्चटजम्बूदाडिमशृङ्गाटकपत्रविल्वह्रीवेरम्।
जलधरनागरसहितं गङ्गामपि वेगिनीं रुन्ध्यात्॥ ३० ॥
कृत्वालवालं सुदृढं पिष्टैर्वामलकैर्भिषक्।
आर्द्रकस्वरसेनाशु पूरयेन्नाभिमण्डलम्।
नदीवेगोपमं घोरमतीसारं निरोधयेत्॥ ३१ ॥
किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्।
पित्तातिसाररोगघ्नं सक्षौद्रं वेदनापहम्॥ ३२ ॥
पलं वत्सकवीजस्य श्रपयित्वा जलं पिबेत्।

---

पञ्चमूलीत्यादौ पञ्चमूली स्वल्पा महती वा। धान्यकोत्पलविल्वजा इति विल्वं बिल्वशल्लाटवः। अन्ये तु विल्वजा इत्यनन्तरं कल्पना इति शेषः; तेनाविशेषात् सर्वकल्पनैव कार्य्येत्याहुः। तन्न, स्वरसस्य सम्भवात् तत्कल्पनाया गुरुत्वाच्च। अतश्च कल्कोऽपि न पारिशेष्यात्, कषायचूर्णौ वा योग्यत्वादित्याहुः। अन्यतमेनेति काञ्जिकजलादीनामन्यतमेन। क्वाथपक्ष तक्रादौ अर्द्धजलं देयम्॥ २९ ॥

कच्चटेत्यादौ—कच्चटादीनां चतुर्णां पत्रम्। नागरान्तैरष्टाभिः कषायः॥ ३०॥

कृत्वेत्यादि स्पष्टम्॥ ३१ ॥

किराततिक्तकमित्यादि।—अत्र तण्डुलोदकमपि शेयम्। तेन एषां कल्कं मधुसहिततण्डुलोदकेन पिबेदित्यर्थः। तदाह वाग्भटः: "किराततिक्तकं मुस्तं वत्सकं सरसाञ्जनम्। कटङ्कटेरी ह्रीवेरं विल्वमध्यं दुरालभा। तिला मोचरसं लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पं दाडिमस्य त्वगुत्पलम्। अर्द्धश्लोकैः स्मृता योगाः सक्षौद्रास्तण्डुलाम्बुना" इति। चरकेऽप्युक्तं "किराततिक्तं मुस्तं वत्सकः सरसाञ्जनः। विल्वं दारुहरिद्रात्वग् ह्रीवेरं सदुरालभम्। चन्दनञ्च मृणालञ्च नागरं लोध्रमुत्पलम्। तिला मोचरसो लोध्रं समङ्गा कमलोत्पलम्। नागरं धातकीपुष्पमुत्पलं दाडिमत्वचः। कट्फलं नागरं पाठा जम्ब्वाम्रास्थिदुरालभा। योगाः षडेते सक्षौद्रास्तण्डुलोदकसंयुताः। पेयाः पित्तातिसारघ्नाः श्लोकार्द्धैस्तु निदर्शिताः" इति। निश्चलस्तु वातेत्यादौ क्वाथयित्वेति शेष इत्याह॥ ३२॥

यो रसाशी जयेत्क्षीणं स पैत्तं जठरामयम् ॥ ३३ ॥
मधूकं कट्फलं लोध्रं दाडिमस्य फलत्वचम् ।
पित्तातिसारे मध्वाक्तं पाययेत् तण्डुलाम्बुना ॥ ३४ ॥
कुटजातिविषामुस्तं हरिद्रापर्णिनीद्वयम् ।
सक्षौद्रशर्करं शस्तं पित्तश्लेष्मातिसारिणाम् ॥ ३५ ॥
कुटजत्वक्फलं मुस्तं क्वाथयित्वा जलं पिबेत् ।
अतीसारं जयत्याशु शर्करामधुयोजितम् ॥ ३६ ॥
बिल्वचूतास्थिनिर्यूहः पीतः सक्षौद्रशर्करः ।
निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥ ३७ ॥
पटोलयवधन्याकक्वाथः पेयः सुशीतलः ।
शर्करामधुसंयुक्तश्छर्द्यतीसारनाशनः ॥ ३८ ॥
प्रियङ्ग्वञ्जनमुस्ताख्यं पाययेत् तु यथाबलम् ।
तृष्णातिसारच्छर्दिघ्नं सक्षौद्रं तण्डुलाम्बुना ॥ ३९ ॥
कलिङ्गवचामुस्तं दारु सातिविषं समम् ।
कल्कं तण्डुलतोयेन पिबेत् पित्तानिलामयी ॥ ४० ॥
कुटजं दाडिमं मुस्तं धातकीबिल्वबालकम् ।
लोध्रचन्दनपाठाश्च कषायं मधुना पिबेत् ॥

---

यो रसाशीत्यादि ।—वाग्भटस्य । रसाशी जाङ्गलमांसरसेन भुञ्जानः ॥ ३३ ॥

मधूकमित्यादि ।—चूर्णविधया योगोऽयम् ॥ ३४ ॥

कुटजेत्यादौ हरिद्राद्वयम्, पर्णिनीद्वयं शालपर्णी-पृश्निपर्ण्यौ । क्वाथनीयं ॥ ३५ ॥

कुटजत्वगित्यादि योगत्रयं स्पष्टम् ॥ ३६ ॥

बिल्वेत्यादि ख्यातम् ॥ ३७ ॥

पटोलेत्यादि ख्यातम् ॥ ३८ ॥

प्रियङ्ग्वित्यादौ अञ्जनम् रसाञ्जनम् । चूर्णविधया योगोऽयम् ॥ ३९ ॥

कलिङ्गेत्यादौ सातिविषमिति कलिङ्गादिविशेषणम् ॥ ४० ॥

सामे सशूले रक्ते ऽपि पिच्छास्रावेषु शस्यते।
कुटजादिरिति ख्यातः सर्वातिसारनाशनः ॥ ४१ ॥
समङ्गातिविषा मुस्तं विश्वं ह्रीवेरधातकी।
कुटजत्वक्फलं विल्वं क्वाथः सर्वातिसारनुत् ॥ ४२ ॥
दलोत्थः स्वरसः पेयो ह्रिज्जलस्य ममाच्चिकः।
जयत्याममतीसारं क्वाथो वा कुटजत्वचः ॥ ४३ ॥
वटारोहन्तु सम्पिष्य श्लक्ष्णं तण्डुलवारिणा।
तत् पिबेत् तक्रसंयुक्तमतीसारहजापहम् ॥ ४४ ॥
तण्डुलजलपिष्टाङ्कोठमूलकर्षार्द्धपानमपहरति।
सर्वातिसारग्रहणीरोगसमूहं महाघोरम् ॥ ४५ ॥
कल्कः कोमलवव्वोलदलात् पीतोऽतिसारहा ॥ ४६ ॥
कुटजत्वक्कृतः क्वाथो घनीभूतः सुशीतलः।
लोहितोऽतिविषायुक्तः सर्वातीसारनुद्भवेत् ॥ ४७ ॥
वदन्त्यत्राष्टमांशेन क्वाथादतिविषारजः।

कुटजं दाडिमामित्यादौ दाडिमफलवल्कलम् ॥ ४१ ॥

समङ्गेत्यादौ समङ्गा वराहक्रान्ता। क्वाथ इत्यत्र एषामिति शेषः ॥ ४२ ॥

दलोत्थ इत्यादि स्पष्टं ॥ ४३ ॥

वटारोहमित्यादौ आरोहः अस्याग्रो भाग। सर्वातिसारग्रहणीत्यत्र संयोगादेरपि रेफस्य लघुत्वान्न छन्दोभङ्गः। तदुक्त "यदा तीव्रप्रयत्नेन संयोगादेरगौरवम न छन्दोभङ्ग इत्याहुस्तददोषाय सूरय." इति ॥ ४४ । ४५ ॥

कल्क इत्यादौ—कोमलवव्वोलदलः वव्वोलकिशलयः ॥ ४६ ॥

कुटजत्वक्कृतः क्वाथ इत्यादौ घनीभूत इति चतुर्थभागावशिष्टः क्वाथ एव पुन पाकात् तथा घनः कार्य्यः, यथा चूर्णे प्रक्षिप्ते लेहः स्यात्; अतएव सुशीभन इत्य क्तम् ॥ ४७ ॥

अतिविषाचूर्णं कियद्देयमित्येतदर्थमाह वदन्तीत्यादि।—'चतुर्थभागावशिष्ट क्वाथापेक्षया अष्टमांशेनातिविषाचूर्णं देयमिति वदन्ति वृद्धाः। चक्रस्तु स्वमतमा

प्रक्षेप्यत्वात् पादिकन्तु लेहादिति च नो मतिः ॥ ४८ ॥

अङ्कोठवटकः—

मदार्व्यङ्कोठपाठानां मूलं त्वक् कुटजस्य च।
शाल्मलीशालनिर्यासधातकीलोध्रदाडिमम्॥
पिष्ट्वाक्षसम्मितान् कृत्वा वटकांस्तण्डुलाम्बुना॥
तेनैव मधुसंयुक्तानेकैकान् प्रातरुत्थितः।
पिबेदत्ययमापन्नो विड्विसर्गेण मानवः।
अङ्कोठवटको नाम्ना सर्वातीसारनाशनः॥ ४९ ॥
पयस्यर्द्धोदके च्छागे क्षीवेरोत्पलनागरैः।
पेया रक्तातिसारघ्नी पृश्निपर्ण्या च साधिता॥ ५० ॥

---

प्रक्षेप्यत्वादित्यादि।—तदतिविषाचूर्णं पादिकं चतुर्भागावशिष्टक्वाथापेक्षयेत्यर्थः। तत इत्याह प्रक्षेप्यत्वादिति। लेहादिति ल्यब्लोपे पञ्चमी, लेहमुद्दिश्य प्रक्षेप्यत्वादित्यर्थः। तदुक्तं "लेहे प्रव तु नो भागो निर्दिष्टो द्रवकल्कयोः। तत्रापि पादिकः कल्को द्रवात् कार्य्यो विजानता" इति। "कल्को दृषदि पेषितः" इति हि कल्कलक्षणम्। अतः कल्कशब्देन चूर्णस्यापि ग्रहणम्। द्रवादिति चतुर्भागावशिष्टात्। अत क्वाथ्यपलचतुष्टयं दत्तस्य शरावचतुष्टयजलस्य पादशेषादष्टपल क्वाथे अतिविषाचूर्णपलद्वयमित्यर्थः। लेहाकारीकृतक्वाथापेक्षया पादिकमिति तु न व्याख्येयम्। द्रवात् पादिकः कार्य्य इत्युक्तेः। तत्रापि लेहाकारात द्रवादिति व्याख्याने कष्टकल्पना स्यात्। अतिविषायुक्त इति घनीभूतक्वाथस्य विशेषणम्; तेन क्वाथे घनीभूते अतिविषाचूर्णप्रक्षेप इत्यर्थः। वृद्धवैद्यास्तु मधुनापि लेहं कारयन्ति सायंप्रातरपि ॥ ४८ ॥

मदार्व्यीत्यादौ दार्व्वी दारुहरिद्रा; अङ्कोठः अङ्कोड इति ख्यातस्तरुः। तस्य मूलमेव। उक्तं हि हारीते "पलञ्चाङ्कोठमूलस्य पाठा दार्व्वी च तत्समाम्। पिष्ट्वा तण्डुलतोयेन वटकानक्षसम्मितान्" इत्यादि ॥ ४९ ॥

पयसीत्यादि।—चरकस्य। नागरमत्र मुस्तं, न तु शुण्ठी; रक्तातिसारे "अजाक्षीरकौष्ठीघनज्ञलोत्पलैः" इति जतूकर्णसंवादात्। क्रौष्टी पृश्निपर्णी। अतएव पृश्निपर्ण्यन्त एको योगः। अन्ये तु पृश्निपर्ण्या च साधित इति पृथक्पाठः; पृश्नि-

रसाञ्जनं सातिविषं कुटजस्य फलं त्वचम्।
धातकीशृङ्गवेरञ्च प्रपिबेत् तण्डुलाम्बुना॥
क्षौद्रेण युक्तं नुदति रक्तातिसारमुल्बणम्।
मन्दं दीपयते चाग्निं शूलञ्चापि निवर्त्तयेत्॥ ५१॥
विडङ्गातिविषा मुस्तं दारु पाठा कलिङ्गकम्।
मरिचेन समायुक्तं शोथातिसारनाशनम्॥ ५२॥

वत्सकादिः—

सवत्सकः सातिविषः सविल्वः सोदीच्यमुस्तश्च कृतः कषायः।
सामे सशूले सहशोणिते च चिरप्रवृत्तेऽपि हितोऽतिसारे॥५३॥
कषायो मधुना पीतस्त्वचो दाड़िमवत्सकात्।
सद्यो जयेद्दतीसारं सरक्तं दुर्निवारकम्॥ ५४॥
गुडेन खादयेद्बिल्वं रक्तातिसारनाशनम्।

---

पर्णीक्वाथेन साधित इत्यर्थः। तेनाष्टोदकच्छागदुग्धं पृश्निपर्णीक्वाथैर्मिलित्वा पाकं कार्य्यं। उक्तं हि वाग्भटे "पयस्यर्द्धोदके छागे ह्रीवेरोत्पलनागरैः। पेया रक्तातिसारघ्नी पृश्निपर्णी रसान्विता" इति ब्रुवते॥ ५०॥

रसाञ्जनमित्यादि।—अत्र कुटजस्य फलं त्वक् च। सुश्रुतेऽप्युक्तं "रसाञ्जनं सातिविषं त्वग्बीजं कौटजं तथा। धातकी नागरञ्चैव पाययेत् तण्डुलाम्बुना। सशूलं रक्तजं हन्ति योगो मधुसमन्वितः" इति॥ ५१॥

विडङ्गेत्यादि।—अत्र मरिचस्य प्रक्षेप्यत्वमित्याहुः॥ ५२॥

वत्सकादौ वत्सकः कुटजः। तस्य त्वगिति चन्द्रकलाटीकाकारः, वैद्यप्रसारकश्च। अन्ये तु "विल्वशक्रयवाम्भोदबालकातिविषाकृतः। कषायो हन्त्यतीसारं सामं पित्तसमुद्भवम्" इति सुश्रुतसंवादात् फलमित्याहुः। किन्तु प्रायो व्यवहारस्त्वचा, फलेनापि ज्वरे रक्तप्रावर्ते च। यदुक्तं "कुटजः कफवातास्रकृत्तृड्दोषाम्राऽतिसारजित्। तद्बीजं रक्तपित्तातीसारज्वरहरं हिमम्" इति॥ ५३॥

कषाय इत्यादौ—दाड़िमात् कोमलत्वक्॥ ५४॥

आमशूलविबन्धघ्नं कुक्षिरोगविनाशनम् ॥ ५५ ॥
बिल्वाब्दधातकीपाठाशुण्ठीमोचरसाः समाः।
पीता रुन्धन्त्यतीसारं गुड़तक्रेण दुर्जयम् ॥ ५६ ॥
शल्लकीबदरीजम्बूपियालाम्रार्जुनत्वचः।
पीताः क्षीरेण मध्वाढ्याः पृथक् शोणितनाशनाः ॥ ५७ ॥
जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत्।
संगृह्य स्वरसं तेषामजाक्षीरेण योजयेत्।
तं पिबेन्मधुना युक्तं रक्तातीसारनाशनम् ॥ ५८ ॥
बिल्वं छागपयःसिद्धं सितामोचरसान्वितम्।
कलिङ्गचूर्णसंयुक्तं रक्तातिसारनाशनम् ॥ ५९ ॥
ज्येष्ठाम्बुना तण्डुलीयं पीतञ्च ससितामधु।
पीत्वा शतावरीकल्कं पयसा क्षीरभुग्जयेत्।
रक्तातिसारी पीत्वा वा तया सिद्धं घृतं नरः ॥ ६० ॥

---

गुडेनेत्यादि।—अत्र गुडबिल्वयोः समभागः, बिल्वञ्च तिन्दुशलाटुः, अत्र पानीयेनोत्स्विद्य ग्राह्यम्। उत्स्वेदनशेषजलञ्चानुपेयम् ॥ ५५ ॥

बिल्वाब्देत्यादि। गुडेन मधुरीकृतं तक्रं गुडतक्रम्। पेषणमपि तक्रेण, आयुर्वेदसारसंवादात ॥ ५६ ॥

शल्लकीत्यादौ—क्षीरमाजं ग्राह्यमित्याहुः ॥ ५७ ॥

जम्ब्वाम्रेत्यादौ स्वरसच्छागक्षीरयोः समभागः मधुन्योऽपि मात्रा चूर्णवदेव, मात्रा मोदकादीनां सर्वेष्वप्यर्थेषु चूर्णवदित्युक्तेः ॥ ५८ ॥

बिल्वं छागपयःसिद्धमित्यादि।—बिल्वशलाटूत्स्वेदनयोग्येन छागदुग्धेन किञ्चित् पानीयसहितेनोत्स्विद्य ततः सितादिना संयोज्य लेह्यम्। अत्र बिल्वशलाटुमाषकाष्टकं, सिताया एकमाषकः, मोचरसकलिङ्गयोश्चूर्णं मिलित्वा माषकम् इति वृद्धव्यवहारः। आजदुग्धमुत्स्वेदनावशिष्टमनुपेयम् ॥ ५९ ॥

ज्येष्ठाम्बुनेत्यादावपि रक्तातिसारनाशनमिति योज्यम्। ज्येष्ठाम्बु तण्डुलाम्बु। तण्डुलीयकस्य क्षुद्रमारीषस्य मूलम्। पीत्वेत्यादि।—चरकस्य। वातपित्तोत्तरे

कुटजस्य पलं ग्राह्यमष्टभागंजले शृतम् ।
तथैव विपचेद्युक्तो दाडिमोदकसंयुतम् ॥
यावच्चैव लसीकाभं शृतं तमुपकल्पयेत् ।
तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥
अवश्यमरणीयोऽपि मृत्योर्याति न गोचरम् ।
क्वाथतुल्यं दाडिमाम्बु भागानुक्तौ समं यतः ॥ ६१ ॥
कल्कस्तिलानां कृष्णानां शर्कराभागसंयुतः ।
आजेन पयसा पीतः सद्यो रक्तं नियच्छति ॥ ६२ ॥
गुददाहे प्रपाके वा पटोलमधुकाम्बुना ।
सेकादिकं प्रशंसन्ति छागेन पयसापि वा ।
गुदभ्रंशे प्रकर्त्तव्या चिकित्सा तत्प्रकीर्त्तिता ॥ ६३ ॥
अवेदनं सुसम्यक्तं दीप्ताग्नेः सुचिरोत्थितम् ।

---

योगोऽयमिति वदन्ति। पयसा पीत्वेत्यन्वयः। क्षीरभुगिति क्षीरेण भुञ्जान इत्येति शतावर्य्या कल्कस्वरसरूपतया घृतं पीत्वेत्यर्थः ॥ ६० ॥

कुटजस्य पलमित्यादि।—कुटजत्वक् श१, पा पानीय श१, शेष श१। फलकल्क श१, पा पा श१, शेष श१। एतत् क्वाथद्वय मिश्रीकृत्य तावत् पक्तव्यं यावत् लसीकाभं स्यात्, ततोऽर्द्धमाषक गृहीत्वा तक्रकर्षद्वयेन सह पातव्य मित्यर्थः ॥ ६१ ॥

कल्कस्तिलानामित्यादि।—शर्कराभागसंयुत इति शर्करायाः भागश्चतुर्थोऽ[illegible], तेन संयुत इत्यर्थः। तेन शर्करायाश्चत्वारो भागाः, एकस्तिलस्येति। [illegible] हि अनु[illegible] कर्षे "कृष्णतिलान् शर्करापादिकान् छागीपयसा" इति एव चरके [illegible] यथा "कल्कस्तिलानां कृष्णानां शर्करापञ्चभागिकः" इति। शर्क[illegible] व्यवहार [illegible] भागस्तिलकल्कस्येत्यर्थः ॥ ६२ ॥

गुददाह इत्यादि।—पटोलमधुकाम्बुनेत्यर्द्धगृहीतेन। सेकादिकमित्यत्रादिशब्दात् प्रलेपादिग्रहः। चिकित्सा तत्प्रकीर्त्तितेति गुदभ्रंशचिकित्सा, सा च [illegible] बाध्या ॥ ६३ ॥

नानावर्णमतीसारं पुटपाकैरुपाचरेत् ॥ ६४ ॥

कुटजपुटपाकः—स्निग्धं घनं कुटजवल्कमजन्तुजग्ध-

मादाय तत्क्षणमतीव च पोथयित्वा।

जम्बूपलाशपुटतण्डुलतोयसिक्तम्

बद्धं कुशेन च बहिर्घनपङ्कलिप्तम् ॥

सुस्विन्नमेतदवपीड्य रसं गृहीत्वा

क्षौद्रेण युक्तमतिसारवते प्रदद्यात्।

कृष्णात्रिपुत्रमतपूजित एष योगः

सर्वातिसारहरणे स्वयमेव राजा ॥

स्वरसस्य गुरुत्वे। पुटपाकपलं पिबेत्।

पुटपाकस्य पाकोऽयं वह्निरारक्तवर्णता ॥ ६५ ॥

श्योणाकपुटपाकः—

त्वक्पिण्डं दीर्घवृन्तस्य काश्मरीपत्रवेष्टितम्।

मृदावलिप्तं सुकृतमङ्गारेष्ववकूलयेत् ॥

स्विन्नमुद्धृत्य निष्पीड्य रसमादाय यत्नतः।

शीतीकृतं मधुयुतं पाययेदुदरामये ॥ ६६ ॥

पानीयेन

---

पुटपाकयोग्यावस्थामाह अवेदनमित्यादि।—सुश्रुतस्य। अवेदनमशूलमल्पशूल वा। डल्लनस्तु नानावर्णमित्यनेन सान्निपातिकोऽतिसारः पुटपाकस्य विषय इति दर्शितमित्याह ॥ ६४ ॥

स्निग्धमित्यादि।—अजन्तुजग्धमिति न क्रिमिभिर्भक्षितम्। पोथयित्वा क्षोदयित्वा। जम्बूपत्रनिर्मितपुटे तण्डुलतोयेन सिक्तमित्यर्थः। योगोऽयं रक्तपित्ती-किञ्चित् पानी ६५ ॥

त्वक्पिण्डमित्यादि।—कस्यचित् तन्त्रस्य। त्वचः पिण्डरूपकल्कम्। दीर्घवृन्तः श्योणाकः। काश्मरी गाम्भारी। सुकृतमिति कुशवेष्टनेन सुष्ठु बद्धमित्यर्थः। अव-कूलयेत् अङ्गारैराच्छादयेत्। कूल आवरणे इत्यस्य रूपम्। दहेदित्यन्ये। उदरा-मयप्रकरणादतिसारे सुश्रुते पुनरयं योगोऽन्यथा पठ्यते, यथा "त्वक्पिण्डं दीर्घ-

कुटजलेहः—शतं कुटजमूलस्य क्षुण्णं तोयार्मणे पचेत् ।
क्वाथे पादावशेषेऽस्मिन् लेहं पूते पुनः पचेत् ॥
सौवर्चलयवक्षारबिड़सैन्धवपिप्पली ।
धातकीन्द्रयवाजाजीचूर्णं दत्त्वा पलद्वयम् ॥
लिह्याद्बदरमात्रं तत् शीतं क्षौद्रेण संयुतम् ।
पक्वापक्वमतीसारं नानावर्णं सवेदनम् ।
दुर्वारं ग्रहणीरोगं जयेच्चैव प्रवाहिकाम् ॥ ६७ ॥

कुटजाष्टकः—

तुलामथार्द्रां गिरिमल्लिकायाः संक्षुद्य पक्त्वा रसमाददीत ।
तस्मिन् सुपूते पलसम्मितानि श्लक्ष्णानि पिष्ट्वा सह शाल्मलेन ॥
पाठां समङ्गातिविषां समुस्तां बिल्वञ्च पुष्पाणि च धातकीनाम्
प्रक्षिप्य भूयो विपचेत्तु तावद्दर्वीप्रलेपः स्वरसस्तु यावत् ।
पीतस्त्वसौ कालविदा जलेन मण्डेन वाजापयसाथवापि ।
निहन्ति सर्वन्त्वतिसारमुग्रं कृष्णं सितं लोहितपीतकं वा ॥
दोषं ग्रहण्यां विविधञ्च रक्तं शूलं तथार्शांसि सशोणितानि ।

---

वृन्तस्य पद्मकेशरसंयुतम् । काश्मरीपद्मपत्रैश्चावेष्ट्य सूत्रेण तं दृढम् ॥" शेषं तुल्य-मेवेति । श्योणाकस्य त्वचं पद्मकेशरञ्च समभागं कृत्वा सम्पिष्य, तं पिण्डं गाम्भारी-पत्रपद्मपत्रयोः पुटे निक्षिप्य, सूत्रेणावेष्ट्य मृत्तिकया चावलिप्य निर्धूमखदिराङ्गारेषु पुटपाकविधिना पक्त्वा रसो ग्राह्य इति व्याख्यानयन्ति टीकाकृतः । अत्र श्योणाक-पुटपाके वाग्भटसंवादात् मधुस्थाने शर्कराप्रक्षेपोऽपि बोध्यः ॥ ६६ ॥

शतमित्यादि ।—अर्मणो द्रोणः । लेहमिति लेह्याकारं यथा भवति तथा पचेत । पलद्वयमिति मिलित्वा । आसन्नपाके चूर्णप्रक्षेपः । यवक्षारस्थाने गुड़-क्षारपाठो न प्रसिद्धः । बदरमात्रमित्यष्टमाषकम् । माषचतुष्टयेन व्यवहारः । क्षौद्रयुक्तमित्युपयोगकाले यथारूपं मधु दत्त्वा उपयोज्यम् ॥ ६७ ॥

तुलामित्यादि ।—तुलाद्रव्ये जलद्रोण इति वक्ष्यति । रसश्च पादावशिष्ट एवो-पयोगसिद्धः । पलसम्मितानीति प्रत्येकं, द्रव्यप्रधानत्वान्निर्देशस्य । समङ्गा वराह-क्रान्ता । शाल्मलेनेति शाल्मलीवेष्टकेन । अत्र केचित् चूर्णं दत्त्वैव पाकः, "प्रक्षिप्य

षडङ्गरव्वेवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ॥
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ ६८ ॥

षडङ्गघृतम्—वत्सकस्य च बीजानि दार्व्याश्च त्वच उत्तमाः।
पिप्पली शृङ्गवेरञ्च लाक्षा कटुकरोहिणी ॥
षड्भिरेभिर्घृतं सिद्धं पेयं मण्डावचारितम्।
अतीसारं जयेच्छीघ्रं त्रिदोषमपि दारुणम् ॥ ६९ ॥

क्षीरिद्रुमाद्यं घृतम्—

क्षीरिद्रुमाभीरुरसे विपक्वं तज्जैश्च कल्कैः पयसा च सर्पिः।
सितोपलार्द्धं मधुपादयुक्तं रक्तातीसारं शमयत्युदीर्णम् ॥ ७० ॥
जीर्णेऽमृतोपमं क्षीरमतीसारे विशेषतः।
छागं तद्वद्भेषजैः सिद्धं देयं वा वारिसाधितम् ॥ ७१ ॥

---

...र्वी विपचेत्" इति वचनात् अप्रचाराश्चेत्याहुः। अन्ये तु तस्मिन् सुपूते भूय पचेत्, ततो मनाक् दर्वी प्रलेपनावस्थाया शाल्मलीवेष्टकादिचूर्णं प्रक्षिप्य, ततो रसः पीत इति योज्यम्। एतेन "प्रायो न पाकमुख्याना भूरिचूर्णस्य योगत." इत्यपि वचनमनुगृहीतं भवतीत्याहु.। व्यवहारश्चानेनैवेति। जलेनेति शीतलजलेनाग्निमान्द्ये ...क्षेन वस्तिदुष्टौ; छागीदुग्धेन रक्ते ॥ ६८ ॥

षडङ्गघृते दार्व्याश्च त्वच उत्तमा इति सर्वत्र दार्व्यास्त्वच एव ग्राह्या उत्तमत्वख्यानात्। तस्य दुर्लभत्वात् अत्र काष्ठमेव गृह्यते। षड्भिरिति पदं यथालाभग्रहणनिषेधार्थम्। एभिः कल्कैर्यावद्गुणमेव जलं देयम्। इदमेव, घृतं कुटजत्वचा समाङ्गं भवति, तदुक्तं वैद्यप्रदीपे "मण्डेन पेयं तत्सर्पिः, सप्राङ्गं कुटजत्वचा" इति ॥ ६९ ॥

क्षीरिद्रुमेत्यादौ—क्षीरिणो द्रुमाः वटोडुम्बरादयः। एषामन्यतमस्य समुदितस्य वा क्वाथः। शतावरीरसश्च घृतापेक्षया मिलित्वा त्रिगुणः। कल्कोऽप्येषामेव। पयश्च घृतसमम्। घृतमपेक्ष्य च सितायाः अर्द्धं षोडशपलमित्यर्थ.। मधुनोऽपि घृतमपेक्ष्यैव पादिकत्वं ज्ञेयम् ॥ ७० ॥

क्षीरपानविषयमाह जीर्णे इत्यादि।—तद्भेषजैरिति अतिसारघ्नभेषजैः। देयं वा वारिसाधितमिति केवलेन त्रिगुणेन जलेन साधितमित्यर्थः। उक्तं हि सुश्रुते

बालं बिल्वं गुड़ं तैलं पिप्पली विश्वभेषजम्।
लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥ ७२ ॥
पयसा पिप्पलीकल्कः पीतो वा मरिचोद्भवः।
त्र्यहात् प्रवाहिकां हन्ति चिरकालानुबन्धिनीम् ॥ ७३ ॥
कल्कः स्याद्बालबिल्वानां तिलकल्कश्च तत्समः।
दध्नः सराम्लः सस्नेहाढ्यः खड़ो हन्यात् प्रवाहिकाम् ॥७४॥
बिल्वोषणं गुड़ं लोध्रं तैलं लिह्यात् प्रवाहणे ॥ ७५ ॥
दध्ना ससारेण समाक्षिकेण भुञ्जीत निस्नारकपीड़ितस्तु।
सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥ ७६ ॥
दीप्ताग्निर्निष्पुरीषो यः सार्य्यते फेनिलं शकृत्।
स पिबेत् फाणित शुण्ठीदधितैलपयोघृतम् ॥ ७७ ॥
शोथं शूलं ज्वरं तृष्णां कासं श्वासमरोचकम्।

---

"यथामृत तथा क्षीरमतीसारेषु पूजितम्। चिरोत्थितषु तत् पयसा भागैस्त्रिशृतम्" ॥ ७१ ॥

बालबिल्वमित्यादि।—चरकस्य। वाते प्रतिहत इति विबद्धवाते ॥ ७२ ॥

पयसेत्यादि।—दुग्ध श१, पिप्पली माष ४, अथवा मरिचचूर्ण माष २ व्यवहरन्ति। सविबन्धाया प्रवाहिकायामयं योगः ॥ ७३ ॥

कल्क. स्यादित्यादि।—चरकस्य। अत्र स्नेहस्तु ता तिलदधिसरयोगात् खड इत्यस्यैव योगस्य संज्ञा। चरके खडस्थाने सद्य इति पाठान्तरम् ॥ ७४ ॥

बिल्वोषणेत्यादौ बिल्वं बिल्वशलाटुः, ऊषणं मरिचम्। यदुक्तं "बिल्वं गुडं लोध्रं तैलं मरिचयोजितम्" इति। तैलेन लेहः ॥ ७५ ॥

दध्नेत्यादि।—सुश्रुतस्य। ससारेण अनुद्धृतनवनीतेन। निस्नारकः प्रवाहिका यदाह पराशरः: "निर्वाहयेत सफेनञ्च पुरीषं यो मुहुर्मुहुः। प्रवाहिकेति व्याख्याता कैश्चिन्निस्नारकश्च सः" इति। सुतप्तकुप्यक्वथितेनेति अत्यन्ततप्तसुवर्णादिसारलोहप्रक्षेपात् क्वथितेन। अन्ये तु अघटितं रूप्यादि कुप्यमाचक्षते। केचित् कुप्यस्थाने कूर्पं पठन्ति, व्याचक्षते च। कूर्पं पाषाणभेदो दक्षिणापथे ख्यात शर्करासिकतामिति ॥ ७६ ॥

छर्दिं मूर्च्छाञ्च हिक्काञ्च दृष्ट्वातीसारिणं त्यजेत्।
बहुमेहो नरो यस्तु भिन्नविट्को न जीवति ॥ ७८ ॥
स्नानाभ्यङ्गावगाहांश्च गुरुस्निग्धातिभोजनम्।
व्यायाममग्निमम्लायमतीसारी विवर्जयेत् ॥ ७९ ॥

इत्यतीसारचिकित्सा।

---

## अथ ग्रहणीचिकित्सा।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत्।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत् ॥ १ ॥
शरीरानुगते सामे रसे लङ्घनपाचनम्।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम्।
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपकान् ॥ २ ॥
कपित्थविल्वचाङ्गेरीतक्रदाड़िमसाधिता।

---

दीप्ताग्निरिति।—सुश्रुतस्य। एतत्सर्वमालोच्य पेयम् ॥ ७७—७९ ॥

इति अतीसारचिकित्साविवृतिः।

---

ग्रहण्यतीसारयोः परस्परं कार्य्यकारणभावसम्बन्धोऽस्तीत्यनन्तरं ग्रहणीचिकित्सितमुच्यते ग्रहणीमाश्रितमित्यादि।—वाग्भटस्य। ग्रहणी अग्न्याधाननाडी, तदुक्तम् "अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता" इति। अजीर्णवदुपाचरेदिति, आमाजीर्णेषु यथा वमनाद्युपचारो दीपनपाचनञ्चौषधम्, तथेत्यर्थः। अतीसारोक्तविधिनेति लङ्घनलघ्वन्नपाचनादिना ॥ १ ॥

शरीरानुगत इत्यादि।—चरकस्य। शरीरानुगते शरीरव्यापके। सामे रस इति आमशब्दोऽत्र भावप्रधानः, तेन आमतासहितेऽपक्व इत्यर्थः। रस इत्याहाररसे। विशुद्धामाशयायेति—वमनविरेचनलङ्घनैर्यथायोग्यतया निर्हृतामदोषाय ॥२॥

कपित्थेत्यादि।—चरकस्य। कपित्थविल्वयोः फलम्, दाड़िमफलस्य तु त्वक्,

पाचनी ग्राहिणी पेया सवाते पाञ्चमूलिकी ॥ ३ ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥
कषायोष्णविकाशित्वाद्रौक्ष्याच्चैव कफे हितम् ।
वाते स्वाद्वम्लसान्द्रत्वात् सद्यस्कमविदाहि तत् ॥ ४ ॥
शुण्ठीं समुस्तातिविषां गुडूचीं पिबेज्जलेन क्वथितां समांशाम्
मन्दानलत्वे सततामतायामामानुबन्धे ग्रहणीगदे च ॥ ५ ॥

---

अन्ये तु फलमेवेत्याहुः। कपित्थादीनां चतुर्णां मृदुद्रव्यत्वेन मिलित्वा पलं कल्क
तक्रञ्च द्रवस्थाने, तच्च तावज्ज्ञेयम् यावता यवागूः सिध्यति। वृद्धवैद्यास्तु अत्यन्त
गुरुत्वभिया तक्रजलाभ्यां तुल्याभ्यां पाकमिच्छन्ति। ग्राहिणीत्यन्ता एका यवागू
एषा च वातकफे। सवाते पाञ्चमूलिकीति द्वितीया, वातातिसारे स्वल्पपञ्चमूलसि
यवागूर्हितेति शेषः, "भ्रुवाद्यैर्वायुतीसार" इति जतुकर्णसंवादात् ॥ ३ ॥

तक्रस्य ग्रहणीदोषसात्म्यता दोषत्रयहितत्वञ्च सहेतुकमाह ग्रहणीदोषिणा
मित्यादि।—दीपन ग्राहि लाघवादिति पथ्यत्वे हेतुः। मधुरपाकित्वान्न च पित्त
प्रकोपणमिति, अम्लत्वात् पित्तप्रकोपणे प्राप्ते मधुरपाकितया पित्तं न प्रकोपयति
चकारान्नापि पित्तं शमयतीति आकूतम्, किं वा "सर्वश्चैवाम्ल प्रायो ह्यस्य वि
ह्यते" इति उक्तेर्विदाहजनकं यदस्ति, तदपि तक्रप्रयोगे विदाहकृन्न भवति, मधुर
पाकित्वात् तक्रस्य। न तु जाताम्लत्वेन पित्तप्रकोपनिषेधार्थमयं ग्रन्थः, सद्यस्की
योगेन पित्तकारिणोऽम्लरसस्याभावात्। अम्लञ्च न न प्रयोज्यं विदाहित्वादि
अतएवाह सद्यस्कमविदाहीति सद्योमथितमेव तक्रं पच्यमानावस्थायां विदाहक
भवति। किञ्चित्कालस्थितं पुनरम्लत्वाद्विदाहि भवत्येव। यत्तु स्वाद्वम्लसान्द्र
त्वादित्यनेन अम्लरसत्वमुक्तं तदम्लानुरसतया ज्ञेयमित्याहुः। विकाशित्वादिति
दोषाहतस्रोतोविशोधकत्वादित्यर्थः। रौक्ष्यादित्यत्र वैशद्यादित्यपि पाठान्तरम्,
पैच्छिल्यरहितत्वादित्यर्थः। एतच्च बलिनो जीर्णावस्थायां ग्रहण्या देयमित्याहुः॥

शुण्ठीमित्यादि।—सततामतायामिति सर्वदा आमकोष्ठतायाम्। आमानुबन्ध
इति आमे प्रवर्त्तमान इत्याहुः। ग्रहणीगदविशेषणतया पुनरामानुबन्ध इति क्वचि
पाठो दृश्यते ॥ ५ ॥

धान्यकातिविषोदीच्यमानीमुस्तनागरम् ।
बलाद्विपर्णीविल्वञ्च दद्याद्दीपनपाचनम् ॥ ६ ॥

चित्रकगुड़िका—चित्रकं पिप्पलीमूलं द्वौ क्षारौ लवणानि च ।
व्योषहिङ्ग्वजमोदाञ्च चव्यञ्चैकत्र चूर्णयेत् ॥
गुड़िका मातुलुङ्गस्य दाड़िमाम्लरसेन वा ।
कृता विपाचयत्यामं दीपयत्याशु चानलम् ॥
सौवर्चलं सैन्धवञ्च विड़मौद्भिदमेव च ।
सामुद्रेण समं पञ्च लवणान्यत्र योजयेत् ॥ ७ ॥

श्रीफलादिः—

श्रीफलशलाटुकल्को नागरचूर्णेन मिश्रितः सगुड़ः ।
ग्रहणीगदमत्युग्रं तक्रभुजा शीलितो जयति ॥ ८ ॥

पञ्चपल्लवम्—जम्बूदाड़िमशृङ्गाटपाठाकञ्चटपल्लवैः ।
पक्वं पर्य्युषितं बालविल्वं सगुड़नागरम् ।
हन्ति सर्वानतीसारान् ग्रहणीमतिदुस्तराम् ॥ ९ ॥

---

धान्यकत्यादियोगः क्वाथेन ॥ ६ ॥

चित्रकमित्यादि ।—चरकस्य । अत्र कपिञ्जलाधिकरणकन्यायात् केचिल्लवणत्रयमिच्छन्ति, तन्न, "पटूनि पञ्च द्वौ क्षारौ मरिचं पञ्चकोलकम् । दीप्यकं हिङ्गुगुड़िका वीजपूररसे कृता । कोलदाड़िमतोये वा परं पाचनदीपनी" इति वाग्भटवचनात् । अतएव चक्रोऽप्याह सौवर्चलमित्यादि ।—औद्भिदं शाम्बरिलवणम्, क्षारिकेत्यन्ये । सामुद्रकं करकचम् । गुड़िकेयमार्द्रकरसेनापि बोध्या आयुर्वेदसारदर्शनात् ॥ ७ ॥

श्रीफलेत्यादि ।—नागरचूर्णं कटुत्वमात्रकृत् । सगुड इति समगुडः । अयं योगो वाते इत्याहुः ॥ ८ ॥

जम्बूदाड़िमेत्यादि ।—एषां पल्लवैरावरणं कृत्वा अनुरूपञ्च जलं दत्त्वा बालविल्वमुत्स्वेद्य पर्य्युषितं कार्य्यम् । सगुड़नागरमिति विल्वसमो गुड़ः, नागरचूर्णन्तु कटुत्वमात्रकारकम् । रक्ते तु नागरं न देयम् । उत्स्वेदनशेषजलमनुपेयमित्याहुर्वृद्धाः ॥ ९ ॥

नागरातिविषामुस्तक्काथः स्यादामपाचनः ।
चूर्णं हिङ्ग्वष्टकं वातग्रहण्यान्तु घृतानि च ॥ १० ॥

नागराद्यं चूर्णम्—

नागरातिविषामुस्तं धातकीं सरसाञ्जनाम् ।
वत्सकत्वक्फलं विल्वं पाठां कटुकरोहिणीम् ॥
पिबेत् समांशं तच्चूर्णं सक्षौद्रं तण्डुलाम्बुना ।
पैत्तिके ग्रहणीदोषे रक्तं यश्चोपवेश्यते ॥
अर्शांस्यथ गुदे शूलं जयेच्चैव प्रवाहिकाम् ।
नागराद्यमिदं चूर्णं कृष्णात्रेयेण पूजितम् ॥
शीतकषायमानेन तण्डुलोदककल्पना ।
केऽप्यष्टगुणतोयेन प्राहुस्तण्डुलभावनाम् ॥ ११ ॥

भूनिम्बाद्यं चूर्णम्—

भूनिम्बकटुकाव्योषमुस्तकेन्द्रयवान् समान् ।
द्वौ चित्रकाद् वत्सकत्वग्भागान् षोड़श चूर्णयेत् ॥
गुड़शीताम्बुना पीतं ग्रहणीदोषगुल्मनुत् ।

---

नागरेत्यादि स्पष्टम् । हिङ्ग्वष्टकमग्निमान्द्ये वक्ष्यमाणम् ॥ १० ॥

नागराद्यचूर्णे सक्षौद्रमिति मधुप्रक्षेपयुक्तम् । कृष्णात्रेयः पुनर्वसुः । तण्डुलाम्बुनेत्यादि । तण्डुलाम्बुना तण्डुलभावनाम्बुना । तच्च तण्डुलाम्बु कथं कर्त्तव्यमिति जिज्ञासायां स्वमतं वृन्दमतञ्चोपन्यस्यति शीतकषायमानेनेत्यादि ।—शीतकषायविधानञ्च "क्षुसमुष्णाम्भसि व्युष्टं शीतमाहुश्चिकित्सकाः" इति । अतस्तत्तण्डुलमपेक्ष्य षड्गुणं ग्राह्यम् । उक्तं हि "षड्भिः पलैश्चतुर्भिर्वा सलिलाच्छीतफाण्टयोः" इति । वृन्दमतमाह केऽपीत्यादि । अन्ये तु द्विगुणमम्बु तण्डुलसमं चिरं स्थितं तण्डुलाम्बु वदन्ति । अपरे तु अनियततण्डुलमनियतजलं प्रक्षाल्य जलं गृह्णन्ति ॥ ११ ॥

भूनिम्बेत्यादि ।—द्वौ चित्रकात् तथा वत्सकत्वग्भागान् षोड़शेति प्रथमभागापेक्षया द्विभागषोडशभागपरिग्रहः । गुड़युक्तं शीताम्बु गुड़शीताम्बु गुड़शी

कामलाज्वरपाण्डुत्वमेहारुच्यतिसारनुत्।
गुड़योगाद् गुड़ाम्बु खाद् गुड़वर्णरसान्वितम् ॥ १२ ॥
ग्रहण्यां श्लेष्मदुष्टायां वमितस्य यथाविधि।
कट्वम्ललवणक्षारैस्तीक्ष्णैश्चाग्निं विवर्द्धयेत् ॥ १३ ॥
समूलां पिप्पलीं क्षारौ द्वौ पञ्चलवणानि च।
मातुलुङ्गाभयाराम्नाशटीमरिचनागरम्।
कृत्वा समांशं तच्चूर्णं पिबेत् प्रातः सुखाम्बुना ॥
श्लैष्मिके ग्रहणीदोषे बलवर्णाग्निवर्द्धनम्।
एतैरेवौषधैः सिद्धं सर्पिः पेयं समारुते ॥ १४ ॥

भल्लातकक्षारः—

भल्लातकं त्रिकटुकं त्रिफला लवणत्रयम्।
अन्तर्धूमं द्विपलिकं गोपुरीषाग्निना दहेत् ॥
स क्षारः सर्पिषा पेयो भोज्ये वाप्यवचारितः।
हृत्पाण्डुग्रहणीदोषगुल्मोदावर्त्तशूलनुत् ॥ १५ ॥
सर्वजायां ग्रहण्यान्तु सामान्यो विधिरिष्यते ॥ १६ ॥

---

द्वर्णतामाधुर्य्यापत्तिजनको देय इत्याह गुड़योगादित्यादि। वैद्यप्रसारके तु सर्व-समो गुड शीतलजलेन च पानमित्युक्तम्। व्यवहारस्तु पूर्वथैव। पैत्तिकग्रहण्या-त्रिपित्तचिकित्सितमपि बोध्यम। तदुक्त वैद्यप्रदीपे "अम्लपित्तहित यच्च पान जनभेषजम्। पैत्तिके ग्रहणीदोषे तत्सर्वमुपकल्पयेत्" इति ॥ १२ ॥

ग्रहण्यामित्यादि स्पष्टम् ॥ १३ ॥

समूलामित्यादि। मातुलुङ्गस्यात्र मूलम्। एतैरिति पिप्पलीमूलादिभिः त्करूपे. ॥ १४ ॥

भल्लातकमित्यादि।—चरकस्य। गोपुरीषाग्निनेति अचिन्त्यप्रभावात् संयोग-क्षारजशक्तीनामिति। स चार्द्र इति भल्लातकादीनामन्तर्धूमदाहात् यः क्षारः एव सर्पिषा पीत इत्यर्थः। भोज्ये व्यञ्जने वा स क्षारो देयः ॥ १५ ॥

सर्वजायामित्यादि।—सामान्यो विधिरिति प्रत्येकदोषोक्तचिकित्सामेलकेन दोषग्रहणीचिकित्सा कार्य्येत्यर्थः ॥ १६ ॥

चूर्णं मरिचमहौषधकुटजत्वग्भवं क्रमाद्दिगुणम्।
गुडमिश्रमथितपीतं ग्रहणीदोषापहं ख्यातम्॥ १७॥

पाठाद्यं चूर्णम्।—

पाठाविल्वानलव्योषजम्बूदाड़िमधातकी।
कटुकातिविषामुस्तादार्वीभूनिम्बवत्सकैः॥
सर्वैरेतैः समं चूर्णं कौटजं तण्डुलाम्बुना।
सक्षौद्रञ्च पिबेच्छर्दिज्वरातिसारशूलवान्।
हृद्दाहग्रहणीदोषारोचकानलसादजित्॥ १८॥

कपित्थाष्टकचूर्णम्।—

यमानीपिप्पलीमूलचातुर्जातकनागरैः।
मरिचाग्निजलाजाजीधान्यसौवर्चलैः समैः॥
वृक्षाम्लधातकीकृष्णाविल्वदाड़िमतिन्दुकैः।
त्रिगुणैः षड्गुणसितैः कपित्थाष्टगुणैः कृतः॥

---

चूर्णमित्यादि।—गुडमिश्रतक्रेणालोड्य पीतमित्यर्थः॥ १७॥

पाठादिचूर्णे जम्बूफलास्थि, एतत्साहचर्य्यात् दाडिमफलस्यापि बीजम्। वत्सक इन्द्रयवः॥ १८॥

यमानीत्यादि।—अयं योगो वाग्भटे अतीसारचिकित्सिते लिखितः। अग्निश्चित्रकः, जलं बालकम्। समैरिति समभागैः। वृक्षाम्लं महाद्रकम्। त्रिगुणैरिति एकभागापेक्षया वृक्षाम्लादीनां षण्णां प्रत्येकं त्रिगुणत्वम्। षड्गुणसितैः कपित्थाष्टगुणैः कृत इति सिताकपित्थयोरपि षड्गुणाष्टकगुणत्वे एकगुणापेक्षयैव, एतैः कृतचूर्ण इति योज्यः। अरुणस्तु वाग्भटटीकायां षड्गुणसितैरिति पदं वृक्षाम्लादितिन्दुकान्तानां विशेषणं व्याख्याय मिलितवृक्षाम्लादिद्रव्यषट्कापेक्षया सितायाः षड्गुणत्वमाह। तथा सति सिताभागानां शतमष्टाधिकं भवति। अन्ये तु षड्गुणसिते कपित्थाष्टगुणे इति पठन्ति, व्याख्यानयन्ति च—एकभागापेक्षया कपित्थस्याष्टगुणत्वम्, अष्टगुणकपित्थापेक्षया च सितायाः षड्गुणत्वमिति; तथा सति सिताया अष्टचत्वारिंशद्भागा भवन्तीति। अपरे तु षड्गुणसितः कपित्थाष्ट

चूर्णोऽतीसारग्रहणीक्षयगुल्मगलामयान्।
कासं श्वासारुचिं हिक्कां कपित्थाष्टमिदं जयेत्॥ १९॥

दाड़िमाष्टकः —

कर्षोन्मिता तुगाक्षीरी चातुर्जातं द्विकार्षिकम्।
यमानीधान्यकाजाजीग्रन्थिव्योषं पलांशिकम्॥
पलानि दाड़िमादष्टौ सितायाश्चैकतः कृतः।
गुणैः कपित्थाष्टकवच्चूर्णोऽयं दाड़िमाष्टकः॥ २०॥

वार्त्ताकुगुड़िका —

चतुष्पलं सुधाकाण्डात् त्रिपलं लवणत्रयात्।
वार्त्ताकुकुडवश्चार्कादष्टौ द्वे चित्रकात् पले॥
दग्ध्वा रसेन वार्त्ताकोर्गुड़िका भोजनोत्तराः।
भुक्तं भुक्तं पचन्त्याशु कासश्वासार्शसां हिताः।
विसूचिकाप्रतिश्यायहृद्रोगशमनाश्च ता हिताः॥ २१॥

---

…कृत इति चूर्णविशेषणं कृत्वा समुदितचूर्णापेक्षया सिताकपित्थयोः षड्गुणाष्ट-…त्वमित्याहुः। एतन्मतद्वयमपि न व्यवहारसिद्धम्, शर्कराकपित्थयोरतिबहुत्वा-…ति। तस्मादेकभागापेक्षयैव षड्गुणाष्टगुणत्वमिति। कपित्थभागाधिक्यादस्य …पित्थाष्टक इति संज्ञा॥ १९॥

कर्षोन्मितेति।—वाग्भटस्य। तुगाक्षीरी वंशलोचना, चातुर्जातं त्वगेला…केशरम्। द्विकार्षिकमिति प्रत्येकं, निर्देशस्य द्रव्यप्रधानत्वात्। एवं यमान्या-…कमपि प्रत्येकं पलांशिकम्। ग्रन्थिकं पिप्पलीमूलम्, दाडिमस्यात्र फलं, …"…नां दाडिमादीनाम्" इत्युक्तेः। एवमन्यत्रापि। चकारात् सिताया अपि …ष्टौ पलानि॥ २०॥

चतुष्पलमित्यादि।—वाग्भटस्य। त्रिपलं लवणत्रयादिति मिलित्वा, निर्दे-…स्य मानप्रधानत्वात्। त्रिफलां लवणानि चेति ये पठन्ति, ते त्रिफलालवणे-…मिलित्वा चतुष्पलं वदन्ति, पूर्वोक्तचतुष्पलमित्यस्यापि सम्बन्धात्। लवणान्यविशेषात् …त्रीण्येवाहुः। वार्त्ताकुकुडव इति शुष्कवार्त्ताकुफलचतुष्टयं, व्यवहारात्।* चका…इति अर्कमूलात्। दग्ध्वा रसेन वार्त्ताकोरिति अन्तर्धूमं दग्ध्वा क्षारीकृत्य वार्त्ताकु

अष्टपलं घृतम्।—

व्योषत्रिफलाकल्के बिल्वमात्रे गुड़ात् पले।
सर्पिषोऽष्टपलं पक्त्वा मात्रां मन्दानलः पिबेत्॥ २२॥

बिल्वगर्भघृतम्—मसूरस्य कषायेण बिल्वगर्भं पचेद्घृतम्।
हन्ति कुक्ष्यामयान् सर्वान् ग्रहणीपाण्डुकामलाः।
केवलं व्रीहिप्राण्यङ्गक्वाथो व्युष्टस्तु दोषलः॥ २३॥

शुण्ठीघृतम्—विश्वौषधस्य गर्भेण दशमूलजले शृतम्।
घृतं निहन्याच्छ्वयथुं ग्रहणीसामतामयम॥ २४॥

नागरघृतम्—घृतं नागरकल्केन सिद्धं वातानुलोमनम्।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम्॥ २५॥

---

रसेन गुडिका कार्या इत्यर्थः। दग्धानि वार्त्ताकुरस इति च पाठः। भोजनोत्तरा इति भोजनमुत्तरं पश्चात्कालीन यासां तथा। किंवा भोजनादुत्तरा। भुक्तं भुक्तं पचन्तीत्यत्र भक्तं भक्तमित्यपि पाठः॥ २१॥

व्योषेत्यादौ—बिल्वमात्र इति षड्भिर्मिलित्वा पलमात्रे, कल्कस्य पादिकत्वात्। चतुर्गुणजलेनाष्टपलघृतस्यात्र पाकः। इत्थमेव फलदानसमर्थत्वमस्य भवतीति महर्षिवचनादुन्नीयते। मात्रामिति अग्निबलानुरूपपरिमाणम्॥ २२॥

मसूरस्येत्यादि।—मसूरस्य क्वाथोऽत्यन्तशिथिलपोट्टलकं बद्ध्वा कार्य्यः। एवं माषकुलत्थादीनामपि। बिल्वगर्भमिति बिल्वशलाटुकल्कम्। घृतमत्र प्रस्थमानमेव व्रीहिमांसक्वाथस्य तदह कार्य्यतामाह केवलेत्यादि।—जन्त्वङ्गं छागादिमांसम्। केवलमिति पाठे केवलं समग्रं यथा स्यात् तथा व्युष्टो रात्रिव्युषितो दोषलः यावता कालेन व्यक्तीभवति स एव दोषल इत्यर्थः। केवलव्रीहिजन्त्वङ्गपाठे तु द्रव्यान्तरसंयुक्तव्रीह्यादिक्वाथस्य न दोषलत्वमित्याहुः। तत्तु न व्यवहारसिद्धम्, अतएव वृन्दे "व्रीहिप्राण्यङ्गयोः क्वाथ व्युषित दोषल मतम्" इत्येवोक्तम्। व्युष्टेति पदसिद्धिस्तु व्युष्टादिभ्योऽण् इति सूत्रनिर्देशात्॥ २३॥

विश्वौषधस्येत्यादि।—ग्रहणीसामतामयमिति ग्रहणीमाश्रितो यः सामतारूप आमयो रोगस्तमित्यर्थः॥ २४॥

घृतमित्यादौ जलं चतुर्गुणम्॥ २५॥

चित्रकघृतम्—चित्रकक्काथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ।
गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥ २६ ॥

बिल्वादिघृतम्—

बिल्वाग्निचव्यार्द्रकशृङ्गवेरक्काथेन कल्केन च सिद्धमाज्यम् ।
सच्छागदुग्धं ग्रहणीगदोत्थशोथाग्निमान्द्यारुचिनुद्वरिष्ठम् ॥२७॥

चाङ्गेरीघृतम्—नागरं पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
श्वदंष्ट्रा पिप्पली धान्यं बिल्वं पाठा यमानिका ।
चाङ्गेरीस्वरसे सर्पिः कल्कैरेतैर्विपाचितम् ।
चतुर्गुणेन दध्ना च तद्घृतं कफवातनुत् ॥
अर्शांसि ग्रहणीदोषं मूत्रकृच्छ्रं प्रवाहिकाम् ।
गुदभ्रंशार्त्तिमानाहं घृतमेतद्व्यपोहति ॥ २८ ॥

मरिचाद्यं घृतम् ।—

मरिचं पिप्पलीमूलं नागरं पिप्पली तथा ।
भल्लातकं यमानी च विडङ्गं हस्तिपिप्पली ॥
हिङ्गु सौवर्चलञ्चैव विडसैन्धवचव्यथ ।

---

चित्रकघृतं स्पष्टम् ॥ २६ ॥

बिल्वाग्नीत्यादौ—आर्द्रकेति शृङ्गवेरविशेषणं, तेन शुष्कस्य शुण्ठीरूपस्य निरासः । बिल्वादीनां क्वाथस्त्रिगुणः, चतुर्गुणः इत्यन्ये । छागक्षीरं स्नेहसमम् ॥ २७ ॥

नागरमित्यादि ।—अत्र हस्तिपिप्पली चवी, जतूकर्णसंवादात् । तद्यथा 'दधिधान्यबिल्वपाठायमानिकापञ्चकोलगोक्षुरकैः ॥ चाङ्गेरीस्वरसे सर्पिर्गुदभ्रंशार्त्तिमूत्रार्शोनुद्ग्राहि" इति । व्याख्यानाच्च हस्तिपिप्पली चवीपर्य्यायत्वेन दृश्यते "चविकाकोलवल्ली च हस्तिपिप्पल्यपीष्यते" इति । बिल्वस्थाने विषापाठोऽपि जतूकर्णसंवादादेव न भवति । चाङ्गेरीस्वरसोऽप्यत्र चतुर्गुणः । चतुर्गुणेन दध्ना चेत्यत्र चकारस्य समुच्चयार्थत्वात्, आयुर्वेदसारेऽपि "चतुर्गुणेन दध्ना च चाङ्गेरीस्वरसेन च" इत्युक्तम् । अन्ये तु "स्वरसे क्षीरवद्विधिः" इति वचनात् चाङ्गेरीस्वरसश्च स्नेहसम इत्याहुः, व्यवहारस्तु पूर्वव्याख्ययैव ॥ २८ ॥

मरिचाद्यघृते विडङ्गसैन्धवचवीति समाहारद्वन्द्वः । किंवा विडङ्गसैन्धवयुक्ता

सामुद्रं सयवक्षारं चित्रको वचया सह ॥
एतैरर्द्धपलैर्भागैर्घृतप्रस्थं विपाचयेत् ।
दशमूलीरसे सिद्धं पयसा द्विगुणेन च ॥
मन्दाग्नीनां हितं सिद्धं ग्रहणीदोषनाशनम् ।
विष्टम्भमामं दौर्बल्यं प्लीहानमपकर्षति ॥
कासं श्वासं क्षयञ्चैव दुर्नामसभगन्दरम् ।
कफजान् हन्ति रोगांश्च वातजान् क्रिमिसम्भवान् ।
तान् सर्वान् नाशयत्याशु शुष्कं दार्वनलो यथा ॥ २९ ॥

महाषट्पलकं घृतम् ।—

सौवर्चलं पञ्चकोलं सैन्धवं हवुषां वचाम् ।
अजमोदां यवक्षारं हिङ्गु जीरकमौद्भिदम् ॥
कृष्णाजाजीसभूतीकं कल्कीकृत्य पलार्द्धकम् ।
आर्द्रकस्य रसं चुक्रं क्षीरं मस्त्वम्लकाञ्जिकम् ॥
दशमूलकषायेण घृतप्रस्थं विपाचयेत् ।
भक्तेन सह दातव्यं निर्भक्तं वा विचक्षणैः ॥
क्रिमिप्लीहोदराजीर्णज्वरकुष्ठप्रवाहिकाम् ।
वातरोगान् कफव्याधीन् हन्याच्छूलमरोचकम् ॥
पाण्डुरोगं क्षयं कासं दौर्बल्यं ग्रहणीगदम् ।
महाषट्पलकं नाम वृक्षमिन्द्राशनिर्यथा ॥ ३० ॥

---

ग्रवीति मध्यपदलोपी समासः । द्विगुणेन चेति चकाराद्दशमूलीक्वाथोऽपि द्विगुण अन्ये तु दशमूलीरसश्चतुर्गुण इत्याहुः , व्यवहारस्तु पूर्वेणैव ॥ २९ ॥

सौवर्चलाद्यो—पञ्चकोल मिलितार्द्धपलं, कल्कस्य षट्पलरूपत्वात् । हवु स्वनामख्याता , कृष्णाजाजी कृष्णजीरकम् , भूतीक यमानी । सौवर्चलादीनां प्रत्येकमर्द्धपलम् । अत वर्द्धेति न पाठ , किन्तर्हि विडमित्येव, चन्द्राटादौ दृष्टत्वात् । आर्द्रकस्वरसादीनां चत्वा द्रवाणां प्रत्येक, स्नेहसमत्व "पञ्चप्रभृति तु ." इत्युक्तेः ॥ ३० ॥

स्वल्पचुक्रम्—यन्मस्त्वादि शुचौ भाण्डे सगुड़क्षौद्रकाञ्जिकम्।
धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते।
द्विगुणं गुड़मध्वारनालमस्तु क्रमादिह॥ २१॥

बृहच्चुक्रम्—प्रस्थं तण्डुलतोयतस्तुषजलात् प्रस्थत्रयञ्चाम्लतः
प्रस्थार्द्धं दधितोऽम्लमूलकपलान्यष्टौ गुड़ान्मानिके।
मान्यौ शोधितशृङ्गवेरशकलाद् द्वे सिन्धुजाज्योः पले
द्वे कृष्णोषणयोर्निशापलयुगं निक्षिप्य भाण्डे दृढ़े॥
स्निग्धे धान्ययवादिराशिनिहितं त्रीन् वासरान् स्थापयेद्
ग्रीष्मे तोयधरात्यये च चतुरो वर्षासु पुष्पागमे।
षट् शीतेऽष्टदिनान्यतः परमिदं विस्राव्य सञ्चूर्णयेत्
चातुर्जातपलेन संहितमिदं शुक्तञ्च चुक्रञ्च तत्॥
हन्याद्वातकफामदोषजनितान् नानाविधानामयान्
दुर्नामानिलगुल्मशूलजठरान् हत्वानलं दीपयेत्॥ २२॥

क्षारिष्टम्—यमान्यामलकं पथ्या मरिचं त्रिपलांशकम्।
लवणानि पलांशानि पञ्च चैकत्र चूर्णयेत्॥

---

स्वल्पचुक्रमाह यदित्यादि।—मस्त्वादीत्यस्य विशेषणं सगुड़ेत्यादि। आदिशब्दा[द]धि तक्रञ्च; मस्तुस्थाने यत्, तदपि मस्तुसमं ग्राह्यमिति। अन्ये तु आदिभूत मस्तु [क]र्मोत्थित मस्त्वित्याहुः। त्रिरात्रस्थमिति ग्रीष्माभिप्रायेण; वर्षादिषु पुनर्वक्ष्य[म]ाणबृहच्चुक्रवदवस्थापनकालव्यवस्था। अम्लत्वं यावद्वा भवतीति॥ २१॥

बृहच्चुक्रमाह प्रस्थमित्यादि।—तुषजलाद्धिति सतुषयवकृतसन्धानात्, तदभावे [का]ञ्जिकात्। अम्लत इति तुषजलस्य दध्नश्च विशेषणम्। अम्लमूलकं काञ्जिकाध[्य]स्तमूलकमित्याहुर्वृद्धा.। मानिके इति मानिकाद्वयम्, मानिका पलान्यष्टौ, तेन [षो]डशपलमित्यर्थः। शोधितशृङ्गवेरशकलादिति निस्तुषार्द्रकखण्डात्। द्वे कृष्णो[षण]योरिति ऊषणं मरिचम्। तोयधरात्यये चेति चकारादत्रापि त्रीन् वासरान् [स्था]पयेत्। शीत इत्यनेन हेमन्तशिशिरयोरेव ग्रहणम्। विस्राव्येति वस्त्रपूतं कृत्वा [चा]तुर्जातपलेन मिलित्वा पलमात्रेण। सञ्चूर्णयेत् अवचूर्णनं कारयेदिति॥ २२॥

तक्रकंसासुतं जातं तक्रारिष्टं पिबेन्नरः।
दीपनं शोथगुल्मार्शःक्रिमिमेहोदरापहम्॥ ३३॥

आ-यामकाञ्जिकम्—

वाप्यस्य दद्याद्यवशक्तुकानां पृथक् पृथक् त्वाढकसम्मितञ्च।
मध्यप्रमाणानि च मूलकानि दद्याच्चतुःषष्टिसुकल्पितानि॥
द्रोणेऽम्भसः प्लाव्यघटे सुधीर्त दद्यादिदं भेषजजातयुक्तम्।
चारद्वयं तुम्बुरुवल्लगन्धाधनीयकं स्याद्बिड़सैन्धवञ्च॥
सौवर्चलं हिङ्गु शिवाटिकाञ्च चव्यञ्च दद्याद्विपलप्रमाणम्।
इमानि चान्यानि पलोन्मितानि विचूर्णयित्वा घटे क्षिपेच्च॥
कृष्णामजाजीमुपकुञ्चिकाञ्च तथासुरीं कारविचित्रकञ्च।
पक्षस्थितोऽयं बलवर्णदेह-वयस्करोऽतीव बलप्रदश्च॥

कान् जीवयामीति यतः प्रवृत्त-
स्तत्काञ्जिकेति प्रवदन्ति तज्ज्ञाः।
आ यामकालाज्जरयेच्च भक्त-
मा-यामकेति प्रवदन्ति चैनम्॥

दकोदरं गुल्ममथ प्लिहानं हृद्रोगमानाहमरोचकञ्च।
मन्दाग्निताां कोष्ठगतञ्च शूलमर्शोविकारान् सभगन्दरांश्च।
वातामयानाशु निहन्ति सर्वान् संसेव्यमानं विविधान्नराणाम्॥३

---

तक्रारिष्टे त्रिपलांशकं तथा पलांशानीत्यपि प्रत्येकं ज्ञेयम्। तक्रस्य कंसे आढके आसुत कृतसन्धानम्। जातमिति अम्लरसतया जातम्॥ ३३॥

आ-यामकाञ्जिके वाप्यस्येति निस्तुषदरदलितयवमण्डस्य, तथा यवशक्तुकानाञ्च पृथक् पृथगाढकसम्मितमित्याढकप्रमाणम्। सम्मितमिति भावे क्तः। चतुःषष्ट्या कृतिमानेन। सुकल्पितानीति खण्डखण्डीकृतानि। प्लाव्येत्याप्लाव्य। तुम्बुरु वणिग्द्रव्यम्; वल्लगन्धा कौकान्धी; शिवाटिका वंशपत्री (हिङ्गुपत्री); कृष्णा पिप्पली; उपकुञ्चिका स्थूलकृष्णजीरकः; आसुरी राजिका; कारवि सुगन्धि कृष्णजीरकम्। आ यामकालादिति यामः प्रहरदमः कालः, तमवधीकृत्य॥३४॥

कल्याणगुड़:—

प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुड़स्य ।
चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहवुषाजमोदैः ॥
विड़ङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पलप्रमाणैः ।
दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद् यथावत् ॥
तं भक्षयेदक्षफलप्रमाणं यथेष्टचेष्टं त्रिसुगन्धियुक्तम् ।
अनेन सर्वे ग्रहणीविकाराः सश्वासकासस्वरभेदशोथाः ॥
शाम्यन्ति चायं चिरमन्दराग्नेर्हतस्य पुंस्त्वस्य च वृद्धिहेतुः ।
स्त्रीणाञ्च वन्ध्यामयनाशनोऽयं कल्याणको नाम गुड़ः प्रदिष्टः ॥
तैले मनाग् भर्जयन्ति त्रिवृदत्र चिकित्सकाः ।
अत्रोक्तमानसाधर्म्यात् त्रिसुगन्धं पलं पृथक् ॥ ३५ ॥

कुष्माण्डगुड़कल्याणकम्—

कुष्माण्डकानां रूढ़ानां सुस्विन्नं निष्कुलत्वचाम् ।
सर्पिःप्रस्थे पलशतं ताम्रभाण्डे शनैः पचेत् ॥
पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली ।
धान्यकानि विड़ङ्गानि यमानी मरिचानि च ॥

---

प्रस्थत्रयेणेत्यादि ।—अयं योगः सुश्रुते कासप्रतिषेधे पठितः । अत्र ग्रन्थिकं पिप्पलीमूलम्, अजमोदा यमानी, अन्तःपरिमार्जनत्वात्, अतो यमान्या भागद्वयम् । अग्निश्चित्रकः । पलप्रमाणैरिति प्रत्येकम् । त्रिवृच्चूर्णं तैले मनाग्भर्जनीयम्; भर्जनेन च तस्य मन्दवीर्य्यत्वादतिविरेचकत्वं न भवति । अक्षफलप्रमाणं कर्षम्; व्यवहारस्तु चतुःपञ्चमाषकैरिति । त्रिसुगन्धि त्वगेलापत्रकम् । त्रिवृच्चूर्णं सहित एव तैले गुड़मामलकीरसगोलितं प्रदाय पाकः, सिद्धे च लिहे ग्रन्थिकादिचूर्णप्रक्षेप इति व्यवहारो वैद्यानाम् । अत्रोक्तमानसाधर्म्यादिति ग्रन्थिकादिचूर्णस्य प्रत्येकं पलमानमुक्तम् तत्साहचर्य्यादित्यर्थः ॥ ३५ ॥

कुष्माण्डकानामित्यादि ।—रूढ़ानामिति सम्यक्पक्कानाम्; सम्यक्पक्कस्य सत्त्वसारातीतत्वं नैव भवतीति । तादृशस्य कुष्माण्डस्य खण्डखण्डीकृतस्य त्यक्तबीज

त्रिफला चाजमोदा च कलिङ्गाजाजिसैन्धवम् ॥
एकैकस्य पलञ्चैव त्रिवृदष्टपलं भवेत् ।
तैलस्य च पलान्यष्टौ गुड़पञ्चाशदेव तु ॥
प्रस्थैस्त्रिभिः समेतन्तु रसेनामलकस्य तु ।
यदा दार्वीप्रलेपस्तु तदैनमवतारयेत् ॥
यथाशक्ति गुड़ान् कुर्य्यात् कर्षकर्षार्द्धमानकान् ।
अनेन विधिना चैव प्रयुक्तस्तु जयेदिमान् ॥
प्रसह्य ग्रहणीरोगान् कुष्ठान्यर्शोभगन्दरान् ।
ज्वरमानाहहृद्रोग-गुल्मोदरविसूचिकाः ॥
कामलापाण्डुरोगांश्च प्रमेहांश्चैव विंशतिम् ।
वातशोणितवीसर्पान् दद्रुचर्मदलीमकान् ।
कफपित्तानिलान् सर्वान् प्ररूढ़ांश्च व्यपोहति ॥
व्याधिक्षीणा वयःक्षीणाः स्त्रीषु क्षीणाश्च ये नराः ।
तेषां वृष्यश्च बल्यश्च वयःस्थापनमेव च ।
गुड़कल्याणकं नाम बन्ध्यानां गर्भदं परम् ॥ ३६ ॥

रसपर्पटिका—

याम्लपित्ते विधातव्या गुड़िका च क्षुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥
सम्मर्द्य कज्जलाभन्तु कुर्य्यात् पात्रे दृढ़ाश्रये ।

---

मञ्जरीवल्कलस्य त्वचा कृतास्तरणस्य किञ्चित् पानीयं दत्त्वा उत्स्विन्नस्य निष्पीड़ गलितरसस्य पिष्टस्यातपे किञ्चिच्छुष्कस्य पलशतं ग्राह्यम्; ततस्तस्य घृतशराव-चतुष्टये तैलस्य चाष्टपलं सन्तलनं कार्य्यम्। तत आमलकस्वरसस्य द्वादशशरावेण पञ्चाशद्गुड़पलान्यालोड्य, ततः पूत्वा सन्तलितकुष्माण्डादिकमेकीकृत्य पक्तव्यम् ततो गुड़पाकविधया अवतारिते पिप्पल्यादिचूर्णस्य प्रक्षेप इत्यर्थः। भक्षणमात्रा च प्रायः कर्षार्द्धेनेत्याहुः ॥ ३६ ॥

सिद्धफलां रसपर्पटीमाह याम्लेत्यादि।—तत्रेति तत्र क्षुधावत्यां या विधा शु

ततो बादरवह्निस्थलौहपात्रे द्रवीकृतम्॥
गोमयोपरि विन्यस्तकदलीपत्रपातनात्।
कुर्य्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात्॥
द्वादशरक्तिकां यावत् प्रयोगः प्रहरार्द्धतः।
तदूर्द्धं वंहुपूगस्य भक्षणं दिवसे पुनः॥
तृतीय एव मांसाज्यदुग्धाद्यत्र विधीयते॥
वर्ज्यं विदाहिक्षीरञ्चाम्लं तैलञ्च सार्षपम्।
क्षुद्रमत्स्याम्बुजखगांस्त्यक्तोन्निद्रः पयः पिबेत्॥
ग्रहणीक्षयकुष्ठार्शःशोषाजीर्णविनाशिनी।
रसपर्पटिका ख्याता निबद्धा चक्रपाणिना॥ ३७॥

ताम्रयोगः—

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ।
नखक्षुस्सं तदुपरि तण्डुलीयं द्विमाषिकम्॥
ततो नैपालताम्रादि पिधाय सुकरालितम्।

---

गन्धकशुद्धिप्रकारो वक्तव्यः, तेन शुद्धावित्यर्थः। तत्र सगन्धकं रसं दृढाश्रये न्विशिलायां सम्मर्द्य कज्जलाभं चूर्णं कुर्य्यात्। बादरवह्निस्थेति वदरदारुसन्धु-तान्निस्थ इत्यर्थः। शुद्धपारदकर्ष१, शुद्धगन्धककर्ष१, एतद्द्वयं खल्वे तावद्घर्षणीयं हदण्डेन पाषाणदण्डेन वा, यावत् कज्जलाभं भवति। ततो लौहदर्विकाया-म्बूर्णं दत्त्वा वदराङ्गारोपरि विन्यस्य लौहदण्डेन सञ्चाल्य यदा द्रवीभूतं भवति, आर्द्रगोमयपिण्डोपरिस्थापितकोमलकदलीपत्रे ढालनीयम्, अपरकदलीपत्रा-रेण सम्पीड्य पर्पटिकाकृतिः कार्य्या। रक्तिद्वयं क्रमादिति प्रथमं गुञ्जायुगलं, तिदिनमेकैकवृद्धितो भक्ष्यमिति क्रमादित्यर्थः। पर्णं कृत्वा सम्भक्ष्य हिङ्गुगुञ्जा-कां जीरकगुञ्जाद्वयञ्च भक्षणीयम्। ततः क्षणं स्थित्वा दन्तादिलग्नं प्रक्षाल्य जल-लकं पातव्यमित्युपदेशः। प्रहरार्द्धत इति प्रहरार्द्धाभ्यन्तरे। तदूर्द्धमिति प्रह-र्द्धादूर्द्धम्, तृतीये दिवसे इति सम्बन्धः॥ ३७॥

ताम्रयोगमाह स्थाल्यामित्यादि।—अत्रापि रसगन्धकौ सुधावतीगुडिकोक्त-

पांशुना पूरयेदूर्द्ध्वं सर्वां स्थालीं ततोऽनलः ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
ताम्रोताम्रस्य रक्त्येका त्रिफलाचूर्णरक्तिका ॥
त्रूषणस्य च रक्त्येका विडङ्गस्य च तन्मधु ।
घृतेनालोद्य लेढ़व्यं प्रथमे दिवसे ततः ।
रक्तिवृद्धिः प्रतिदिनं कार्य्या ताम्रादिषु त्रिषु ॥
स्थिरा विडङ्गरक्तिस्तु यदा भेदो विवक्षितः ।
तदा विड़ङ्गन्त्वधिकं दद्याद्रक्तिद्वयं पुनः ॥
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ॥
ग्रहणीमम्लपित्तञ्च क्षयं शूलञ्च सर्वदा ।
ताम्रयोगो जयत्येष बलवर्णाग्निवर्द्धनः ॥ ३८ ॥

इति ग्रहणीचिकित्सा ।

---

विधया शोधितौ ग्राह्यौ। सुकरालितमिति पिष्टभक्तसिक्थकेन नीरन्ध्रलिप्त मित्यर्थः। पांशुना वालुकया। नालिकां घटीमेकां यावदनलज्वाला स्थाल्यधो देयेत्यर्थः। त्रिफलाया मिलित्वा चूर्णरक्तिका; एवं त्रिकटोरपि। सर्वमिदं चूर्णं विडङ्गान्तं मधुघृताभ्यामालोड्य लेह्यः। विडङ्गरक्तिका पुनः स्थिरा न न्यूनाधिक मात्रा इत्यर्थः। यदा पुनः कोष्ठविबन्धाध्मानादिषु विरेकोऽपेक्षितो भवति, तदैव परं विड़ङ्गस्य रक्तिद्वयं ग्राह्यमित्यर्थः। अस्य च पद्धति यथा—शोधितरसगन्धक प्रमा १, एतद्द्वय कज्जलीकृत्य दृढ़नूतनपातिलिकायां स्थाप्यम्। तदुपरि तण्डुली यकशाकमूलचूर्णस्य माषकद्वयमङ्गुलीद्वयेन गृहीत्वा देयम्। अनन्तरमेतत् स कण्टकवेधयोग्येन नैपालताम्रदशमाषकेण कृतताम्रपात्रा अम्बरीखिरसभावितया ढक्कनीयम्। ढक्कित्वा पिष्टभक्तसिक्थकेन ताम्रिकाया रन्ध्रलेपनं कार्य्यम्। ततः स्थालीमध्यस्थितायास्ताम्रिकाया उपरि तां स्थालीं वालुकया पूरयित्वा, तदधो घटिकां यावत् ज्वाला देया। एवं कृतताम्राद्रक्ति १, मिलितत्रिफलाचूर्णरक्ति १, तथा मिलितत्रिकटुचूर्णरक्ति १, विडङ्गचूर्णरक्ति १, एतत् सर्वं घृतमधुभ्यामालोड्य लेह्यम्; शीतलजलमनुपेयम्; प्रथमदिने। एवं द्वादशदिनपर्य्यन्तं रक्तिमेकां कृत्वा वृद्धिः। वृद्धिवत् ह्रासक्रमोऽपि एवमेव ज्ञेयम्। रसगन्धककज्जलस्य योग

## अथार्शश्चिकित्सा ।

दुर्नाम्नां साधनोपायश्चतुर्धा परिकीर्त्तितः ।
भेषजक्षारशस्त्राग्निसाध्यत्वादाद्य उच्यते ॥
यद्वायोरानुलोम्याय यदग्निबलवृद्धये ।
अनुपानौषधद्रव्यं तत् सेव्यं नित्यमर्शसैः ॥
शुष्कार्शसां प्रलेपादिक्रिया तीक्ष्णा विधीयते ।
स्राविणां रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥ १ ॥

प्रलेपमाह—स्नुक्क्षीरं रजनीयुक्तं लेपाद् दुर्नामनाशनम् ।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवाः ॥ २ ॥
अर्कक्षीरं सुधाक्षीरं तिक्ततुम्ब्याश्च पल्लवाः ।
करञ्जो वस्तमूत्रञ्च लेपनं श्रेष्ठमर्शसाम् ॥ ३ ॥

---

रत्नाकरे यथा—"मुक्ताफलसमं स्निग्धं घनं निष्पटलं गुरु । चपलं चपलं शस्तं वदन्ति भिषजां वराः" चपलमिति रसं, द्वितीयं चपलमिति चञ्चलम् । "शुक-पिच्छसमच्छायो नवनीतसमप्रभः । मसृणः कठिनः स्निग्धः श्रेष्ठो गन्धक उच्यते ।' घृतमांसरसादीनाञ्चाचाहारविधिर्बोध्यः ॥ ३८ ॥

इति ग्रहणीचिकित्सा ।

---

पूर्वोक्तसङ्गत्यैव ग्रहण्यनन्तरमर्शश्चिकित्सितमुच्यते दुर्नाम्नामित्यादि ।—आद्य इति भेषजोपायः । *विस्तरेण वक्ष्यमाणां चिकित्सां सारोद्धारेणाह यद्वायो-रित्यादि ।—चरकस्य । अर्शसैरित्यर्शोरोगयुक्तैः । शुष्कार्शसामित्यादि—आदिशब्दात् स्वेदादीनां ग्रहणम् ॥ १ ॥

लेपादीनाह स्नुक्क्षीरमित्यादि ।—स्नुहीक्षीरेण हरिद्राचूर्णमार्द्रं कृत्वा लेपः । उक्तं हि वाग्भटे "स्नुक्क्षीरार्द्रनिशालेपः" इति । कोषातकी घोषकः ॥ २ ॥

अर्केत्यादौ ।—करञ्जस्य त्वक्, सुधाक्षीरमित्यत्र सुधाकाण्डश्चरके वाग्भटे च दृश्यते ॥ ३ ॥

अर्शोघ्नी गुदगा वर्त्तिर्गुड़घोषाफलोद्भवा ।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसां हितः ॥ ४ ॥
तुम्बीवीजं सोद्भिदन्तु काञ्जीपिष्टं गुड़ीत्रयम् ।
अर्शोहरं गुदस्थं स्याद्दधि माहिषमश्नतः ॥ ५ ॥
महाबोधिप्रदेशस्य पथ्या कोषातकीरजः ।
कफेन लेपतो हन्ति लिङ्गवर्त्तिमसंशयम् ॥ ६ ॥
अपामार्गाङ्घ्रिजः क्षारो हरितालेन संयुतः ।
लेपनं लिङ्गसम्भूतमर्शो नाशयति ध्रुवम् ॥
वातातीसारवद्भिन्नवर्चांस्यर्शांस्युपाचरेत् ।
उदावर्त्तविधानेन गाढ़विट्कानि चासकृत् ॥ ७ ॥
विड्विबन्धे हितं तक्रं यमानीविड़संयुतम् ।
वातश्लेष्मार्शसां तक्रात् परं नास्तीह भेषजम् ॥
तत् प्रयोज्यं यथादोषं सस्नेहं रूक्षमेव वा ।
न विरोहन्ति गुदजाः पुनस्तक्रसमाहताः ॥ ८ ॥
त्वचं चित्रकमूलस्य पिष्ट्वा कुम्भं प्रलेपयेत् ।
तक्रं वा दधि वा तत्र जातमर्शोहरं पिबेत् ॥ ९ ॥

---

वर्त्तिः फलवर्त्तिः । गुडं जलेन द्रवीकृत्य घोषफलचूर्णं प्रक्षिप्य पक्त्वा वर्त्ति कार्य्या । ज्योत्स्निका घोषकः ॥ ४ ॥

उद्भिदमुत्कारिकालवणं साम्भरिलवणं वा ॥ ५ ॥

महाबोधिप्रदेशस्येति ।—महाबोधिर्मगधे प्रसिद्धः । पथ्या हरीतकी । कफेन श्लेष्मणा ; समुद्रफेनेनेत्यन्ये, उदधिकफत्वादिति भावः । मुष्टियोगतया पूर्वव्याख्या साध्वी । लिङ्गवर्त्तिर्लिङ्गार्शः ॥ ६ ॥

अपामार्गेत्यादि स्पष्टम् । वातातीसारवदिति वातातीसारचिकित्सा ॥ ७ ॥

विड् विबन्ध इत्यादि स्पष्टम् । वातश्लेष्मार्शसामित्यादि—चरकस्य ॥ ८ ॥

त्वचमित्यादि—तस्यैव । चित्रकमूलत्वचं पिष्ट्वा तिलोत्सेधमात्रः कुम्भगर्भे लेपो देयः ॥ ९ ॥

पित्तश्लेष्मप्रशमनी कच्छूकण्डूरुजापहा।
गुदजान् नाशयत्याशु योजिता सगुडाभया॥
सगुडां पिप्पलीयुक्तामभयां घृतभर्जिताम्।
त्रिवृद्दन्तीयुतां वापि भक्षयेदानुलोमिकाम्॥ १०॥
तिलारुष्करसंयोगं भक्षयेदग्निवर्द्धनम्।
कुष्ठरोगहरं श्रेष्ठमर्शसां नाशनं परम्॥
तिलभल्लातकं पथ्या गुड़श्चेति समांशिकम्।
दुर्नामकासश्वासघ्नं प्लीहपाण्डुज्वरापहम्॥ ११॥
गोमूत्रव्युषितां दद्यात् सगुड़ां वा हरीतकीम्।
पञ्चकोलकयुक्तं वा तक्रमस्मै प्रदापयेत्॥ १२॥
मृल्लिप्तं शौरणं कन्दं पक्त्वाग्नौ पुटपाकवत्।
अद्यात् सतैललवणं दुर्नामविनिवृत्तये॥ १३॥
स्विन्नं वार्त्ताकुफलं घोषायाः क्षारजेन सलिलेन।
तद्घृतभृष्टं युक्तं गुड़ेनातृप्तितो योऽत्ति॥

---

गुदजानित्यत्र मांसाङ्कुरानिति शेषः, तेन पुंलिङ्गता उपपन्ना। सगुडामित्यादि
[illegible]ष्टम्॥ १०॥

तिलारुष्करेत्यादि।—संयुज्यते प्रयुज्यतेऽयमिति संयोगः प्रयोग एव। अन्ये तु
[illegible]लारुष्करयोः संयोगो यत्रेत्याहुः॥ ११॥

गोमूत्रव्युषितामित्यादि।—चरकस्य। रात्रौ गोमूत्रस्थितामिति चक्रः।
[illegible]डामित्यत्र एको योगः। वाग्भटः पूर्वयोगापेक्षया; चरके हि "सगुडामभयां
[illegible] प्राशयेत् पौर्वभक्तिकीम्" इत्यभिधाय तदनन्तरमयं योग उक्तः, अतो भिन्नयोग-
न न पौनरुक्त्यं स्यादिति। एतेन गोमूत्रव्युषितामिति प्रयोगानुरोधात् पुनरपि
[illegible]त्तरीयगुड़हरीतक्यभिहितेति निश्चलेनोक्तमसङ्गतम्, योगद्वयस्यैव चरकोक्त-
त् इति। पञ्चकोलयुक्तमिति पञ्चकोलचूर्णयुक्तम्॥ १२॥

मृल्लिप्तमित्यादि।—वाग्भटस्य। शौरणं कन्दमिति वन्यशूरणमूलम्, एव
वार्शसि, तदभावे ग्राम्यशूरणोऽपीत्यन्ये॥ १३॥

पिबति च तक्रं नूनं तस्याश्वेवातिवृद्धगुदजानि ।
यान्ति विनाशं पुंसां सहजान्यपि सप्तरात्रेण ॥ १४ ॥
असितानां तिलानां प्राक् प्रकुञ्चं शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥ १५ ॥
दन्त्यरिष्टम्—दन्तीचित्रकमूलानामुभयोः पञ्चमूलयोः ।
भागान् पलांशानापोथ्य जलद्रोणे विपाचयेत् ।
त्रिपलं त्रिफलायाश्च दलानां तत्र दापयेत् ॥
रसे चतुर्थशेषे तु पूतशीते प्रदापयेत् ।
तुलां गुड़स्य तत् तिष्ठेन्मासार्द्धं घृतभाजने ॥
तन्मात्रया पिबेन्नित्यमर्शोभ्यो विप्रमुच्यते ।
ग्रहणीपाण्डुरोगघ्नं वातवर्चोऽनुलोमनम् ।
दीपनञ्चारुचिघ्नञ्च दन्त्यरिष्टमिदं विदुः ॥
पात्रेऽरिष्टादिसन्धानं धातकीलोध्रलेपिते ॥ १६ ॥
सनागरारुष्करवृद्धदारकं गुडेन यो मोदकमत्यदारकम् ।
अशेषदुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम् ।

---

स्विन्नमित्यादि —चीषकक्षारोदकेन षड्गुणेनैकविंशतिवारपरिस्रुतेन उत्
घृते भृष्टा अनुरूपगुडेन संयोज्य भक्षयेदिति ॥ १४ ॥

असितानामित्यादि।—तिलानां प्रकुञ्चं पलम्, प्राक्प्रातः अनु पश्चा
वारि खादत इति योज्यम्। द्विजदार्ढ्यम् दन्तदार्ढ्यम् ॥ १५ ॥

दन्तीत्यादि।—चरकस्य। अत्र उभयोरितिवचनबलात् पञ्चमूलयोः प्र
भागा ग्राह्याः ; त्रिपलं त्रिफलाया इत्यत्र तु निर्देशस्य मानप्रधानत्वात् मिलि
त्रिफलाया एव पलत्रय ग्राह्यम्। मासार्द्धमिति तन्त्रान्तरे तु मासमित्यु
यथा—"त्रिफलादशमूलाग्निनिकुम्भानां पलं पलम्। वारिद्रोणे स्थितः पादशे
गुड़तुलायुतः। आज्यभाण्डे स्थितो मासं दन्त्यरिष्टो निषेवित." इति ; उभयथा
प्रमाणं कृतिर्भवत् ॥ १६ ॥

सनागरेत्यादि।—अरुष्करं भल्लातकम्। वृद्धमित्यत्र आत्मानमिति शे

चूर्णे चूर्णसमो ज्ञेयो मोदके द्विगुणो गुड़ः॥ १७॥

प्राणदा गुड़िका।—

त्रिपलं शृङ्गवेरस्य चतुर्थं मरिचस्य।
पिप्पल्याः कुड़वार्द्धञ्च चव्यायाः पलमेव च॥
तालीशपत्रस्य पलं पलार्द्धं केशरस्य च।
द्वे पले पिप्पलीमूलादर्द्धकर्षञ्च पत्रकात्॥
सूक्ष्मैलाकर्षमेकन्तु कर्षं त्वगमृणालयोः।
गुड़ात् पलानि तु त्रिंशच्चूर्णमेकत्र कारयेत्॥
अक्षप्रमाणा गुड़िका प्राणदेति च सा स्मृता।
पूर्वं भक्ष्या तु पश्चात्तु भोजनस्य यथाबलम्।
मद्यं मांसरसं यूषं क्षीरं तोयं पिबेत् तथा॥
हन्यादर्शांसि सर्वाणि सहजान्यस्रजानि च।
वातपित्तकफोत्थानि सन्निपातोद्भवानि च॥
पानात्यये मूत्रकृच्छ्रे वातरोगगलग्रहे।

---

कमिति महाफलम्। अस्य योगस्य चतुःसमसञ्ज्ञामाह भव्यदत्तः। तन्मते
व गुड़ेन किञ्चिज्जलं दत्त्वाग्नौ विपक्वेन मोदकविधानम्। चक्रस्तु मोदकत्वात्
द्वैगुण्यमाह। अन्ये तु "मोदके द्विगुणो गुड" इति कस्यचित् अभियुक्तस्य
मनार्षमिति कृत्वा नाद्रियन्ते, उक्तरीत्या समेनापि गुड़ेन मोदकतोपपत्ते-
॥ १७॥

त्रिपलमित्यादि।—चतुर्थं मरिचस्येति पलमेकमित्यर्थः। केशरस्य नागकेशरस्य।
मृणालयोरिति त्वक् गुड़त्वक्, अमृणालमुशीरम्; अनयोर्मिलित्वा कर्षः। पूर्वं
तु पश्चात्तु भोजनस्येति भोजनस्य पूर्वं भोजनाव्यवहितपूर्वकाले गुड़िका
, पश्चात्तु मद्यादिकं पिबेदिति योज्यम्। न तु मण्डूरादिवत् भोजनस्य
ध्याह्रावेन भक्ष्येति कल्पनीयम्, अर्शसि क्वचिदप्यस्य विधेरदृष्टत्वात्। मद्यं
कफेऽनुपेयम्, मांसरसो वाते, पित्ते क्षीरं मुद्गयूषः कफे, तोयमुष्णं वातकफे,
न्यथाप्यनुपानभेदो दोषभेदेन कल्पनीयः। वाग्भटे पुनरयं योगो बह्वौ-

विषमज्वरे च मन्देऽग्नौ पाण्डुरोगे तथैव च ॥
क्रिमिहृद्रोगिणाञ्चैव गुल्मशूलार्त्तिनां तथा ।
श्वासकासपरीतानामेषा स्यादमृतोपमा ॥
शुण्ठ्याः स्थानेऽभया देया विड्ग्रहे पित्तपायुजे ॥
प्राग्देयं सितां दत्त्वा चूर्णमानाच्चतुर्गुणाम् ।
अम्लपित्ताग्निमान्द्यादौ प्रयोज्या गुदजातुरे ॥
अनुपानं प्रयोक्तव्यं व्याधौ श्लेष्मभवे पलम् ।
पलद्वयन्त्वनिलजे पित्तजे तु पलत्रयम् ॥ १८ ॥

काङ्कायनमोदकः—

पथ्यापञ्चपलान्येकमजाज्या मरिचस्य च ।
पिप्पलीपिप्पलीमूल-चव्यचित्रकनागराः ॥
पलाभिवृद्धाः क्रमशो यवक्षारपलद्वयम् ।
भल्लातकपलान्यष्टौ कन्दस्तु द्विगुणो मतः ।
द्विगुणेन गुड़ेनैषां वटकानक्षसम्मितान् ।

---

चिकित्सिते पठ्यते, तत्र चातुर्जातमुशीरञ्च प्रत्येकं कर्षमानमुक्तं, यथा—"तालीश पत्रमरिचचव्यानान्तु पलं पलम । कृष्णातन्मूलयोर्द्वे द्वे पले शुण्ठीपलत्रयम् । चातुर्जातमुशीरञ्च कर्षांशं श्लक्ष्णचूर्णितम् । गुड़ेन वटकं कृत्वा त्रिगुणेन सदा भजेत् मुद्गयूषरसाविष्टमस्तुपेयापयोऽनुपः । वातश्लेष्मोल्वणां छर्दिं ग्रहणीं पार्श्वहृद्रुजा गदश्वयथुपाण्डुत्वगुल्मपानात्ययार्शसाम् । प्रसेकपीनसश्वासकासानाञ्च निबर्हणं अभयां नागरस्थाने दद्याच्चात्रैव विड्ग्रहे । छर्द्यादिषु च पित्तेषु चतुर्गुणसितान्विता पक्तेन गुड़िका कार्य्या गुड़ेन सितयापि वा । परं हि वह्निसम्पर्कात्लघिमा भजन्ति ताः" इति । शुण्ठ्याः स्थान इत्यादि ।—चूर्णमानादिति समुदितचूर्ण मानात् । केचित्तु गुड़मानाच्चतुर्गुणमिति पठन्ति, तन्न, वाग्भटविरोधा प्रभूतशर्कराप्रसङ्गाच्च । अत्र दोषभेदेनानुपानमात्राभेदमाह अनुपानमित्यादि ॥१८

पथ्येत्यादौ ।—मरिचस्यैकमित्यवाप्यैकमिति सम्बध्यते । तेन मरिचस्य पलमे

त्वैनं भक्षयेत् प्रातस्तक्रमम्भोऽनु वा पिबेत्॥
मन्दाग्निं दीपयत्येष ग्रहणीपाण्डुरोगनुत्॥
कङ्कायनेन् शिष्येभ्यः शस्त्रक्षाराग्निभिर्विना।
भिषग्जितमिति प्रोक्तं श्रेष्ठमर्शोविकारिणाम्॥ १९॥

## माणिभद्रो मोदकः—

ङ्गसारामलकाभयानां पलं पलं स्यात् त्रिवृतात्रयञ्च।
स्य षड्द्वादशभागयुक्ता मासेन त्रिंशद्गुडिका विधेयाः॥
ारणे यक्षवरेण सृष्टः स माणिभद्रः किल शाक्यभिक्षवे।
हि कासक्षयकुष्ठनाशनो भगन्दरप्लीहजलोदरार्शसाम्।
ष्टचेष्टान्नविहारसेवी अनेन वृद्धस्तरुणो भवेच्च॥ २०॥

## स्वल्पशूरणमोदकः—

मरिचमहौषधचित्रकस्य शूरणभागा यथोत्तरं द्विगुणाः।
सर्वसमो गुड़भागः सेव्योऽयं मोदकः प्रसिद्धफलः॥
ज्वलनं ज्वलयति जठरमुन्मूलयति शूलगुल्मगदान्।
निःशेषयति श्लीपदमर्शांसि नाशयत्याशु॥ २१॥

## वृहच्छूरणमोदकः—

शूरणषोड़शभागा वह्नेरष्टौ महौषधस्यातः।

---

।। पलाभिहिता: कमश इति यथाक्रमं पञ्च वृता:। कन्दस्तु द्विगुण इति
लः। द्विगुणेन गुड़ेनेति समुदितचूर्णापेक्षया। पञ्चसम्मितानिति कर्ष-
ान्, व्यवहारस्तु षड़ष्टमासकैरिति॥ १९॥

ङ्गसारेत्यादौ—त्रिवृतात्रयमिति त्रिवृताया: पलत्रयम्, गुडस्य च षट्पलानि,
ागयुक्ता इति द्वादशपलरूपविभागेन युक्ताः कृताः। मासेनेति मासेनोप-
मिति शेषः। अयमर्थः—द्वादश पलानि विभज्य मासेनोपयोज्यम्। त्रिंशद्-
: समभागेन कुर्यात् इति तेन एकैकगुड़िका षड्रक्तिकाधिकनवमाषकोपेत-
ा भवति। कर्ष १, माष ९, रति ६। व्यवहारस्तु दशभिरष्टाभिर्वा माषकै-
मित्यारभ्य इत्यत्र गुदजानामिति शेषः। देश इत्यन्ये॥ २०॥

ल्पशूरणमोदकः स्पष्टः॥ २१॥

अर्द्धेन भागयुक्तैर्मरिचस्य च ततोऽपि चार्द्धेन ॥
त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्नानाम् ।
भागा महौषधसमा दहनांशा तालमूली च ॥
भागः शूरणतुल्यो दातव्यो वृद्धदारकस्यापि ।
भृङ्गेले मरिचांशे सर्वाण्येकत्र सञ्चूर्ण्य ॥
द्विगुणेन गुडेन युतः सेव्योऽयं मोदकः प्रकामघनैः ।
गुरुवृष्यभोज्यरहितैर्ष्वितरैषूपद्रव्यं कुर्य्यात् ॥
भस्मकमनेन जनितं पूर्वमगस्त्यस्य योगराजेन ।
भीमस्य मारुतेरपि येन तौ महाशनौ जातौ ॥
अग्निबलवृद्धिहेतुर्न केवलं शूरणो महावीर्य्यः ।
प्रभवति शस्त्रक्षाराग्निभिर्विनाप्यर्शसामिषः ॥
श्वयथुश्लीपदजिद् ग्रहणीमपि कफवातसम्भूताम् ।
नाशयति वलीपलितं मेधां कुरुते वृषत्वञ्च ॥
हिक्काश्वासकासं सराजयक्ष्मप्रमेहांश्च ।
प्लीहानञ्चात्युग्रं हन्ति च रसायनं पुंसाम् ॥ २२ ॥

शूरणपिण्डी—

चूर्णीकृताः षोडश शूरणस्य भागास्ततोऽर्द्धेन च चित्रकस्य ।
महौषधाद्द्वौ मरिचस्य चैको गुडेन दुर्नामजयाय पिण्डी

---

शूरणषोडशभागा इत्यादौ—त्रिफलाकणासमूलातालीशारुष्करक्रिमिघ्ना म महौषधसमा इति त्रिफलादीनां प्रत्येकं महौषधसमा भागा, त्रिफलायाश्च प्र कम। कणा समूला इति पिप्पल्याः फलं मूलञ्चेत्यर्थः। समूला इत्यत्र लि पु वद्भाषितपुंस्कादनूङ इत्यादिना पुंवद्भावो नेहाशङ्कनीयः। तस्योत्तरपदे स्त्री थान्त परतो विधानात्। विशेषणत्वादस्य पूर्वनिपातोऽपि नाशङ्कनीय, विवक्षा दस्यैव विशेष्यत्वात्। दहनांशकः.. भृङ्गेले मरिचांशे प्रत्येकम्, भृङ्ग गुडत्व गुरुविष्टम्भिभोज्यरहितैर्घृतैरिषूपिति प्रकामघनैः प्रातर्योषितया दारद्वं पु उन्म व्यापादितम् ॥ २२ ॥

…र्णा गुड़ी मोदकवत् पिण्डत्वापत्तिकारकः॥ २३॥

व्योषाद्यं चूर्णम्—

व्योषाग्न्यरुष्करविडङ्गतिलाभयानाम्
चूर्णं गुड़ेन सहितन्तु सदोपयोज्यम्।
दुर्नामकुष्ठगरशोथशकृद्विबद्धा-
नग्निंजयत्यबलतां क्रिमिपाण्डुताञ्च॥ २४॥

समशर्करं चूर्णम्—

शुण्ठीकणामरिचनागदलत्वगेलम्
चूर्णीकृतं क्रमविवर्द्धितमूर्द्धमन्त्यात्।
खादेदिदं सममितं गुदजाग्निमान्द्य-
कासारुचिश्वसनकण्ठहृदामयेषु॥ २५॥

लवणोत्तमाद्यं चूर्णम्—

…वणोत्तमवह्निकलिङ्गयवांश्चिरविल्वमहापिचुमर्दयुतान्।
…िब सप्तदिनं मथितालुलितान् यदि मर्दितुमिच्छसि पायुरुहान्
॥ २६॥

---

चूर्णीकृता इत्यादि।—वाग्भटस्य। मोदकवादति द्विगुण इत्यर्थः॥ २३॥

व्योषाग्नीत्यादि।—अत्र गुडस्यैकभागत्व चूर्णयोगत्वात इति। किन्त्वयं योगो …भीतकामलकयोगात् गुड़िकापि क्रियते, यदाह वाग्भटः—"गुडव्योषवरारेण-…जारुष्करचित्रकैः। अर्शांसि हन्ति गुडिका त्वग्विकारांश्च शीलिता" इति॥२४॥

शुण्ठीत्यादि।—नागं नागकेशरचूर्णम्; दलं तेजपत्रम्। क्रमविवर्द्धितमूर्द्ध-…न्त्यादिति अन्तस्थितद्रव्यादारभ्य तदुपरितनद्रव्यमेकद्वित्र्यादिक्रमेण वर्द्धयेदित्यर्थः। …समितमिति मिलित सर्वचूर्णसमशर्करम्; श्वसनमिति श्वासः॥ २५॥

लवणोत्तमेत्यादि।—वाग्भटस्य। लवणोत्तम सैन्धवम्, वह्निश्चित्रक, कलिङ्ग-…इन्द्रयवः। चिरविल्वः करञ्जः, तस्य मूलम्, यत पुनरस्य सुश्रुते फलग्रहण-…तं तच्छोधने श्रेयम्। महापिचुमर्दः पर्वतनिम्बः, निम्बसदृशबृहत्पत्रो वृक्षः, …ड़ायनीति लोकख्यातः। ग्रामनिम्ब एव पर्वतभवत्वेन पर्वतनिम्ब इत्याहुरन्ये, …स लम् ग्राह्या। मथितालुलितानिति तक्रेणालोड़ितान्॥ २६॥

नागार्जुनयोगः—

त्रिफला पञ्चलवणं कुष्ठं कटुकरोहिणी।
देवदारुविडङ्गानि पिचुमर्दफलानि च॥
बला चातिबला चैव हरिद्रे द्वे सुवर्चला।
एतत् सम्भृतसम्भारं करञ्जत्वग्रसेन च॥
पिष्ट्वा च गुड़िकां कृत्वा बदरास्थिसमां बुधः।
एकैकां तां समुद्धृत्य रोगे रोगे पृथक् पृथक्॥
उष्णेन वारिणा पीता शान्तमग्निं प्रदीपयेत्।
अर्शांसि हन्ति तक्रेण गुल्ममम्लेन निर्हरेत्॥
जन्तुदष्टन्तु तोयेन त्वग्दोषं खदिराम्बुना।
मूत्रकृच्छ्रन्तु तोयेन हृद्रोगं तैलसंयुता॥
इन्द्रस्वरससंयुक्ता सर्वज्वरविनाशिनी।
मातुलुङ्गरसेनाथ सद्यः शूलहरी स्मृता॥
कपित्थतिन्दुकानान्तु रसेन सह मिश्रिता।
विषाणि हन्ति सर्वाणि पानाशनप्रयोगतः।
गोशकृद्रससंयुक्ता हन्यात् कुष्ठानि सर्वशः।
श्यामाकषायसहिता जलोदरविनाशिनी॥
भक्तच्छन्दं जनयति भुक्तस्योपरि भक्षिता।
अक्षिरोगेषु सर्वेषु मधुनाष्टथ चाञ्जयेत्॥
लेहमात्रेण नारीणां सद्यः प्रदरनाशिनी॥

---

त्रिफलेत्यादौ—अतिबला श्वेतबला; सुवर्चला सूर्य्यावर्त्तः। सम्भृतसम्भारमिति पाठः। सम्भृत्य सम्भारमिति पाठेऽपि सम्भारं त्रिफलाद्यौषधजातं सम्भृत्य मेलयित्वा करञ्जत्वग्रसेन पिष्टेति योज्यम्। पृथक् पृथक् इत्यस्य पानाशनप्रयोगत इत्यनेन वक्ष्यमाणेन सम्बन्धः। तेन रोगे रोगे पृथक् पृथक् पानाशनप्रयोगत उपयुक्तेतिशेषः। गुल्ममम्लेनेति काञ्जिकेन; जन्तुर्वृश्चिकादिः; इन्द्रस्वरस भाङ्गजल...

व्यवहारे तथा द्यूते संग्रामे मृगयादिषु।
समालभ्य नरो ह्येनां क्षिप्रं विजयमाप्नुयात्॥ २७॥

जयचूर्णम्—त्रिकत्रयवचाहिङ्गुपाठाक्षारनिशाद्वयम्।
चव्यतिक्ताकलिङ्गाग्निशताह्वालवणानि च॥
ग्रन्थिविल्वाजमोदा च गणोऽष्टाविंशतिर्मतः।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत्॥
ततो विडालपदकं पिबेदुष्णेन वारिणा।
एरण्डतैलयुक्तन्तु सदा लिह्यात् ततो नरः॥
कासं हन्यात् तथा शोथमर्शांसि च भगन्दरम्।
हृच्छूलं पार्श्वशूलञ्च वातगुल्मं तथोदरम्॥
हिक्काश्वासप्रमेहांश्च कामलां पाण्डुरोगताम्।
आमान्वयमुदावर्त्तमन्त्रवृद्धिं गुदं क्रिमीन्॥
अन्ये च ग्रहणीदोषा ये मया परिकीर्त्तिताः॥
महाज्वरोपसृष्टानां भूतोपहतचेतसाम्।
अप्रजानान्तु नारीणां प्रजावर्द्धनमेव च।
विजयो नाम चूर्णोऽयं कृष्णात्रेयेण पूजितः॥ २८॥

---

…ाकषायस्तिक्तताक्राथः ; भक्तच्छन्दं भक्ताकाङ्क्षाम्। व्यवहार इति वाग्व्यव-
…र्पे वादे ; समालभ्येति आलिप्य॥ २७॥

त्रिकत्रयमित्यादि।—त्रिकटु त्रिफला त्रिजातं त्रिकत्रयम्। ये तु त्रिजात-
…नि मुस्तविडङ्गचित्रकरूपं त्रिमदमाहुः, तन्मते चव्यतिक्ताकलिङ्गाग्नीत्यत्राग्नि-
… भल्लातकं ज्ञेयम्। लवणानीति पञ्च लवणानि, अन्यथा अष्टाविंशतिसंख्या
…पद्यते। ग्रन्थिः पिप्पलीमूलम् ; अजमोदा यमानी। विडालपदकमिति कर्षम्।
…मिति केवलं श्वासम् ; हिक्काश्वासेति हिक्कासहितः श्वास इत्यर्थः ; अतो न पौन-
…म्। अन्ये तु श्वासमित्यत्र कासमिति पठन्ति। रोगान् जयतीति कृत्वा विजय-
…॥ २८॥

श्रीबाहुशालो गुड़ः—

त्रिवृत् तेजोवती दन्ती श्वदंष्ट्रा चित्रकं शटी।
गवाक्षीमुस्तविश्वाह्वविडङ्गानि हरीतकी॥
पलोन्मितानि चैतानि पलान्यष्टावरुष्करात्।
षट्पलं वृद्धदारस्य शूरणस्य तु षोड़श॥
जलद्रोणद्वये क्वाथ्यं चतुर्भागावशेषितम्।
पूतन्तु तं रसं भूयः क्वाथ्येभ्यस्त्रिगुणो गुड़ः॥
लेहं पचेत् तु तं तावद् यावद्दर्वीप्रलेपनम्।
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत्॥
त्रिवृत्तेजोवतीकन्दचित्रकान् द्विपलांशिकान्।
एलात्वङ्मरिचञ्चापि गजाह्वाञ्चापि षट्पलाम्।
द्वात्रिंशतं पलान्येवं चूर्णं दत्त्वा निधापयेत्।
ततो मात्रां प्रयुञ्जीत जीर्णे क्षीररसाशनः॥
पञ्च गुल्मान् प्रमेहांश्च पाण्डुरोगं हलीमकम्।
जयेदर्शांसि सर्वाणि तथा सर्वोदराणि च॥
दीपयेत् ग्रहणीं मन्दां यक्ष्माणञ्चापकर्षति।
अपीनसं प्रतिश्यायमाढ्यवातं तथैव च॥

त्रिवृत् तेजोवतीत्यादि।—कस्यचित् तन्त्रस्य। तेजोवती चवी; एवं सर्वत्र। यत्र पुनश्चवी तेजोवती चास्ति तत्र पर तेजोवत्या ज्योतिष्मती गृह्यते, यथा गुग्गुलुपञ्चतिक्तके घृते। गवाक्षी गोरक्षकर्कटी, तस्या मूलम्; एवं सर्वत्र। न तु गवाक्षी श्वेतापराजिता, क्वापि टीकाकृद्भिरव्याख्यातत्वात्। क्वाथ्येभ्यस्त्रिगुणो गुड़ इति एकचत्वारिंशत्पलक्वाथ्यापेक्षया त्रैगुण्येन गुड़स्य त्र्योविंशतिपलाधिकशतपल भवति। कन्द. शूरण., त्रिवृदादीनां द्विपलत्वम्, एलादीनाञ्च षट्पलत्वम्। यद्यपि निर्देशस्य द्रव्यप्रधानत्वादेव प्रत्येकं सिध्यति, तथापि द्वात्रिंशत्पलानीति यदुक्तं तत् क्वचित् द्रव्यप्रधाननिर्देशेऽपि प्रत्येकता नास्तीति सूचनार्थम्। तेन कैशोरकगुग्गुलौ त्रिकटीचूर्णं षडक्षपरिमाणमित्यत्र मिलित्वैव त्रिकटुचूर्णषडक्षपरिमितता द्रव्यस्य

अयं सर्वगदेष्वेव कल्याणो लेह उत्तमः ।
दुर्नामारिरयञ्चाशु दृष्टो वारसहस्रशः ॥
भवन्त्यनेन प्रयुञ्जानाः शतवर्षं निरामयाः ॥
आयुषो दैर्घ्यजननो वलीपलितनाशनः ॥
रसायनवरश्चैष मेधाजनन उत्तमः ।
गुड़ः श्रीबाहुशालोऽयं दुर्नामारिः प्रकीर्त्तितः ॥
तोयपूर्णे यदा पात्रे क्षिप्तो न प्लवते गुड़ः ॥
क्षिप्तश्च निश्चलस्तिष्ठेत् पतितस्तु न शीर्य्यते ।
यदा दर्वीप्रलेपः स्याद् यावद्वा तन्तुलीभवेत् ॥
एष पाको गुड़ादीनां सर्वेषां परिकीर्त्तितः ।
सुखमर्दः सुखस्पर्शो गुड़ः पाकमुपागतः ॥
पीड़ितो भजते मुद्रां गन्धवर्णरसान्वितः ॥ २८ ॥

गुड़भल्लातकः—

भल्लातकसहस्रे द्वे जलद्रोणे विपाचयेत् ।
पादशेषे रसे तस्मिन् पचेद्गुड़तुलां भिषक् ॥

---

ारसिद्धेति बोध्यम् । द्वाविंशतं पलान्येव पाठोऽन्यथा च्छन्दोभङ्गः स्यात् क्वचिच्च
ाविंशच्च पलान्यवमिति पाठः । अपीनसमिति प्रतिश्यायभदः । पीनसं च प्रति-
ाय इति पाठेऽपि स एवार्थः । अत्र अनुपानमनुक्तमपि वातकफे कोष्णाम्बु, पित्ते
ीरादिकं ज्ञेयम् । न चात्र भल्लातकप्रवेशादुष्णजलम् अयुक्तमिति शङ्कनीयम्,
ो भल्लातकस्नेह एव उष्णजलनिषेधो न भल्लातकयोगमात्रे । तथा चोक्तम्—
उष्णोदकानुपानन्तु स्नेहानामथ शस्यते । ऋते भल्लातकस्नेहात् तत्र तोयन्तु शीत-
म्" इति । वृद्धास्तु शीततोयेन व्यवहरन्ति । तोयपूर्णे यदा पात्र इत्यादि गुड़-
ाकलक्षणम् । वृद्धास्तु तोयपूर्णपात्रोपरि कोमलकदलीपत्रं दत्त्वा, गुड़स्य मुद्रा-
ाकं निरूपयन्ति । न प्लवते न भवति पतितः । पात्राधोगतोऽपि न शीर्य्यते न विलो-
ता याति ॥ २८ ॥

गुड़भल्लातके भल्लातकसहस्रे द्वे इति भल्लातकानां सहस्रद्वयम्, एवं सर्वत्र

भल्लातकसहस्रार्द्धं छित्त्वा तत्रैव दापयेत्।
सिद्धेऽस्मिंस्त्रिफलाव्योषयमानीमुस्तसैन्धवम्।
कर्षांशसम्मितं दद्यात् त्वगेलापत्रकेशरम्॥
खादेदग्निबलापेक्षी प्रातरुत्थाय मानवः॥
कुष्ठार्शःकामलामेह-ग्रहणीगुल्मपाण्डुताः।
हन्यात् प्लीहोदरं कासक्रिमिरोगभगन्दरान्।
गुड़भल्लातको ह्येष श्रेष्ठश्चार्शोविकारिणाम्॥ ३०॥

अपरो गुड़भल्लातकः—

दशमूलामृता भार्गी श्वदंष्ट्रा चित्रकं शटी।
भल्लातकसहस्रञ्च पलांशं क्वाथयेद् बुधः।
पादशेषे जलद्रोणे रसे तस्मिन् विपाचयेत्।
दत्त्वा गुड़तुलामेकां लेहीभूतं समुद्धरेत्॥
माक्षिकं पिप्पलीं तैलमौरुवूकञ्च दापयेत्।
कुड़वं कुड़वञ्चात्र त्वगेला मरिचं तथा॥

---

पलादिमानविरहे; यथा सैन्धवाद्यतैले भल्लातकान्यस्थीनि विंशतिरिति। यत्र तु पलादिश्रुतिस्तत्र तथैव व्यवहर्त्तव्यम्। यथा बाहुशालगुडे; "पलान्यष्टावरुष्करा-दिति।" एवं हरीतक्यादावपि ज्ञेयम्। भल्लातकसहस्रार्द्धं छित्त्वेति द्विधा कृत्वा गुड़सहितक्वाथ एव पक्तव्यं हरीतकीवत्। त्रिफलादीनाञ्च प्रत्येकमेव कर्षमानम् ॥ ३० ॥

द्वितीयगुडभल्लातके पलांशमिति। दशमूलादिभिः सम्बध्यते। भल्लातकसहस्रं पूर्ववदाकृतिमानात्। क्वाथयेदिति पूर्वोक्तभल्लातकगुडसंवादात्; अत्रापि जलद्रोणं किंवा क्वाथ्यद्रव्येभ्योऽष्टगुणे जले। माक्षिकं मधु। औरुवुकञ्च तैलमेरण्डतैलम; एतत् प्रथमतः क्षिप्त्वैव गुडः पक्तव्यः। सिद्धे मधुपिप्पलीचूर्णादि प्रक्षेप्यम्। एकः कुड़वशब्दो माक्षिकादिभिः सम्बध्यते; अपरश्च त्वगेलादिभिः। माक्षिकैरण्डतैलयोः द्रवत्वात् प्रत्येकमष्टौ पलानि। त्वगेलामरिचादीनान्तु कुड़वं मिलित्वेति केचित्, प्रत्येकमित्यन्ये। एतदेव युक्तं द्रवप्रधानत्वात् निर्देशस्य। आयुर्वेदसारेऽप्युक्तम्— "भल्लातकसहस्रं हि शटीदहनगोक्षुरान्। दशमूल्यमराभार्गीः पलांशाः संविपाच्य

अर्श: काजमुदावर्त्तं पाण्डुत्वं शोथमेव च ।
नाशयेदग्निसादञ्च गुड़भल्लातक: स्मृत: ॥ ३१ ॥

चव्याद्यं घृतम्—

चव्यं त्रिकटुकं पाठां क्षारं कुस्तुम्बुरूणि च ।
यमानी पिप्पलीमूलमुभे च विड़सैन्धवे ॥
चित्रकं बिल्वमभयां पिष्टा सर्पिर्विपाचयेत् ।
शकृद्वातानुलोम्यार्थं जाते दध्नि चतुर्गुणे ॥
प्रवाहिकां गुदभ्रंशं मूत्रकृच्छ्रं परिस्रवम् ॥
गुदवङ्क्षणशूलञ्च घृतमेतद्व्यपोहति ॥ ३२ ॥

व्योषाद्यं घृतम्—

व्योषगर्भं पलाशस्य त्रिगुणे भस्मवारिणि ॥
साधितं पिबत: सर्पि: पतन्त्यर्शांस्यसंशयम् ॥ ३३ ॥

उदकषट्पलं घृतम्—

सक्षारै: पञ्चकोलैस्तु पलिकैस्त्रिगुणोदके ।
समक्षीरं घृतप्रस्थं ज्वरार्श:प्लीहकासनुत् ॥ ३४ ॥

सिंह्यमृतं घृतम्—

पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृताशतम् ।

---

। दत्त्वा गुडतुला तत्र लेहवत् साधु साधयेत । पिप्पल्या मधुन: सिद्ध तैलस्यो-
मकस्य च । प्रत्येकं कुडवं दत्त्वा त्वगेलामरिचस्य च । मिश्रित भच्यंगनिरसनमर्श-
ासोदरापहम्" इति । अतएव आयुर्वेदसारसंवादात् कुडवार्डञ्च त्वगेलामरिचमिति
ाठान्तरमपि प्रतिक्षेपणीयम् ॥ ३१ ॥

चव्यमित्यादि ।—चरकस्य । कुस्तुम्बुरु धनीयकम् । जाते दध्नीति सुजाते ।
त्र कैचित् "स्वरसक्षीरमाङ्गल्यै:पाको यत्रेरित: क्वचित । चतुर्गुणं समं तत्र
र्योधानार्थमावपेत्" इत्याहु: । परिस्रवमिति गुदपरिस्रावम् ॥ ३२ ॥

व्योषाद्य घृत स्पष्टम् ॥ ३३ ॥

उदकषट्पलघृतं स्पष्टम् ॥ ३४ ॥

सवाग्निविफलाव्योषपूतिकत्वक्कलिङ्गकैः ॥
सकाश्मर्य्यविड़ङ्गैस्तु सिद्धं दुर्नामनिद्घृतम् ।
घृतं सिंह्मतं नाम बोधिसत्त्वेन भाषितम् ॥ २५ ॥

पिप्पल्याद्यं तैलम्—

पिप्पली मधुकं विल्वं शताह्वां मदनं वचाम् ।
कुष्ठं शटीं पुष्कराख्यं चित्रकं देवदारु च ॥
पिष्ट्वा तैलं विपक्तव्यं द्विगुणक्षीरसंयुतम् ।
अर्शसां मूढ़वातानां तच्छ्रेष्ठमनुवासनम् ॥
गुदनिःसरणं शूलं मूत्रकृच्छ्रं प्रवाहिकाम् ।
कट्यूरुपृष्ठदौर्बल्यमानाहं वङ्क्षणाश्रयम् ॥
पिच्छास्रावं गुदे शोथं वातवर्चोविनिग्रहम् ।
उत्थानं बहुदोषञ्च जयेत्तेवानुवासनात् ॥ २६ ॥

---

पचेदित्यादौ—कण्टकारीगुड़ूच्योर्मिलित्वा शत, निर्देशस्य मानप्रधानत्वात अन्ये तु द्रवभयस्त्वदर्शनात । प्रत्येकमेव शतमाहुः । चतुर्द्रोणे द्रोणावशेषः, अतो ऽत्र घृताढक बोध्यम् । चतुर्गुणेन पाकस्योत्सर्गसिद्धत्वात् । प्रस्थपक्षे तु षोडशगुणत्वमेव पाकस्य । अग्निरत्र चित्रकः ; पुतीकस्य करञ्जस्य त्वक् ; काश्मर्य्य गाम्भारीफलम् ; कल्कस्य तु संहापेक्षया पादिकत्वमत्र बोधिसत्त्वेनेति योगिविशेषेण, अन्ये तु लोकनाथेनेत्याहुः ॥ २५ ॥

पिप्पल्यादितैले विल्वं विल्वशलाटु ; पुष्कराख्यमिति पुष्करमूलं, तदभावे कुष्ठमेव द्विगुणं ग्राह्यम् । अत्र द्रवान्तरस्यानिर्दिष्टत्वात् द्विगुण एव पाक इति केचित् । अन्ये तु चतुर्गुणपाकस्य उत्सर्गसिद्धत्वात् जलमप्यत्र द्विगुणमिच्छन्ति अपरे तु "क्षीरदध्यारनालैस्तु पाको यत्रेरितः क्वचित् । जलं चतुर्गुणं तत्र वीर्य्याधानार्थमावपेत्" इति वचनात जलमपि चतुर्गुणमाचक्षते ; युक्तञ्चैतत्, यदाह सुश्रुतः "शटीपुष्करकृष्णाह्वामदनामरदारुभिः । शताह्वाकुष्ठयष्ट्याह्वावचाविल्वताशनैः । सुपिष्टं द्विगुणक्षीरं तैलं तोयचतुर्गुणम् । पक्वा बस्तौ निधातव्यं मूढ़वातानुलोमनम्" इति ॥ २६ ॥

### रक्तार्शश्चिकित्सा।—

रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद्भिषक्।
दुष्टास्रे निगृह्णीते तु शूलानाहावसृग्गदाः ॥ ३७ ॥
लाजैः पेया पीता चुक्रिकाकेशरोत्पलैः सिद्धा।
हन्त्यस्रस्रावं तथा बलापृश्निपर्णीभ्याम् ॥ ३८ ॥
शक्रक्काथः सविश्वो वा किंवा बिल्वशलाटवः।
योज्या रक्तार्शसैस्तद्वज्ज्योत्स्निकामूललेपनम् ॥ ३९ ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात्।
दधिसरमथिताभ्यासाद् गुदजाः शाम्यन्ति रक्तवहाः ॥ ४० ॥

---

रक्तार्शसा चिकित्सामाह रक्तार्शसामित्यादि।—उपेक्षेत, न तु स्तम्भयेत्। निगृह्णीते इति स्तम्भिते। असृग्गदा इति शोणितरोगाः ॥ ३७ ॥

लाजैः पेयेत्यादि। चुक्रिका चाङ्गेरी, केशरं नागकेशरम्। तथा बलापृश्निपर्णीभ्यामिति द्वितीयो योगः। तथेत्यनेन लाजैः पेयेत्यनुवर्त्तते ॥ ३८ ॥

शक्रक्काथ इत्यादि।—शक्रः कुटजः, उक्तं हि रत्नकोषे "वत्सकः शक्रपर्य्यायो वत्सका गिरिमल्लिका" इति। तद्वल्कलक्काथः, उक्तं चरके "कुटजत्वङ्निर्य्यूहः सनागरः स्निग्धो रक्तसंग्रहणः" इति। वाग्भटेऽप्युक्तं "सकफे प्रपिबेत् पाक्यं शुण्ठीकुटजवल्कलम्" इति। निश्चलस्तु इन्द्रयवक्काथ इत्याह। सनागर इत्यनागरः स च प्रक्षेपविधिनेति केचित्। अन्ये तु उक्तवाग्भटवचनसंवादात् शुण्ठीकुटजवल्कलयोः क्काथ इत्याहुः। बिल्वशलाटव इत्यत्रापि सनागर इति योज्यम्। अन्ये तु केवलं बिल्वं पिष्टा पेयमित्याहुः। ज्योत्स्निका कोशातकी घोषकभेदः ॥ ३९ ॥

नवनीततिलाभ्यासादित्यादि।—योगत्रयमेतत्। अत्र केशरं पद्मकेशरं, रक्तस्तम्भनत्वात्; यदाह वाग्भटः 'मृणालाम्बुजकिञ्जल्क-साधितं सह वा तिलैः। अभ्यस्य रक्तगुदजान् नवनीतं नियच्छति' इति; आधुनिकास्तु नागकेशरेण व्यवहरन्ति। दधिसरस्य मथितं तक्रं दधिसरमथितम्, उक्तं हि जतूकर्णे "नवनीतं तिलैर्युक्तं शर्करा केशरेण वा। नवनीतं घृतं वाऽपि दध्नो वा खजितः सरः" इति ॥ ४० ॥

समङ्गोत्पलमोचाह्व-तिरीटतिलचन्दनैः।
छागक्षीरं प्रयोक्तव्यं गुदजे शोणितात्मके॥ ४१॥

कुटजलेहः—

कुटजत्वक्पलशतं जलद्रोणे विपाचयेत्।
अष्टभागावशिष्टन्तु कषायमवतारयेत्॥
वस्त्रपूतं पुनः क्वाथं पचेल्लेहत्वमागतम्॥
भल्लातकं विड़ङ्गानि त्रिकटु त्रिफलां तथा।
रसाञ्जनं चित्रकञ्च कुटजस्य फलानि च।
वचामतिविषां विल्वं प्रत्येकञ्च पलं पलम्॥
त्रिंशत्पलानि गुड़स्य चूर्णीकृत्य निधापयेत्।
मधुनः कुड़वं दद्याद् घृतस्य कुड़वं तथा॥
एष लेहः शमयति चार्शो रक्तसमुद्भवम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्॥
ये च दुर्नामजा रोगास्तान् सर्वान् नाशयत्यपि।
अम्लपित्तमतीसारं पाण्डुरोगमरोचकम्॥
ग्रहणीमार्दवं कार्श्यं श्वयथुं कामलामपि।
अनुपानं घृतं दद्यान्मधु तक्रं जलं पयः।

---

समङ्गेत्यादि।—समङ्गा वराहक्रान्ता, उत्पलं नीलोत्पलम्; मोचकं शाल्मलीवेष्टकम्; तिरीटं पट्टिकालोध्रम्, एषां कल्कश्छागक्षीरेणालोड्य पेयः। उक्तं हि वाग्भटे "लोध्रं तिलं मोचरसं समङ्गां चन्दनोत्पलम्। पाययित्वाऽजदुग्धेन शालीस्तेनैव भोजयेत्" इति। अन्ये तु क्षीरपरिभाषया छागक्षीरं पक्त्वा पेयमित्याहुः॥ ४१॥

कुटजत्वक्पलशतमित्यत्र केचित् पलस्थाने फलमिति पठन्ति, तन्मते कुटजत्वक्फलयोर्मिलित्वैव पलशतम्। चन्द्राटेऽष्टभागावशिष्टमित्यत्र चतुर्भागावशिष्टमिति पठ्यते। अत्र घृतकुड़वं प्रथमं दत्त्वा लेहः पक्तव्यः, सिद्धे तस्मिन् भल्लातकादि

रोगानीकविनाशाय कौटजो लेह उच्यते ॥ ४२ ॥

कुटजरसक्रिया—

कुटजत्वचो विपाच्यं शतपलमार्द्रं महेन्द्रसलिलेन ।
यावत् स्यादरसं तद्द्रव्यं स रसस्ततो ग्राह्यः ॥
मोचरसः समङ्गा फलिनी पलांशिभिस्त्रिभिस्तैश्च ।
वत्सकबीजं तुल्यं चूर्णीकृतमत्र दातव्यम् ॥
पूतोत्क्वथितः सान्द्रः सरसो दर्वीप्रलेपनो ग्राह्यः ।
मात्राकालोपहिता रसक्रियैषा जयत्यसृक्स्रावम् ॥
छागलीपयसा युक्ता पेया मण्डेनाथवा यथाग्निबलम् ।
जीर्णौषधश्च शालीन् पयसा छागेन भुञ्जीत ॥
रक्तगुदजातीसारं शूलं सासृग्रुजो निहन्त्याशु ।
बलवच्च रक्तपित्तं रसक्रियैषा ह्युभयभागम् ॥ ४३ ॥

---

प्रचप । मधुन कुडवौऽष्टौ पलानि, घृतकुडवोऽप्येवम् कुडवद्वैगुण्यन्तु पूर्वमेव पतमिति ॥ ४२ ॥

कुटजत्वच इत्यादि।—अत्र पलशतं तुला, तेन "तुलाद्रव्ये जलद्रोण" इति नात द्रोणमात्रं जलं ग्राह्यम्। तच्च "यावत् स्यादरसम्" इति वचनाच्चतुर्भागाव- कार्य्यम्, उक्तं हि "चतुर्भागजलं प्रायो द्रव्यं गतरसं भवेत्" इति। अन्ये न्त्रान्तरीययोगान्तरे 'द्रोणेऽम्भसः पलशतं विपाच्य कुटजत्वचोऽष्टभागस्थ" इत्यष्ट- ावशिष्टदर्शनात् अत्राप्यष्टभागावशेषः क्काथो ग्राह्य इत्याहुः। व्यवहारस्तु पूर्वं- महेन्द्रसलिलमान्तरीक्षजलम्, तदभावे भूमिस्थजलं तदनुकारि ग्राह्यम्। - "किञ्चित्तुवरानुं सतनं लघु शीतं सुगन्धि सुरसञ्च। अनभिष्यन्दि च यत् चितिस्थमैन्द्रवज्जज्ञेयम्"। फलिनी प्रियङ्गुः। दर्वीप्रलेपनो ग्राह्य इति प्रलेपातस्थायामवतारणीय इत्यर्थः। तेन रसक्रिया लेपरूपैव, वाग्भटे- क्तम्—"पक्वा रसञ्च लीढ्वा च तैर्दयथाग्निबलं पिबेत" इत्यादि। उभयभागमिति पि युगपदूर्द्धाधःप्रवृत्तरक्तपित्तस्यासाध्यत्वं, तथाप्युभयभागं हन्तीत्यस्य क्रमेणोर्द्ध- ागञ्च हन्तीत्यर्थः, तत्राप्यधोगस्य याप्यत्वात् तत्प्रतिपादनमेव निहन्त्यादित्य- र्थः। अन्ये तु योगशक्तेरचिन्त्यत्वादसाध्यमपि—हन्तीत्यर्थमाहुः ॥४३॥

कुटजाद्यं घृतम्—

कुटजफलवल्ककेशरनीलोत्पललोध्रधातकीकल्कैः ।
सिद्धं घृतं विधेयं शूलरक्तार्शसां भिषजा ॥ ४४ ॥

सुनिषण्णक-चाङ्गेरीघृतम्—

अवाक्पुष्पी बला दर्वी पृश्निपर्णी त्रिकण्टकम् ।
न्यग्रोधोडुम्बराश्वत्थशुङ्गाश्च द्विपलोन्मिताः ॥
कषाय एष पेष्यास्तु जीवन्ती कटुरोहिणी ।
पिप्पली पिप्पलीमूलं मरिचं देवदारु च ॥
कलिङ्गं शाल्मलीपुष्पं वीरा चन्दनमञ्जनम् ।
कट्फलं चित्रकं मुस्तं प्रियङ्गुतिविषे स्थिरा ॥
पद्मोत्पलानां किञ्जल्कः समङ्गा सनिदिग्धिका ।
विल्वं मोचरसं पाठा भागाः स्युः कार्षिकाः पृथक् ।
चतुःप्रस्थशृतं प्रस्थं कषायमवतारयेत् ।
त्रिंशत् पलानि तु प्रस्थो विज्ञेयो द्विपलाधिकः ॥
सुनिषण्णक-चाङ्गेर्योः प्रस्थौ द्वौ स्वरसस्य च ।
सर्वैरेतैर्यथोद्दिष्टैर्घृतप्रस्थं विपाचयेत् ॥
एतदर्शःस्वतीसारे त्रिदोषे रुधिरस्रुतौ ।
प्रवाहणे गुदभ्रंशे पिच्छासु विविधासु च ॥
उत्थाने चातिबहुशः शोथशूलगुदामये ।
मूत्रग्रहे मूढवाते मन्दाग्नावरुचावपि ॥

---

कुटजाद्यघृते कुटजस्य फलं वल्कञ्च ; वल्कशब्दो वल्कलवचनः, क्वचित् वल्कलमिति पाठः । अत्र जलं चतुर्गुणमर्थवशात् ॥ ४४ ॥

अवाक्पुष्पीत्यादि ।—अवाक्पुष्पी छिण्ठवल्ली । एषामष्टानां प्रत्येकं द्वैपलिकमिति मिलित्वा षोड़शपलं क्वाथ्यं भवति । तथा सुनिषण्णकचाङ्गेर्योर्मिलित्वा प्रस्थद्वयं, मानप्रधानत्वान्निर्देशस्य । वीरा अत्र क्षीरकाकोली । चतुःप्रस्थशृतं ...

प्रयोज्यं विधिवत् सर्पिर्बलवर्णाग्निवर्द्धनम् ।
विविधेष्वन्नपानेषु केवलं वा निरत्ययम् ॥ ४५ ॥

क्षारः ।

प्रशस्तेऽहनि नक्षत्रे कृतमङ्गलपूर्वकम् ।
कालमुष्ककमाहृत्य दग्ध्वा भस्म समाहरेत् ॥
आढ़कन्त्वेकमादाय जलद्रोणे पचेद्भिषक् ।
चतुर्भागावशिष्टेन वस्त्रपूतेन वारिणा ॥
शङ्खचूर्णस्य कुड़वं प्रक्षिप्य विपचेत् पुनः ।
शनैः शनैर्मृद्वग्नौ तु यावत् सान्द्रतनुर्भवेत् ॥
सर्जिकायवशूकाभ्यां शुण्ठी मरिचपिप्पली ।
वचा चातिविषा चैव हिङ्गुचित्रकयोस्तथा ॥
एषां चूर्णानि निक्षिप्य पृथक्त्वेनाष्टमाषकम् ।

---

त्यादि यद्यपि षोडशपले क्वाथे चतुःप्रस्थं जलमुत्सर्गसिद्धमेव तथा शेषोऽपि र्थो भागः प्रस्थ एव भवति, तथापि यदेतच्चतुःप्रस्थशृतमित्यादि वचनं, तत् ष्यश्चतुर्गुणं वारीत्यादिपरिभाषायाः सूचकं ज्ञेयम्। तथा "त्रिंशत्पलानि तु ी विज्ञेयो द्विपलाधिकः" इत्यपि वचनं द्रवद्वैगुण्यपरिभाषासूचकत्वेनैव ज्ञेयम्। देव दृष्ट्वा दृढबलसंस्कारेऽपि द्रवद्वैगुण्यमुक्तम्। किंवा परिभाषासिद्धमपि द्वैगुण्यं यदिह निर्दिशति, तद्द्रवद्वैगुण्यपरिभाषा क्वचिद्बाधितापि भवतीति यति। तेन कुड़वप्रस्थादिकं गृहीत्वैव द्वैगुण्यं, न कुडवादर्वाक् इत्यर्थः सिद्धो ति। अन्ये तु दाक्ष्यार्थसंशयितशिष्यबुद्धिदृढार्थमेतद्वचनमित्याहुः। त्रिंशत्पल- षणतया यद्यपि द्विपलाधिकानीति निर्देशो युज्यते, तथापि प्रस्थविशेषणतया स्य एकवचनस्य च निर्देशः समर्थनीयः। उत्थाने वक्ष्य इतिश्लोकश्लोकाति- णे ॥ ४५ ॥

इदानीं क्षारपाकविधिमाह प्रशस्त इत्यादि। कालमुष्ककः कृष्णपुष्पो घण्टा- लि, स एव श्रेष्ठगुणः, यदाह विश्वामित्रः "श्वेतपुष्पः कृष्णपुष्पो रक्तपुष्पस्तथैव पीतोऽन्योऽपि वरस्तेषु कृष्णपुष्पः प्रकीर्त्तितः" इति। तस्य च काष्ठं

दर्व्या सङ्घट्टितश्चापि स्थापयेदायसे घटे ।
एष वह्निसमः क्षारः कीर्त्तितः काश्यपादिभिः ॥ ४६ ॥
तोये कालकमुष्ककस्य विपचेद्भस्माढ़कं षड्गुणे
पात्रे लोहमये दृढ़े विपुलधीर्दर्व्या शनैर्घट्टयन् ।
दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेद्
यद्योरण्डजनालमेष दहति क्षारो वरो वाक्शतात् ॥
प्रायस्त्रिभागशिष्टेऽस्मिन्नच्छपैच्छिल्यरक्तता ।
सञ्जायते तदास्राव्य क्षाराम्भो ग्राह्यमिष्यते ॥
तुर्य्येणाष्टमकेन षोड़शभवेनांशेन संव्यूहिमो ।
मध्यः श्रेष्ठ इति क्रमेण विहितः क्षारोदकाच्छुङ्ककः ॥

---

तिलनालैर्दग्ध्वा भस्म कर्त्तव्यम्, इत्यमेव सुश्रुताभिधानात्। आढकमिति भस्म चतुःषष्टिपलानि। जलद्रोण इति द्वैगुण्याच्चतुःषष्टिशरावे, अन्ये तु अत्र द्वैगुण्यं नेच्छन्ति। शङ्खचूर्णस्य कुड़वश्चतुःपलः, षोडशांशेनाकृतद्वैगुण्यात्। परिस्रावितपादावशिष्टक्षारोदकाढकादिति चन्द्रिका। आगमप्रामाण्यसिद्धद्वैगुण्यपक्षे तु द्वात्रिंशांशेनेति बोध्यम्। आयस इति लोहमये; एतच्च पात्रविशेषकथनं गुणोत्कर्षार्थम् "यथा कुर्वन्ति स उपायः" इत्युक्तेः। क्षार इति प्रतिसारणीयः क्षार इत्यर्थः, प्रतिसारणीयश्च भक्षणीय इत्यर्थः॥ ४६ ॥

तोये कालकमुष्ककस्येति।—षड्गुणेति षडाढके व्यवहारादकृतद्विगुणे, अतएव वृन्देनोक्तं—"द्वैगुण्यं नाढकेऽप्यत्र भागमात्रोपलक्षणात्" इति। एतच्चान्ये दूषयन्ति, आढकादिश्रुत्या द्रवे यद्द्वैगुण्यं सर्वागमसिद्धं तत् कथं बाधनीयम्; न च क्वचित् तन्त्रे भागमात्रमुक्तम्, येन भागमात्रोपलक्षणमिति वाच्यम्, अतएव चक्रेणास्वरसादेव द्वैगुण्यार्थं न किमपि लिखितम्। दग्ध्वाग्नौ बहुशङ्खनाभिशकलान् पूतावशेषे क्षिपेदिति त्रिभागशेषेणाच्छपैच्छिल्यादिलक्षणोदये कल्कमपनीय स्रावयित्वा क्षाराम्बु ग्राह्यम्; ततः पुनः पचेत्; पश्चादासन्नपाके बहुशङ्खनाभिशकलानग्नौ दग्ध्वा तस्य चूर्णं तुर्य्येणेत्यादि वक्ष्यमाणानुसारेण क्षिपेत्। अन्ये तु त्रिभागशेषे चतुर्भागावशेषे वा क्षारोदके वस्त्रपूते शङ्खचूर्णं दत्त्वा पुनः पक्तव्यं, यथा नातिसान्द्रनतितरलश्च स्यादित्याहुः। पूतावशेष इत्यत्र पूतास्थिशेषे इति केचित् पठन्ति,

नातिसान्द्रो नातितनुः क्षारपाक उदाहृतः ।
दुर्नामकादौ निर्दिष्टः क्षारोऽयं प्रतिसारणः ॥
पानीयो यस्तु गुल्मादौ तं वारानेकविंशतिम् ।
स्रावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे ॥ ४७ ॥

क्षारसूत्रम्—

भावितं रजनीचूर्णैः स्नुहीक्षीरे पुनः पुनः ।

---

सन्नाते च चतुर्थांशावशेषे क्षारोदक इत्यर्थः । सम्यक् सिद्धक्षारलक्षणमाह यदेरण्डनालमित्यादि ।—एष इति पक्वः शीतः क्षारो यदि निस्त्वचमेरण्डनाल लेपेन शाकशताक्षोटिकशताद् दहति, तदा वरः श्रेष्ठ इत्यर्थः । पूतावशेषे इत्युक्तं, तच्च कियदवशिष्टं स्थाप्यम् इत्याह प्रायस्त्रिभाग इत्यादि । आस्राव्येति वस्त्रेण गालयित्वा । इदानीं प्रक्षेप्यशङ्खचूर्णस्य मानभेदेन प्रतिसारणीयक्षारस्य मृद्वादिभेदमाह तुर्य्येणेत्यादि ।—क्षारोदकात् इति त्रिभागावशिष्टक्षारोदकमपेक्ष्य शङ्खकः शङ्खचूर्णं यदि तुर्य्येण चतुर्थांशेन विहितः प्रयुक्तो भवति, तदा संव्यूहिम इति मृदुक्षारो भवति । संव्यूहिम इति मृदुक्षारसंज्ञा । अष्टमकेनाष्टमांशेन यदि शङ्खचूर्णं दीयते, तदा मध्यः क्षारः ; षोडशभवेनांशेन यदि शङ्खचूर्णं दीयते, तदा श्रेष्ठः क्षार इत्यर्थः । यद्यपि संव्यूहिमे क्षारोदकाच्चतुर्थांशेन दीयमानं शङ्खचूर्णं मध्यश्रेष्ठक्षारे दीयमानशङ्खचूर्णापेक्षया प्रभूतमेव, तथापि क्षारस्य मृदुत्वमेव भूयसा शङ्खचूर्णेन क्षारोदकस्य तीक्ष्णताया अभिभूतत्वात् । पानीयक्षारे तु न शङ्खचूर्णयोग इति तस्य नैते भेदाः । प्रतिसारणीयक्षारपाकलक्षणं तथा तद्विषयश्चाह नातिसान्द्र इत्यादि ।—प्रतिसारण इति म्रक्षणप्रयोजकः । पातव्यक्षारोदकस्य विधानं विषयश्चाह पानीय इत्यादि ।—पानीय इति पातव्यो यः क्षारः, तं क्षारं षड्गुणे चतुर्गुणे वा जले पाकं विनैव एकविंशतिवारान् प्रतिस्राव्य क्षारोदकं ग्राह्यम् । अन्ये तु चतुर्गुणे जले पक्त्वा अर्द्धावशिष्टं कृत्वा कल्कमपसार्य्य क्षारोदकम् एकविंशतिवारान् परिस्रावयेदेव ; न प्रतिसारणीयक्षारवत् अस्य पुनःपाक इति तात्पर्य्यार्थ इत्याहुः । विश्वामित्रोऽप्याह "पानाय भावनायाथ परिस्राव्य चतुर्गुणे । जले चार्द्धावशिष्टे च क्षाराम्भो ग्राह्यमिष्यते" इति पानाय यद्भावनं क्षारोदकविधानं तदर्थमित्यर्थः । पानीयक्षारमात्रा च पलविकर्षार्द्धपलरूपा क्रमादुत्तममध्यमाधमबलानलविषया ज्ञेया ॥ ४७ ॥

बन्धनात् सुदृढ़ं सूत्रं भिनत्त्यर्शो भगन्दरम् ॥
प्राग्दक्षिणं ततो वामं पृष्ठजञ्चाग्रजं क्रमात्।
पञ्चतिक्तेन संस्नेह्य दहेत् क्षारेण वह्निना ॥
वातजं श्लेष्मजञ्चार्शः क्षारेणास्रज पित्तजे।
महान्ति तनुमूलानि छित्त्वैव बलिनो दहेत्।
चर्मकीलं तथा छित्त्वा दहेदन्यतरेण वा।
पक्वजम्बूपमो वर्णः क्षारो दग्धः प्रशस्यते ॥ ४८ ॥
गोजोशेफालिकापत्रैरर्शः संलिख्य लेपयेत्।
क्षारेण वाक्शतं तिष्ठेद् यन्त्रद्वारं पिधाय च ॥
तच्चापनीय वीक्षेत पक्वजम्बूफलोपमम्।
यदि च स्यात् ततो भद्रं नो चेल्लिम्पेत् तथा पुनः ॥
तत् तुषाम्बुप्लुतं साज्यं यष्टीकल्केन लेपयेत्।
न निम्नं तालवर्णाभं वह्निदग्धं स्थितास्रजम् ॥
निर्वाप्य मधुसर्पिर्भ्यां वह्निसञ्जातवेदनाम्।

---

क्षारसूत्रमाह भावितमित्यादि।—पुन पुनरिति सप्ताहमित्यर्थः। प्राग्दक्षिणमित्यादि।—एतश्च क्रमोपदर्शन मङ्गलार्थमस्मद्विशिष्टपुरुषगम्य वा, एष च क्रमो यस्य चतुर्ष्वेव पार्श्वेष्वर्शांसि सन्ति त प्रत्य व बोध्य, यस्य पुनरेकतमपार्श्वे, तस्य तदा दहनीयम्, एष च क्रम क्षारे क्षारसूत्रेऽग्नौ च। अग्रजमिति अण्डकोष समीपस्थम, अस्य च दाहो वृद्धवैद्यैर्न क्रियते षाण्ढ्यभयात। पञ्चतिक्तेनेति पञ्चतिक्तघृतेन पानादिना स्नेहयित्वेत्यर्थः। क्षारेण वह्निना च उभयमेव श्लेष्मजं वातजञ्च दहेत। रक्तजे पित्तजे पुन क्षारेणैव दहेत। क्षारो हि सर्वत्रैवोचितः। यदाह सुश्रुत—"क्षारस्तु सर्वत्रैवातिप्रसिद्धो मतमि" इति। अन्यतरेणेति क्षारेण वह्निना वा। क्षारेण सम्यग्दग्धस्य लक्षणमाह पक्वेत्यादि।—पक्वजम्बूपम. स्निग्धकृष्णवर्ण इत्यर्थ. ॥ ४८ ॥

प्रतिसारणीयक्षारो यथोपयुज्यस्तदाह गोजीत्यादि।—गोजी शाखोटक क्षारेण लेपयेदित्यन्वय। लघूच्चारणकालो वाक्, तस्या. शत छोटीशत वा

सम्यग्दग्धे तुगाक्षीरीप्लक्षचन्दनगैरिकैः॥
सामृतैः सर्पिषा युक्तैरालेपं कारयेद्भिषक्।
मुहूर्त्तमुपवेश्यासौ तोयपूर्णेऽथ भाजने॥
क्षारसुष्णाम्बुना पाय्यं विबन्धे मूत्रवर्चसोः।
दाहे वस्त्यादिजे लेपः शतधौतेन सर्पिषा॥
नवान्नं माषतक्रादि सेव्यं पाकाय जानता।
पिबेद्व्रणविशुद्ध्यर्थं वराक्वाथं सगुग्गुलुम्॥
जीर्णं शाल्यन्नमुद्गादि पथ्यं तिक्ताज्यसैन्धवम्।
रूढमवव्रणं वैद्यः क्षारं दत्त्वानुवामयेत्।
पिप्पल्याद्येन तैलेन सेवेद्दीपनपाचनम्॥ ४८॥

---

यन्त्रद्वार गुदस्थितयन्त्रस्य द्वारं पिधाय कर्पटादिना ढक्कयित्वा। पक्वजम्बूफलोपमं सम्यग्दग्धे; हीनदग्धे तु लोहितं भवति। यदाह वाग्भटः—"पक्वजम्बूनिभं ... सम्यग्दग्धं विपर्य्ययात। ताम्राभ तोदकण्ड्वाढ्यं दुर्गन्धं तत् पुनर्दहेत्। अतिदग्धे सवेद्रक्तं मूर्च्छादाहज्वरादय.। गुदे विशेषाद्विण्मूत्रसंरोधो वातिवर्त्तनम्। वातपित्तप्रशमनी शीता तत्र क्रिया हिता" इति। तुषाम्बु काञ्जिकम्। न निम्नमित्यादिना सम्यग्वह्निदग्धलक्षणम्। वह्निदग्धमिति वह्निना सम्य..., न निम्नमित्यादि लक्षणयुक्तं भवतीत्यर्थः। तालवर्णाभमिति पक्वतालसमवर्णम्, तालवृन्ताभमिति पाठेऽपि पक्वतालवृन्तसमवर्णमित्यर्थ.। स्थिवास्रजमिति स्थितरक्तम्, एतच्च यदा अर्शश्छित्त्वा दह्यते तदा ज्ञेयम्। दाहस्य शिरासङ्कोचत्वेन रक्तस्तम्भकत्वात्। दाहानन्तरं यद्विधेयं तदाह निवाप्येत्यादि।—सम्यग्दग्धेऽर्शसीत्यर्थः। तुगाक्षीरी वंशलोचना, तदभावे तालक्षीरी, प्लक्षः पर्कटिः, तस्य वल्कलम्, अमृता गुडूची. यद्यपि गुडूची पाकादुष्णवीर्य्या तथापि स्पर्शाच्छीतैव, यथा काञ्जिकमम्लमपि भक्षणात् पित्तकरम् स्पर्शेन शीतमिति कृत्वा पित्तहरं भवति, तेन गुडूच्या निर्वापणत्व चिन्त्यमिति केनचिदुक्तम्, तदप्यपास्तम्, किं वा उष्णवीर्य्यायाः अपि गुडूच्या द्रव्यान्तरसंयोगमहिम्नैवात्र दाहप्रशमकत्वं ज्ञेयम्। तोयपूर्ण इति कोष्णतोयपूर्ण इत्याहुः। क्षारसुष्णाम्बुनेति, क्षार यवक्षारम्। वराक्वाथमिति वरा त्रिफला,

अग्निमुखं लौहम्—

त्रिवृच्चित्रकनिर्गुण्डी-स्नुहीमुण्डतिकाञ्जटाः।
प्रत्येकशोऽष्टपलिका जलद्रोणे विपाचयेत्॥
पलत्रयं विड़ङ्गस्य व्योषात् कर्षत्रयं पृथक्।
त्रिफलायाः पञ्चपलं शिलाजतुपलं न्यसेत्॥
दिव्यौषधिहतस्यापि वैकङ्कतहतस्य वा।
पलद्वादशकं देयं रुक्मलौहस्य चूर्णितम्॥
पलैश्चतुर्विंशतिभिर्मधुशर्करयोर्युतम्।
घनीभूते सुशीते च दापयेदवतारिते॥
एतदग्निमुखं नाम दुर्नामान्तकरं परम्।
सममग्निं करोत्याशु कालाग्निसमतेजसम्॥
पर्वता अपि जीर्य्यन्ति प्राशनादस्य देहिनः।
गुरुवृष्यान्नपानानि पयो मांसरसो हितः॥
दुर्नामपाण्डुश्वयथुकुष्ठप्लीहोदरापहम्।
अकालपलितश्चैतदामवातगुदामयम्॥
न स रोगोऽस्ति यश्चापि न निहन्यादिदं क्षणात्।
[illegible]रकाञ्जिकादीनि ककारादीनि वर्जयेत्।
स्रवत्यतोऽन्यथा लोहं देहात् किट्टञ्च दुर्जरम्॥ ५० ॥

---

तिक्ताज्यं पञ्चतिक्तघृतम्। क्षारं दत्त्वेति क्षारवस्तिं दत्त्वा क्षारवस्तिदानानन्तर पिप्पल्याद्येन तैलेनानुवासयेदित्यर्थः॥ ४९ ॥

प्रसिद्धफलमग्निमुखलौहमाह त्रिवृच्चित्रकेत्यादि।—अत्र मुण्डतिका मुण्डिरी, अञ्जटा भूम्यामलकी, अस्याः स्थाने जटेति पाठे त्रिवृदादीनां मूलमित्यर्थः। एषाञ्च जलद्रोणे क्वाथश्चतुर्थभागावशिष्टः षोडशशरावरूपोऽर्थवशादेव सिद्धः। पृथगित्यनेन व्योषस्य प्रत्येकं त्रिकर्षमानत्वम्; त्रिफलायाश्च मिलित्वा पञ्च पलानि। एषाञ्च विडङ्गादिशिलाजत्वन्तचूर्णानां पाकावतारसमये प्रक्षेपः। दिव्यौषधिः स्वर्णमाक्षिक मनःशिला वा शालिकीकाकनी वा, अन्यत्र तु मनःशिलाहतस्येतिपाठान्तरदर्शना-

भल्लातकलौहम्—

चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता।
हस्तिपिप्पल्यपामार्गदण्डोत्पलकुठेरकाः॥
एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत्।
भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत्॥
तत्र पादावशेषेण लौहपात्रे पचेद्भिषक्।
तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुड़वद्वयम्॥
त्र्यूषणं त्रिफला वह्निः सैन्धवं विड़मौद्भिदम्।
सौवर्चलविड़ङ्गानि पलिकांशानि कल्पयेत्।
कुड़वं वृद्धदारस्य तालमूल्यास्तथैव च॥
शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिक्षिपेत्।
सिद्धे शीते प्रदातव्यं मधुनः कुड़वद्वयम्॥
प्रातर्भोजनकाले च ततः खादेद्यथाबलम्॥
अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम्।

---

मन.श्चिन्तेति युक्तम्। लौहमारकत्वात तु सवाण्येवाविरुद्धानि। वैकङ्कतवृतस्य चेति राढायां वहिच्चीति ख्यातम्, वारेन्द्रादिषु वयोकड्डोलिरिति ख्यातम्। किन्तु स्वर्णमाक्षिकादिकं विना सम्यग् लौहमारण न सिध्यति ; अवश्य तत्साधनद्वयसमुमयेनापि कर्त्तव्यम्। रुक्मलौहं कान्तव्यतिरिक्त वज्रपाण्ड्वादिकृष्णलौहम् ; तदुक्तं निघण्टौ "तीक्ष्णमथसमुत्तरापथपिण्डं रुक्म रुक्मकुट्टिः कृष्णलौहनामानि"। अत्रानुक्तस्यापि गव्यघृतस्य चतुर्विंशतिपलानि पाकारम्भसमय एव तद्वैद्यैर्दीयन्ते, घृतं विना क्वचिदपि लौहस्य पाकादर्शनात्, अन्त एव क्वचित् पलैश्चतुर्विंशत्याज्यशर्करयोरपीति पाठान्तरं केचित् पठन्ति। मधुशर्करयोश्चतुर्विंशतिपलानि मिलित्वा ; शर्कराघृताभ्यां पाके रात्रिपर्युषिते शीते मधुनः प्रक्षेपः, तेन शर्कराया द्वादशपलानि, मधुनो द्वादश पलानि, घृतस्य च चतुर्विंशतिपलानीति। भक्षणविधिरमृतसारलौहवत॥ ५०॥

भल्लातकलौहे कुठेरकः पर्णाशः। भल्लातकसहस्रे द्वे द्व्याकृतिमानात्। तत्रै-

क्रिमिगुल्माश्मरीमेहान् शूलञ्चाशु व्यपोहति ॥
करोति शुक्रोपचयं वलीपलितनाशनम् ।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥ ५१ ॥
रसगुड़िका—रसस्तु पादिकस्तुल्या विड़ङ्गमरिचाभ्रकाः ।
गङ्गापालङ्कजरसे खल्वयित्वा पुनः पुनः ॥
रक्तिमात्रा गुदार्शोघ्नी वह्नेरत्यर्थदीपनी ।
वेगावरोधस्त्रीपृष्ठयानमुत्कटुकासनम् ॥
यथास्वं दोषलञ्चान्नमर्शसः परिवर्जयेत् ॥ ५२ ॥

इति अर्शश्चिकित्सा ।

चेति जयद्रोथे। तीक्ष्णलौहस्येति वज्रपाण्ड्वादिलौहस्य। गव्यघृतस्य कुडवद्वयमिति हं गुल्यात् षोड़श पलानि ; एव मधुनोऽपि। सिद्धे च तूत्रषणादीनां प्रक्षेपश्चर्वमपरमस्तसारवत्। अथामृतसारोक्तविधिना पुटितं यथाव्याधि प्रत्यनीकद्रव्य॰शुद्धितञ्च लौह ग्राह्य, भक्षणादिविधिरपि तथैव ५१ ॥

रसस्तु पादिक इति विडङ्गादीनामेकतमभागापेक्षया ; तेन विडङ्गमरिचाभ्रकाणां प्रत्येकं त्रयो भागा', पारदस्यैको भाग इत्यर्थः। शोधितपारद २ माषा, मारिताभ्रचूर्णं विडङ्ग मरिच प्रं ६ माषा। ग्रन्थान्तरेऽपि रसभागापेक्षया विडङ्गमरिचाभ्रकाणां प्रत्येक भागत्रयमुक्तम्। गङ्गापालङ्केति पालङ्कसदृशपत्रं गङ्गापालङ्कं, गाङ्गराङ इति ख्यातम्। पुनः पुनरिति सप्ताहमात्रं कृतं नियम इत्यर्थः रसाभ्रकशोधनञ्च सुधावत्युक्तविधयैव विधेयम्। पृष्ठयानं हस्त्यश्वादिपृष्ठे गमनम् ॥ ५२ ॥

इति अर्शश्चिकित्सा ।

---

## अथाग्निमान्द्यचिकित्सा ।

समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः ।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ १ ॥

हिङ्ग्वष्टकं चूर्णम्—

त्रिकटुकमजमोदा सैन्धवं जीरके द्वे
समधरणधृतानामष्टमो हिङ्गुभागः ।
प्रथमकवडभुक्तं सर्पिषा चूर्णमेत-
ज्जनयति जठराग्निं वातरोगांश्च हन्यात् ॥ २ ॥

समयवशूकमहौषधचूर्णं लीढं घृतेन गोसर्गे ।
कुरुते क्षुधां सुखोदकं पीतं विश्वौषधं वैकम् ॥ ३ ॥

अन्नमण्डं पिबेदुष्णं हिङ्गुसौवर्चलान्वितम् ।
विषमोऽपि समस्तेन मन्दो दीप्येत पावकः ॥ ४ ॥

---

अग्रे:कार्य्यत्वात् तदनन्तरमग्निमान्द्यादिचिकित्सामाह समस्येत्यादि । रक्षण-मिति पालनम् । वातनिग्रहो वातस्य प्रशमनमित्यर्थः ॥ १ ॥

त्रिकटुकमित्यादि । वाग्भटेनायं योगो गुल्माधिकारे पठितः । अजमोदा यमानी, एवं सर्वत्रान्तःपरिमार्जने ; वहिःसम्मार्जने पुनरजमोदैव, उक्तं हि "अन्तः-सम्मार्जने प्रायोऽजमोदा च यमानिका । वहिःसम्मार्जने ज्ञेया चाजमोदाऽज-मोदिका" इति । समधरणधृतानामिति धरणं तुला, तया समं यथा स्यात् तथा धृतानाम् ; अन्ये तु पलदशमांशो धरणम्, समाश्च ते धरणधृताश्चेति विग्रहः । अष्टमो हिङ्गुभाग इति त्रिकट्वादीनां सप्तभागास्तदेकभागसमो हिङ्गुभाग इत्यर्थः । वातरोगांश्च हन्तीत्यत्र वाग्भटे वातगुल्मांश्च हन्तीति क्वचित् पाठः ॥ २ ॥

समेत्यादौ—यवशूको यवक्षारः । विश्वौषधं वैकमिति वाशब्दः पूर्व्वयोगा-पेक्षया इवार्थे वाशब्दो वा । गोसर्गे गोः सूर्य्यकिरणस्य सर्गे मोक्षे प्रातरित्यर्थः ॥३॥

अन्नमण्डमित्यादि ।—अन्नस्य मण्डः अन्नमण्ड इति केचित् । अन्ये तु चतुर्दश-गुणाम्बुसाधित एव मण्डोऽन्नमण्डशब्देनोच्यते, अन्नपदं सुरामण्डादिनिरासार्थ-मित्याहुः ॥ ४ ॥

अन्नमण्डगुणाः—

क्षुद्बोधनो वस्तिविशोधनश्च प्राणप्रदः शोणितवर्द्धनश्च ।
ज्वरापहारी कफपित्तहन्ता वायुं जयेदष्टगुणो हि मण्डः ॥५॥

तीक्ष्णाग्निचिकित्सा ।

नारीक्षीरेण संयुक्तां पिबेदौडुम्बरीं त्वचम् ।
ताभ्यां वा पायसं सिद्धं पिबेदत्यग्निशान्तये ॥
यत्किञ्चिद् गुरु मेध्यञ्च श्लेष्मकारि च भेषजम् ।
सर्वं तदत्यग्निहितं भुक्त्वा प्रस्वपनं दिवा ॥ ६ ॥
मुहुर्मुहुरजीर्णेऽपि भोज्यमस्योपकल्पयेत् ।
निरिन्धनोऽन्तरं लब्ध्वा यथैनं न निपातयेत् ॥ ७ ॥
विश्वाभयागुडूचीनां कषायेण षडूषणम् ।
पिबेत् श्लेष्मणि मन्देऽग्नौ त्वक्पत्रसुरभीकृतम ॥

क्षुद्बोधन इत्यादि ।—अष्टगुणो हि मण्ड इति सुतण्डुलानां प्रसृतद्वयञ्च तदर्द्धं मुद्ग कटकतक्र कुस्तुम्बुरी सन्धवहिङ्गु तत्नम् । एभिश्च सर्वं मण्ड इत्यस्यानन्तरमेव यद्यपि माधवकरेण द्रव्यगण मतण्ड इत्यादिवचनान्तर क्षुद्बोधनेत्यादि पद्य पठित तथाप्यन्नमण्डस्यापि मण्डत्वसामान्यादतत गुणाष्टक ज्ञेयम् । कुस्तुम्बुरी धन्याक तच्च मनागभृष्ट ग्राह्यम्, विधि पुनरस्य यथोक्तमानौ तण्डुलमुद्गौ तक्रजल युक्त्या दत्त्वा विपाच्य मण्डो ग्राह्य । पश्चात् त्रिकटुकादिभिर्यथा संस्कार इति ॥ ५ ॥

अत्यग्निचिकित्सामाह नारीक्षीरेणेत्यादि ।—उडुम्बरत्वच कर्ष पायसपचे तु उडुम्बरत्वच पलम् तण्डुलं नारीक्षीरञ्चानुरूप दत्त्वा पायसं कार्य्य । यत्किञ्चिदित्यादि माहिषीदुग्धादि ॥ ६ ॥

मुहुर्मुहुरित्यादि ।—तथाजीर्णेऽपि मुहुर्मुहुर्भोज्यमस्योपकल्पयेत, यथा निरिन्धनोऽग्नि, अन्तरमित्यवकाश लब्ध्वा, एनमातुरं न निपातयेत् न मारयेत, धातुपाकादिति भाव । उक्त हि 'आहारमग्नि पचति दोषानाहारवर्जित । धातून् क्षीणेषु दोषेषु न जीवितातुसंक्षय" इति ॥ ७ ॥

विश्वाभयेत्यादि ।—त्वक् गुडत्वक्, त्वक्पत्र सुरभिमावत्वकारके देये । षष

सग्रन्थिकोलं समरिचं षडूषणमुदाहृतम् ॥ ८ ॥
हरीतकी भक्ष्यमाणा नागरेण गुड़ेन वा।
सैन्धवोपहिता वापि सातत्येनाग्निदीपनी ॥ ९ ॥

सिन्धूत्थपथ्यमगधोद्भववह्निचूर्ण-
मुष्णाम्बुना पिबति यः खलु नष्टवह्निः।
तस्यामिषेण सघृतेन वरं नवान्नम्
भस्मीभवत्यशितमात्रमिह क्षणेन ॥ १० ॥

सिन्धूत्थहिङ्गुत्रिफलायमानी-
व्योषैर्गुडांशैर्गुडिकान् प्रकुर्य्यात्।
तैर्भक्षितैस्तृप्तिमवाप्नुवन् ना
भुञ्जीत मन्दाग्निरपि प्रभूतम् ॥ ११ ॥

---

कोलं समरिचं षडूषणमिति, तदुक्तं "मरिच पिप्पली शुण्ठी त्र्यूषणं समुदाहृतम्। पिप्पलीमूलसंयुक्तं चतुरूषणमुच्यते। साग्नि पञ्चोषणञ्चैव सचव्यञ्च षडूषणम्" इति। एतच्च षडूषणं प्रक्षेपविषये ज्ञेयम् ॥ ८ ॥

हरीतकीत्यादि।—सुश्रुतस्य। योगत्रयमेतत्, शुण्ठ्या कफे, गुडेन वाते, सैन्धवेन दोषत्रयेऽपि विशेषाद्वातकफे ॥ ९ ॥

सिन्धूत्थेत्यादि।—पथ्या हरीतकी, ह्रस्वत्वमिह छान्दसत्वात्। मगधोद्भवा पिप्पली, अत्रापि पूर्ववद्ध्रस्वत्वम्। वरं प्रकृष्टमिति यावत्, मांसघृताभ्यामधिकमपीत्यर्थः। केचिदिह सैन्धवादीनां मानभेदार्थं नातिप्रसिद्धं हरिश्चन्द्रमतं वर्णयन्ति। तद्यथा—हरीतकी हरिहरतुल्यषड्गुणा चतुर्गुणा चतुरविना सपिप्पली। द्विचित्रकं वरवदनैकसैन्धवं रसायनं कुरु नृप वह्निदीपनम्" इति। व्यवहारस्तु समभागेनेति ॥ १० ॥

सिन्धूत्थेत्यादौ—गुडांशैरिति एकद्रव्यसमोऽत्र गुडभागः, प्रायेण हि श्लेष्माधिकेऽग्निसादे श्लेष्मणि च गुडो बहुतरो न युक्त इत्याहुरेके। अन्ये तु सर्वचूर्णापेक्षया द्विगुणो गुड़ः, यस्माद् गडादर्द्धं समुदितचूर्णम्, तेन गड़ांशमिति, मोदके द्विगुणो गुड़ इति वचनमनुगृहीतं भवतीत्याहुः। तृप्तिमवाप्नुवन्निति मन्दाग्निरपि

विड़ङ्गभल्लातकचित्रकामृता:
सनागरास्तुल्यगुड़ेन सर्पिषा।
लिहन्ति ये मन्दहुताशना नरा
भवन्ति ते वाड़वतुल्यवह्नय: ॥ १२ ॥
गुड़ेन शुण्ठीमथवोपकुल्याम्
पथ्यां तृतीयामथ दाड़िमं वा।
आमेष्वजीर्णेषु गुदामयेषु
वर्चोविबन्धेषु च नित्यमद्यात् ॥ १३ ॥
भोजनाग्रे सदा पथ्यं जिह्वाकण्ठविशोधनम्।
अग्निसन्दीपनं हृद्यं लवणार्द्रकभक्षणम् ॥ १४ ॥

---

तावत् प्रभूत भुङ्क्ते यावत् तृप्तिमवाप्नोति। अनाप्नुवन्निति पाठे पुनरत्यग्नित्वात् प्रभूतभोजनेऽपि न तृप्तिमाप्नोतीत्यर्थ: ॥ ११ ॥

विडङ्गेत्यादि—तुल्यगुड़ेनेत्यत्र युक्ता इत्यध्याहार्य्यम्, तेनैव भागसमो गुड। केवलघृतेनैव लिहन्तीति व्याख्यानयन्ति केचित्। अन्ये तु तुल्यगुड़ेनेति पदं सर्पिर्विशेषणं वर्णयित्वा समुदितचूर्णापेक्षया द्विगुणेन मिलित्वा गुड़सर्पिषा लेह इति व्याचक्षते, युक्तञ्चैतत् नागार्जुनोक्तवचनसंवादात्; तथा हि "सचूर्णिता गुड़ूची विडङ्गभल्लातकनागरहुताशा:। ज्वलयन्ति जठराग्निं समेन गुड़सर्पिषा लीढा." इति ॥ १२ ॥

गुडेन शुण्ठीमित्यादि।—पथ्यां तृतीयामिति समस्तमसमस्तञ्च। तत्र समस्तपक्षे गुड़ेनेति पदम्, तथा पथ्यां तृतीयामिति पदञ्च शुण्ठ्यादिषु प्रत्येकं योज्यम्, तेन गुड़ेन पथ्यां तृतीयां शुण्ठीमित्येको योग:। तथा गुड़ेन पथ्यां तृतीयामुपकुल्यामिति। द्वितीय:। तथा गुड़ेन पथ्या तृतीयं दाड़िममिति लिङ्गविपरिणामेन योज्यमिति योगत्रयं यथासंख्यमामाजीर्णादिषु रोगेषु योज्यम्। यत्तु गुड़शुण्ठीभक्षणं गुड़पिप्पलीभक्षणं वा, तदस्मिन् व्याख्याने प्रयोगान्तरमेव। यदा तु पथ्यां तृतीयामित्यसमस्तपाठस्तदा गुड़ेनेति पदं शुण्ठ्यादिषु चतुर्षु प्रत्येकं योज्यम्, तेन चत्वारो योगा यथाक्रममामादिषु चतुर्षु योज्या:। अस्मिन् पक्षे तृतीयामिति पदं योगव्यवच्छेदार्थं ज्ञेयम् ॥ १३ ॥

कपित्थतक्रचाङ्गेरीमरिचाजाजिचित्रकैः।
कफवातहरो ग्राही खड़ो दीपनपाचनः॥ १५॥

शार्दूलकाञ्जिकः—

पिप्पली शृङ्गवेरञ्च देवदारु सचित्रकम्।
चविकां बिल्वपेशीञ्चाजमोदाञ्च हरीतकीम्॥
महौषधं यमानीञ्च धान्यकं मरिचं तथा।
जीरकञ्चापि हिङ्गुञ्च काञ्जिकं साधयेद्भिषक्॥
एष शार्दूलको नाम काञ्जिकोऽग्निबलप्रदः।
सिद्धार्थतैलसम्भृष्टो दश रोगान् व्यपोहति॥
कासं श्वासमतीसारं पाण्डुरोगं सकामलम्।
आमञ्च गुल्मशूलञ्च वातगुल्मं सवेदनम्॥
अर्शांसि श्वयथुञ्चैव भुक्ते पीते च सात्म्यतः।
क्षीरपाकविधानेन काञ्जिकस्यापि साधनम्॥ १६॥

अग्निमुखं चूर्णम्—

हिङ्गुभागो भवेदेको वचा च द्विगुणा भवेत्।
पिप्पली त्रिगुणा चैव शृङ्गवेरं चतुर्गुणम्॥

---

भीजबाग्ये इत्यादि स्पष्टम्।—इमन्तु योग सर्वेऽप्याद्रियन्ते प्रत्यक्षफलत्वात् सद्य-फलप्रदत्वाच्च॥ १४॥

कपित्थेत्यादौ—कफवातहर इत्येव पाठः, न तु कफपित्तहर इति, द्रव्यगुण-पर्यालोचनया कपित्थादीनां वातकफहन्तृत्वात्। खड़ इति यूषविशेषस्य पारि-भाषिकी संज्ञा, अस्य विधानञ्चातीसाराधिकार एवोक्तम्॥ १५॥

पिप्पलीत्यादौ—बिल्वपेशी बिल्वशलाटु, शृङ्गवेरम् आर्द्रकम्। पाकात् विभागशेषे काञ्जिके कटुतैले सन्तलनम्, हिङ्गुजीरकयोश्च प्रक्षेप इत्युपदिशन्ति वृद्धाः। सात्म्यतोऽभ्यासादित्यर्थः। क्षीरपाकविधानेनेति द्रव्यादष्टगुणं क्षीर-मित्यादिपरिभाषया; अतएवोक्तमन्यत्र "क्षीरमस्त्वारनालानां नास्ति पाकोऽम्भसा विना। सम्यक् पाको न गच्छेत्तु तस्मात् तोयं चतुर्गुणम्" इति॥ १६॥

यमानिका पञ्चगुणा षड्गुणा च हरीतकी ।
चित्रकं सप्तगुणितं कुष्ठञ्चाष्टगुणं भवेत् ॥
एतद्वातहरं चूर्णं पीतमात्रं प्रसन्नया ।
पिबेद् दध्ना मस्तुना वा सुरया कोष्णवारिणा ॥
सोदावर्त्तमजीर्णञ्च प्लीहानमुदरं तथा ।
अङ्गानि यस्य शीर्य्यन्ते विषं वा येन भक्षितम् ॥
अर्शोहरं दीपनञ्च शूलघ्नं गुल्मनाशनम् ।
कासं श्वासं निहन्त्याशु तथैव यक्ष्मनाशनम् ॥
चूर्णमग्निमुखं नाम न क्वचित् प्रतिहन्यते ॥ १७ ॥

पानीयभक्तगुडिका—

रसोऽर्द्धभागिकस्तुल्या विडङ्गमरिचाभ्रकाः ।
भक्तोदकेन सम्मर्द्य कुर्य्याद् गुञ्जानिभान् गुडीन् ॥
भक्तोदकानुपानैका सेव्या वह्निप्रदीपनी ।
वार्य्यन्नभोजनञ्चात्र प्रयोगे सात्म्यमिष्यते ॥ १८ ॥

बृहदग्निमुखं चूर्णम्—

द्वौ क्षारौ चित्रकं पाठाकरञ्जलवणानि च ।
सूक्ष्मैलापत्रकं भार्गी क्रिमिघ्नं हिङ्गु पौष्करम् ॥
शटी दार्वी त्रिवृन्मुस्तं वचा सेन्द्रयवा तथा ।

---

हिङ्गुभाग इत्यादौ—द्विगुणेत्याद्यभागापेक्षया एवं त्रिगुणेति । प्रसन्नयेति। सनिरुद्धवाते, दध्नेति शुद्धवाते, मस्तुनेति अल्पकफवाते, सुरया कफवाते, उष्णवारिणा सामवाते कफे च ॥ १७ ॥

पानीयभक्तगुडिकायां—रसोऽर्द्धभागिक इत्येकभागापेक्षया ; केचिदत्र कज्जलिकार्थं रसस्यार्द्धं गन्धकं क्षिपन्ति । विडङ्गादीनां प्रत्येकं रसापेक्षया द्विगुणो भागः। अर्शोऽधिकारोक्तरसगुडिकायान्तु विडङ्गादीनां रसापेक्षया प्रत्येकं त्रिगुणो भाग इति भेदः । भक्तोदकेनेत्यन्नभक्तपानीयेन ॥ १८ ॥

बृहदग्निमुखे—करञ्जं करञ्जमूलस्य त्वक् ; यत्तु एतस्य सुश्रुतेन कोविदार

धात्रीजीरककृष्णाम्लं श्रेयसी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यमानी सुरदारु च।
अभयातिविषा श्यामा हवुषारग्वधं समम् ॥
तिलमुष्ककशिग्रूणां कोकिलाच्चपलाशयोः।
क्षाराणि लौहकिट्टञ्च तप्तगोमूत्रसेचितम् ॥
सर्वाणि समभागानि सूक्ष्मचूर्णानि कारयेत्।
मातुलुङ्गरसेनैव भावयेच्च दिनत्रयम् ॥
दिनत्रयञ्च शुक्तेन चार्द्रकास्वरसेन च।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥
उपयुक्तविधानेन नाशयत्यचिराद्गदान्।
अजीर्णकमथो गुल्मं प्लीहानं गुदजानि च ॥
उदराण्यन्त्रवृद्धिञ्च अष्ठीलां वातशोणितम्।
प्रणुदत्युल्वणान् रोगान् नष्टमग्निञ्च दीपयेत् ॥
समस्तव्यञ्जनोपेतं भक्तं दत्त्वा सुभाजने।
दापयेदस्यचूर्णस्य विड़ालपदमात्रकम्।
गोदोहमात्रात् तत् सर्वं द्रवीभवति सोष्मकम् ॥ १८ ॥

---

णा फलमित्यनेन फलग्रहणमुपदिष्टम्, तच्छोधनविषयं ज्ञेयम्। लवणानि लवणानि, कृष्णाम्लं महार्द्रकं श्रेयसी गजपिप्पली, एवं सर्वत्राग्निदीपनयोगे, ति पर श्रेयस्यां रास्ना गृह्यते। उपकुञ्चिका स्वल्पकृष्णजीरकम्; अम्लिका न्तिडी, एवं सर्वत्राग्निदीपनयोगे पुरीष-संग्रहादौ, पुनरम्लिका चाङ्गेरी गृह्यते। मा हड्डारकः; आरग्वधः श्योणाकफलम्, तिलशब्देनात्र तिलनालग्रहणं रार्थत्वात्; मुष्ककः घण्टापारुली, लोहकिट्टं मण्डूरम्, तच्च पुराणं ग्राह्यम्। ष्टस्तु किट्टं पृथगेव पार्थिवद्रव्यं मण्डूरादिति। तप्तं गोमूत्रसेचितमिति प्रवर्णं कृत्वा सप्तधा गोमूत्रनिर्वापितमित्यर्थः; एवं सर्वत्र मण्डूरशोधनं ज्ञेयम्। नेति पञ्चयुक्तसन्धानविशेषेण, तदभावे काञ्जिकेन, एवमन्यत्रापि बोध्यम्। दोहमात्रात् गोदोहनमात्रकालात् ॥ १९ ॥

भास्करलवणम्—

पिप्पली पिप्पलीमूलं धन्याककृष्णजीरकम्।
सैन्धवञ्च विड़ञ्चैव पत्रं तालीशकेशरम्॥
एषां द्विपलिकान् भागान् पञ्चसौवर्चलस्य च।
मरिचाजाजिशुण्ठीनामेकैकस्य पलं पलम्॥
त्वगेले चार्द्धभागे च सामुद्रात् कुड़वद्वयम्।
दाड़िमात् कुड़वञ्चैव द्वे पले चाम्लवेतसात्॥
एतच्चूर्णीकृतं श्लक्ष्णं गन्धाढ्यममृतोपमम्।
लवणं भास्करं नाम भास्करेण विनिर्मितम्॥
जगतस्तु हितार्थाय वातश्लेष्मामयापहम्।
वातगुल्मं निहन्त्येतद् वातशूलानि यानि च।
तक्रमस्तुसुरासीधुशुक्तकाञ्जिकयोजितम्॥
जाङ्गलानान्तु मांसेन रसेषु विविधेषु च।
मन्दाग्नेरश्नतः शक्तो भवेदाश्वेव पावकः॥
अर्शांसि ग्रहणीदोषं कुष्ठामयभगन्दरान्।
हृद्रोगमामदोषांश्च विविधानुदरस्थितान्॥
प्लीहानमश्मरीञ्चैव श्वासकासोदरक्रिमीन्॥
विशेषतः शर्करादीन् रोगान् नानाविधांस्तथा।
पाण्डुरोगांश्च विविधान् नाशयत्यशनिर्यथा॥ २०॥

अग्निघृतम्—पिप्पली पिप्पलीमूलं चित्रको हस्तिपिप्पली।
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च॥

---

भास्करलवणे—केशरं नागकेशरपुष्पम्। पञ्चसौवर्चलस्येति पञ्चपलानि सौवर्चलस्येत्यर्थः। त्वगेले चार्द्धभागिके इति पलापेक्षया, तेन त्वगेलयोः प्रत्येकमर्द्धपल-मित्यर्थः। गन्धाढ्यमिति पत्रतालीशादिद्रव्ययोगादेव, न पुनरपरचातुर्जातप्रक्षेपेण॥ २०॥

द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान्।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥
आर्द्रकस्वरसप्रस्थं घृतप्रस्थं विपाचयेत्।
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते ॥
अर्शसां नाशनं श्रेष्ठं तथा गुल्मोदरापहम्।
ग्रन्थ्यर्वुदापचीकासकफमेदोऽनिलानपि ॥
नाशयेद् ग्रहणीदोषं श्वयथुं सभगन्दरम् ॥
ये च वस्तिगता रोगा ये च कुक्षिसमाश्रिताः।
सर्वांस्तान् नाशयत्याशु सूर्य्यस्तम इवोदितः ॥ २१ ॥

मस्तुषट्पलकं घृतम्—

पलिकैः पञ्चकोलैस्तु घृतं मस्तुचतुर्गुणम्।
सक्षारैः सिद्धमल्पाग्निकफगुल्मं विनाशयेत् ॥ २२ ॥

वड़वामुखचूर्णम्—

पथ्यानागरकृष्णाकरञ्जविल्वाग्निभिः सितातुल्यैः।
वड़वामुखं विजयते गुरुतरमपि भोजनं चूर्णम् ॥ २३ ॥

बृहदग्निघृतम्—भल्लातकसहस्रार्द्धं जलद्रोणे विपाचयेत्।
अष्टभागावशेषञ्च कषायमवतारयेत् ॥
घृतप्रस्थं समादाय कल्कानीमानि दापयेत्।
त्रूषणं पिप्पलीमूलं चित्रको हस्तिपिप्पली ॥
हिङ्गु चव्याजमोदा च पञ्चैव लवणानि च।
द्वौ क्षारौ हवुषा चैव दद्यादर्द्धपलोन्मितान् ॥

---

पिप्पलीत्यादि।--स्वल्पाग्निघृते हस्तिपिप्पली गजपिप्पली; अजमोदा वस्तगन्धा (वनयमानी), द्वौ क्षारौ यवक्षारः सर्जिकाक्षारश्च ॥ २१ ॥

मस्तुषट्पलके—घृतस्य प्रस्थः, "अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते" इत्युक्तेः। पलिकैः प्रत्येकशः, कल्कस्तु स्नेहपादिक इत्युक्तेः ॥ २२। २३ ॥

दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च।
आर्द्रकस्वरसञ्चैव शोभाञ्जनरसं तथा॥
तत्सर्वमेकतः कृत्वा शनैर्मृद्वग्निना पचेत्॥
एतदग्निघृतं नाम मन्दाग्नीनां प्रशस्यते॥
अर्शसां नाशनं श्रेष्ठं मूढ़वातानुलोमनम्।
कफवातोद्भवे गुल्मे श्लीपदे च दकोदरे॥
शोथं पाण्डामयं कासं ग्रहणीं श्वासमेव च।
एतान् विनाशयत्याशु तमः सूर्य्य इवोदितः॥ २४॥

क्षारगुड़ः—द्वे पञ्चमूले त्रिफलामर्कमूलं शतावरीम्।
दन्तीं चित्रकमास्फोतां रास्नां पाठां सुधां शटीम्॥
पृथग्दशपलान् भागान् दग्ध्वा भस्म समावपेत्।
त्रिःसप्तकृत्वस्तद्भस्म जलद्रोणे च गालयेत्॥
तद्रसं साधयेदग्नौ चतुर्भागावशेषितम्।
ततो गुड़तुलां दत्त्वा साधयेन्मृदुनाग्निना॥
सिद्धं गुडन्तु विज्ञाय चूर्णानीमानि दापयेत्।
वृश्चिकालीं द्विकाकोल्यौ यवक्षारं समावपेत्॥
एते पञ्चपला भागाः पृथक् पञ्च पलानि च।
हरीतकी त्रिकटुकं सर्जिकां चित्रकं वचाम्॥
हिङ्गुम्लवेतसाभ्याञ्च द्वे पले तत्र दापयेत्।
अक्षप्रमाणां गुड़िकां कृत्वा खादेद् यथाबलम्॥
अजीर्णं जरयत्येष जीर्णे सन्दीपयत्यपि।

---

बृहदग्निघृते—भल्लातकसहस्राद्ध मित्याकृतिमानात्, शोभाञ्जनरसः शोभाञ्जनस्य मूलत्वच स्वरस॥ २४॥

क्षारगुडे आस्फोता नवमल्लिका हाफरमालि इति ख्याता, सुधा स्नुही, तस्या मूलम्। त्रिःसप्तकृत्व इत्येकविंशतिवारान् वाराभिधेये कृत्वसुप्रत्ययः। वृश्चिकाली वृश्चिकपत्नी, काकोल्यौ काकोलीक्षीरकाकोल्यौ। एते पञ्चपला भागा, पृथगिति

सुखं भुक्तञ्च जीर्य्यते पाण्डुत्वमपकर्षति ॥
प्लीहार्शः श्वयथुश्चैव श्लेष्मकासमरोचकम् ।
मन्दाग्निविषमाग्नीनां कफे कण्ठोरसि स्थिते ॥
कुष्ठानि च प्रमेहांश्च गुल्मञ्चाशु व्यपोहति ।
व्यात: क्षार गुड़ो ह्येष रोगयुक्तं प्रयोजयेत् ॥ २५ ॥

चित्रकगुड़ः—

नासारोगे विधातव्या या चित्रकहरीतकी ।
विना धात्रीरसं सोऽस्मिन् प्रोक्तश्चित्रगुड़ोऽग्निदः ॥ २६ ॥

आमाजीर्णचिकित्सा ।

वचालवणतोयेन वान्तिरामे प्रशस्यते ॥ २७ ॥

विदग्धाजीर्णचिकित्सा ।

न्नं विदग्धं हि नरस्य शीघ्रं शीताम्बुना वै परिपाकमेति ।
ह्यस्य शैत्येन निहन्ति पित्तमाक्लेदिभावाच्च नयत्यधस्तात् ॥२८॥
दह्यते यस्य च भुक्तमात्रं दह्येत हृत्कोष्ठगलश्च यस्य ।

---

। पञ्चपलानीत्यत्र एषामिति शेष , तेन हरीतक्यादीनां वचान्तानां मिलित्वा पलानीत्यर्थः । हिङ्गु लवणसयोरपि मिलित्वैव द्वे पले । रोगयुक्त इति न तु हे, सौम्यधातुक्षयभयात् ॥ २५ ॥

नासारोग इत्यादि स्पष्टम् ॥ २६ ॥

अग्निमान्द्याजीर्णयोः परस्परकारणत्वादग्निमान्द्यप्रकरणे एवाजीर्णचिकित्सामाह त्यादि ।—वचालवणकल्कयुक्तेनोष्णोदकेन किंवा वचया अर्द्धशृतेनोष्णोदकेन वणेन वा वमनम् ॥ २७ ॥

विदग्धाजीर्णचिकित्सामाह अन्न मित्यादि ।—सुश्रुतस्य । शीताम्बुना परिपाक-मेति यदुक्तं तदेवोपपादयति तद्यस्येत्यादि । हिशब्दो हेतौ । तदिति म्बु , अस्याजीर्णिनः पित्तं निहन्तीत्यन्वयः । आक्लेदिभावादिति द्रव त ॥ २८ ॥

विदह्यत इत्यादि ।—सुश्रुतस्य । भुक्तमात्रमिति मात्रशब्दः कार्त्स्न्ये यावद

द्राक्षासितामाक्षिकसम्प्रयुक्तां लीढ़्वाभयां वै स सुखं लभेत ॥
हरीतकी धान्यतुषोदसिद्धा सपिप्पली सैन्धवहिङ्गुयुक्ता।
सोद्गारधूमं भृशमप्यजीर्णं विजित्य सद्यो जनयेत् क्षुधाञ्च ॥२९

विष्टब्धाजीर्णचिकित्सा—

विष्टब्धे स्वेदनं पथ्यं पेयञ्च लवणोदकम् ॥ ३० ॥
रसशेषे दिवास्वप्नो लङ्घनं वातवर्जनम्।
व्यायामप्रमदाध्ववाहनरतक्लान्तानतीसारिणः
शूलश्वासवतस्तृषापरिगतान् हिक्कामरुत्पीड़ितान्।

---

भुक्तमित्यर्थः, भुक्तसाकल्ये मात्राशब्दो वर्त्तते। किंवा भुक्तमात्रमिति भोज
नान्तरं, तत्कालमेवेत्यर्थः। अन्नं विदग्धं हि नरस्य शीघ्रम्" इत्यादि वाक्यं, त
"विदह्यते यस्य तु भुक्तमात्रम्" इत्यादि वाक्यं; तथा "भवेदजीर्णं प्रति यस्य श
इत्यादि वक्ष्यमाणन्तु सौश्रुतवचनमनार्षमिति, अजीर्णे भेषजनिषेधस्य सर्व
सुश्रुतेनोक्तत्वात्, लङ्घनाद्युपदेशाच्च; ततश्च केनाप्यश्ववैद्येन चक्रवैद्येन प्रक्षि
योगत्रयमिदमित्याह जेज्जडः। अपरे तु प्रचाराद्भूरिपाठदर्शनाच्च योगत्रयमेत
मन्यन्त एव, किन्तु स्वल्पाजीर्णे बोध्यमेतत्, प्रभूताजीर्णे तु भेषजसम्बन्धं न कुर्य
अल्पाजीर्णे तु औषधं सेव्यमिति। हरीतकीत्यादौ।—धान्यतुषोदं सन्धानवि
तदभावे काञ्जिकं, तेन सिद्धा उत्स्विन्ना ॥ २९ ॥

विष्टब्धाजीर्णचिकित्सामाह विष्टब्धे इत्यादि। लवणोदकं सैन्धवयुक्तमुष्णो
मित्यर्थः। रसशेषे दिवास्वप्न इत्यल्पदोषापेक्षया; महति च लङ्घनमुचित
लङ्घनमित्युपवासः; अन्ये तु लङ्घनशब्देनात्र लाघवकरो विधिरिष्यते, तेन य
यथा जरणार्थं कालप्रतीक्षणं पाचनौषधं तथा स्वेदश्च प्राप्यते, न पुनर्लङ्घनमुपवा
दोषस्याल्पत्वादित्याहुः। वातवर्जनमिति वातस्यासेवनम्। व्यायामेत्यादि। र
भावे क्तः, रतमनुरक्तिरासक्तिरिति यावत्, तेन व्यायामादावतिरतत्वेन ये क्ला
न्तानित्यर्थः; न तु रतं सुरतं, तस्य प्रमदाग्रहणेनैव लब्धत्वात्। वाहनञ्च हस्त्य
श्वादि
यानम्। व्यायामादिक्लान्तानाञ्च धातुपुष्ट्यर्थम्। यदुक्तं "स्वप्नप्रसङ्गाच्च नरो ह
इव पुष्यति" इति। अतीसारे दिवास्वापः कफवर्द्धकतया स्रोतःसंरोधक
प्रभावाद्वा हितः, स च सर्वातीसारे कफवर्ज्यं ज्ञेयः। शूलश्वासतृष्णादिषु
शान्त्या प्रभावाद्वा हितः। क्षीणानिति धातुक्षीणान्; तेन सुश्रुतोक्तरसादि

क्षीणान् क्षीणकफान्शिशून् मदहतान् वृद्धान् रसाजीर्णिनो
रात्रौ जागरितान्नरान्निरशनान् कामं दिवा स्वापयेत् ॥ २१ ॥

आलिप्य जठरं प्राज्ञो हिङ्गुत्र्यूषणसैन्धवैः।
दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णप्रणाशनम् ॥ २२ ॥

धान्यनागरसिद्धन्तु तोयं दद्याद्विचक्षणः।
आमाजीर्णप्रशमनं दीपनं वस्तिशोधनम् ॥ २३ ॥

वातिकम्—पथ्यापिप्पलिसंयुक्तं चूर्णं सौवर्चलं पिबेत्।
मस्तुनोष्णोदकेनाथ बुद्ध्वा दोषगतिं भिषक् ॥

---

ऽपि दिवास्वापः प्राप्यते। क्षीणकफानिति स्वतन्त्र किंवा व्यायामादिष्वपि क्षय, तेन व्यायामादिक्लान्तान् क्षीणकफानेव दिवा स्वापयेत्, शिशूनाञ्च निद्रा सात्म्यत्वाच्च दिवानिद्रा। मदहतानिति प्रमत्तान्, तेषाञ्च मद्यजरणार्थं दिवास्वाप। वृद्धान् प्रति धातु-पुष्ट्यर्थम्। रसाजीर्णिनो रसविशेषपाकार्थं दिवानिद्रा रात्रावपि, निद्रितस्यैवाहारपाकस्य दृष्टत्वात्। किञ्च निद्राणस्य शीत सङ्कोचादनिर्गच्छन् ऊष्मा जठरानलमुद्दीपयति, तेन शीघ्रमजीर्णस्य पाक.। न च दिवास्वप्नात् कफपित्तयो प्रकोपो भवति, तदुक्तं चरके—"दिवास्वप्नात् श्लेष्मपित्ते प्रकुप्येते" इति प्रकोपाच्चाग्न्युपघात एव कथ न स्यादिति वाच्य; यतः शीत.सङ्कोचादुपजात-प्राग्निर्जाठराजीर्णपाचक एव, न तदा कफपित्तयोः प्रकोप, प्रतिनियतशक्तिक भेषजानामिति। अस्तु वा कफपित्तप्रकोपस्तथापि नाग्निमान्द्य, तथाविध-दूष्यसंयोगाभावात्, न चाय नियमः यत् कफप्रकोपेऽवश्यमग्न्युपघात इति पित्तप्रकोपजन्यतिमिरादौ सत्यपि कफपित्तप्रकोपेऽग्न्युपघाताद्दृष्टत्वादिति। रात्रौ जागरितानां जागरणजनितवातक्षोभप्रशमनार्थमेव दिवास्वप्न, स च रात्रिजागरणार्द्ध. कार्य्यं, यदाह वाग्भट—"असात्म्याज्जागरादर्द्धं प्रातः सुप्यादभ-क्त" इति। निरशनानिति। अतएव हारीते—"भुक्त्वा स्वप्नमनेवेत स्वस्थोऽप्य-प्रती भवेत इति ॥ १० ॥२१ ॥

आलिप्येत्यादि स्पष्टम् ॥ २२ ॥

धान्यनागरेत्यादि।—कर्षार्द्ध वा कणाशुण्ठीरित्यादिवचनेन तीक्ष्णद्रव्यस्याल्प-प्रयुक्तं, तेनेहापि तीक्ष्णातीक्ष्णयोर्धान्यनागरयोरुक्तमानाभावात् पले गृह्यमाणे धान्य-मेकपलमान नागरन्तु कर्षार्द्धमानं ग्राह्यम्। यत्तु धान्यशुण्ठ्युपयोगे शुण्ठ्याख्य

चतुर्विधमजीर्णञ्च मन्दानलमथारुचिम् ।
आध्मानं वातगुल्मञ्च शूलञ्चाशु नियच्छति ॥ ३४ ॥

भवेदजीर्णं प्रति यस्य शङ्का
स्निग्धस्य जन्तोर्बलिनोऽन्नकाले ।
पूर्वं सशुण्ठीमभयामशङ्कः
स प्राश्य भुञ्जीत हितं हिताशी ॥ ३५ ॥

किञ्चिदामेन मन्दाग्निरभयागुड़नागरम् ।
जग्ध्वा तक्रेण भुञ्जीत युक्तेनान्नं षडूषणैः ॥ ३६ ॥

विसूचिकाचिकित्सा ।

विसूचिकायां वमितं विरिक्तं सुलङ्घितं वा मनुजं विदित्वा ।
पेयादिभिर्दीपनपाचनैश्च सम्यक् क्षुधार्त्तं समुपक्रमेच्च ॥ ३७ ॥

कुष्ठसैन्धयोः कल्कं चुक्रतैलसमन्वितम् ।

---

धान्यतस्त्रयमिति कैर्श्चिदुक्तं, तदानार्षत्वान्नाद्रियते। वैद्यप्रचारस्तु शुण्ठ्यां षण्माषकाः, धान्यस्य दश एव कर्षेणेति ॥ ३३ ॥

पथ्येत्यादि ।—पथ्यादीनां त्रयाणां समो भागः, तच्च मिलित्वा कर्षप्रमाणं या कर्षश्चूर्णस्य कल्कस्येत्यादिवचनात् ॥ ३४ ॥

भवेदजीर्णमित्यादि ।—सुश्रुतस्य । रसशेषाजीर्णविषयकमिदं वाक्यम् भोजनोपदेशात् रसशेषे हि स्वल्पदोषः, तेन तदौषधपूर्वकं भोजनं सम्भवतीति। पू मिति प्रातःकाले, यस्य पुरुषस्याजीर्णं प्रति शङ्का भवेत् सोऽन्नकाले यस्य प्रथम यः भोजनकालः तस्मिन् सशुण्ठीं शुण्ठीसहिताम् अभयां सम्प्राश्य भुञ्जीत योजना ; न तु पूर्वं सम्प्राश्य भुञ्जीतेति योज्यम्, सम्प्राश्येत्यनेनैव पूर्वकालस्य लब्ध त्वादिति ॥ ३५ ॥

किञ्चिदित्यादि ।—यद्यपि गुडेन शुण्ठीत्यादि वचनं पूर्वमुक्तं तथापि तक्रप्र षसम्बन्धाद् योगान्तरमिवैतद्बोध्यम् ॥ ३६ ॥

विसूचिकाचिकित्सामाह, विसूचिकायामित्यादि ।—सुश्रुतस्य । पेयादीनां दीपनपाचनत्वम्, दीपन पाचन धान्यपञ्चकादि-संस्कारात् ॥ ३७ ॥

कुष्ठेत्यादि ।—आतुरस्य तात्कालिकी पीडा महती, तद्दृष्टे च तैल प्रकुम

विसूच्यां मर्दनं कोष्णं खल्लीशूलनिवारणम्॥ ३८॥
करञ्जनिम्बशिखरीगुडूच्यर्जकवत्सकैः।
पीतः कषायो वमनाद्धोरां हन्ति विसूचिकाम्॥ ३९॥
व्योषं करञ्जस्य फलं हरिद्राम्
मूलं समावाप्य च मातुलुङ्ग्याः।
छायाविशुष्का गुड़िकाः कृतास्ता-
हन्युर्विसूचीं नयनाञ्जनेन॥ ४०॥
गुड़पुष्पसारशिखरितण्डुलागिरिकर्णिकाहरिद्राभिः।
अञ्जनगुड़िका विलयति विसूचिकां त्रिकटुसनाथा॥ ४१॥
त्वक्पत्ररास्नागुरुशिग्रुकुष्ठैरम्लेन पिष्टैः सवचाशताह्वैः।

---

कम, अतः किञ्चिदुष्णं तैलञ्च दत्त्वा कुष्ठसैन्धवयोः कल्केन कटुष्णेन मर्दनं कार्य्य मित्याहुर्वृद्धाः। तैलपाकपक्षे तु कुष्ठसैन्धवयोः कल्कः पादिकः; चुक्रञ्च चतुर्गुणम। खल्ली हस्तादौ शिरामोटनरूपा वेदना॥ ३८॥

करञ्जेत्यादि।—करञ्जस्य फलम्; शिखरी अपामार्गस्तस्य बीजम्। अर्जकः श्वेतपर्णाश इति डल्वणः, तथा वृन्दटीकायां चन्द्राटेऽप्यर्जक इति पठ्यते तस्मात् अर्जकस्थाने अर्जुनेति प्रमादपाठः। वत्सकः कुटजः। पीतः कषायो वमनादिति वमनार्थञ्च कषायः "क्वाथ्यद्रव्याञ्जली द्वौ श्रपयित्वा जलाढके। अर्द्धभागावशेषञ्च वमनेष्ववचारयेत्" इति परिभाषया अर्द्धशृतः कार्य्यः। अर्द्धभागावशेषमित्यत्र चतुर्भागावशेष इति पाठो दृश्यते तत्र नियन्तो नानुमन्यते। वमनञ्चातीक्ष्णम्, स्तोकस्तोकवमिकारकाजीर्णनिरासार्थम॥ ३९॥

व्योषमित्यादि।—शुण्ठ्यादि। मातुलुङ्गी मधुकर्कटी। विसूचीशब्देनात्र विसूचीजनितमूर्च्छाप्रमीलकशिरोरोगादयो गृह्यन्ते, कारणे कार्य्योपचारात्। किं वा अञ्जनेन प्रभावादेव विसूची हन्यते। इति शुश्रुतटीकाकृतो व्याचक्षते॥ ४०॥

गुड़पुष्पेत्यादि।—गुड़पुष्पो मधुवृक्षः तस्य सारो ग्राह्यः। शिखरितण्डुला अपामार्गबीजानि। गिरिकर्णिका श्वेतापराजिता तस्या मूलं ग्राह्यम्। त्रिकटुकान्त एको योगः। विलयति शमयति॥ ४१॥

त्वक्पत्रेत्यादि।—त्वक् गुड़त्वक्; पत्रं तेजःपत्रम्। अम्लपिष्टैरिति काञ्जिक-

उद्वर्त्तनं खल्लिविसूचिकाघ्नं तैलं विपक्वञ्च तदर्थकारि ॥ ४२ ॥

पिपासायामनूत्क्लेशे लवङ्गस्याम्बु शस्यते।
जातीफलस्य वा शीतं शृतं भद्रघनस्य वा ॥ ४३ ॥
विसूच्यामतिवृद्धायां पार्ष्णीर्दाहः प्रशस्यते ॥ ४४ ॥
वमनन्त्वलसे पूर्वं लवणेनोष्णवारिणा।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनः॥
सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत्।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः॥

तक्रेण युक्तं यवचूर्णमुष्णं सक्षारमर्त्तिं जठरे निहन्यात्।
स्वेदो घटैर्वा बहुवाष्पपूर्णैरुष्णैस्तथान्यैरपि पाणितापैः ॥ ४५ ॥

---

पिष्टैः। शताह्वाः सुल्‌लुफा इति ख्याता, शताह्वैरित्यत्र जटाह्वैरित्यन्ये पठन्ति यथा—"रास्नापत्रागुरुमांसीकुष्ठ शिग्रुत्वचो वचा। पिष्टमम्लेन तक्रेण विसूच्यामङ्गमर्दनम्"। सुश्रुते तु शतपुष्पी जटामांसी चेति द्वयमपि न दृश्यते, यथा—"कुष्ठञ्चागुरुपत्रञ्च रास्ना शिग्रुत्वचा वचा। पिष्टमम्लेन तक्रेण विसूच्यामङ्गमर्दनम्" इति। तैलं विपक्वञ्च तदर्थकारीति, त्वक्पत्रादिभिः कल्कीकृतैः काञ्जिकेन द्रवेण चतुर्गुणेन तैलं पक्वं खल्लीविसूचीकाघ्नं भवतीत्यर्थः ॥ ४२ ॥

पिपासायामित्यादौ।—अनूत्क्लेश इत्युत्कासिका, ठिकरीति लोके ख्याता इति निश्चलः; अन्ये त्वनूत्क्लेश इवीषदुत्क्लिष्ट-दोष इत्याहुः। लवङ्गाम्बु अर्द्धशृतशीतम्, एवं जातिफलाम्बु भद्रघनाम्बु च ज्ञेयम्। भद्रघनं भद्रमुस्तकम्; अवान्तरे योगान्तरं दृष्टफलमव बोद्धव्यम्—"आघ्राय तद्विशेषशो मातुलुङ्गफलत्वचम्। पीता भद्रघनक्वाथमनूत्क्लेशादिमुच्यते"। पार्ष्णीर्दाह इति पादपार्ष्णियुगदाहस्तु मूर्च्छाशान्त्यर्थम्, मूर्च्छेतरलक्षणाभावे सति सतशरादिशलाकया पाददाहः। स च प्रभावात् पाददेशे एव कृतो हितो भवतीति वचनादुन्नीयते। सुश्रुतेऽप्युक्तं "साध्यासु प्रशस्तं पार्ष्ण्योर्दहनम्" इति। चन्द्राटेऽप्युक्तं "वृद्धायां विसूच्यां पार्ष्णिदेशे च दाहः" इति। अतः पार्ष्णिदेश इत्यत्र पार्श्वदेश इति ये पठन्ति ते भ्रान्ताः। पार्ष्णिदाहस्य सर्वतन्त्रविहितत्वात् ॥ ४३। ४४ ॥

अलसकचिकित्सामाह वमनमित्यादि।—लवणेन सैन्धवेन। वर्त्तिरिति फल

तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम्।
दोषाच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम्॥ ४६॥

इत्यग्निमान्द्यचिकित्सा।

---

## अथ क्रिमिचिकित्सा।

पारसीयमानीका पीता पर्य्युषितवारिणा प्रातः।
गुड़पूर्वा क्रिमिजातं कोष्ठगतं पातयत्याशु॥ १॥
पारिभद्रकपत्रोत्थं रसं चौद्रयुतं पिबेत्।
केवुकस्य रसं वापि पत्तूरस्याथवा रसम्॥
लिह्यात् चौद्रेण वैड़ङ्गं चूर्णं क्रिमिविनाशनम्॥ २॥

---

हति सा चौदावर्त्तं वत्त्यमाणा। अत इति अत ऊर्द्धमित्यर्थः। सरुगिति सशूलम। हैमवती वचा। तक्रेणेत्यादि।—चरकस्य। सचारमिति सहयवचारम्, तत्रैव घटे प्रक्षिप्य उदरे स्वेद इत्याह कश्चित्. तन्न, चरकेऽस्य योगस्य प्रदेहप्रकरणे पठितत्वात। तस्माद् यवचूर्णयवचारौ तक्रेण पिष्टा किञ्चिदुष्णं कृत्वा उदरे लेप कार्य्यः। स्वेदी घटैर्वा बहुवाष्पपूर्णैरिति तप्तकाञ्जिकादिभिर्वाष्पपूर्णैर्घटैस्तथाप्युष्णैर्वस्त्रपुटकादिभिस्तथा हस्ततापैरपि स्वेद इति बोध्यम्। तीव्रार्त्तिरित्यादि।—वाग्भटस्य। ना पुरुषः। दोषाच्छन्न इति आमदोषाभिभूतः। नालमिति समर्थः॥ ४५। ४६॥

इत्यग्निमान्द्यचिकित्साविवृतिः।

---

अजीर्णात् क्रिमिसम्भव इत्यजीर्णानन्तरं क्रिमिचिकित्सामाह पारसीत्यादि।—पारसी यमानी खोरासनी यमानीति ख्याता। गुडपूर्वेति गुडः पूर्वो यस्या इति, गुड भक्षयित्वा मनाक् विलम्ब कृत्वा सा पातव्येत्यर्थः। पेषणमपि पर्य्युषितवारिणेति॥ १॥

पारिभद्रेत्यादि।—पारिभद्रकः मन्दारविशेषः। केवुकस्येति केवुकस्य केउ-

मुस्ताखुपर्णीफलशिग्रुदारुक्वाथः सकृष्णाक्रिमिशत्रुकल्कः ।
मार्गद्वयेनापि चिरप्रवृत्तान् क्रिमीन् निहन्ति क्रिमिजांश्च रोगान् ॥ ३ ॥

आखुपर्णीदलैः पिष्टैः पिष्टकेन च पूपिकाम् ।
जग्ध्वा सौवीरकञ्चानु पिबेत् क्रिमिहरं परम् ॥ ४ ॥
पलाशबीजस्वरसं पिबेद्वा चौद्रसंयुतम् ।
पिबेत् तद्बीजकल्कं वा तक्रेण क्रिमिनाशनम् ॥ ५ ॥
सुरसादिगणं वापि सर्वथैवोपयोजयेत् ।
विड़ङ्गसैन्धवक्षारकाम्पिल्लकहरीतकीः ।
पिबेत् तक्रेण सम्पिष्य सर्वक्रिमिनिवृत्तये ॥ ६ ॥

---

ताड़ा इति ख्यातस्य तस्य मूलस्वरस ग्राह्यम्, एवं पत्तुरस्य, पत्तुरः शालिञ्च. चौद्रयुतमिति पद केवुकरसे पत्तुररसेऽपि योज्यम् । लिह्यादित्यादि स्पष्टम् ॥ २ ॥

मुस्तेत्यादौ ।—आखुपर्णी मूषिकपर्णी. दन्तीभेदो वा, फलशब्देनात्र त्रिफला ग्राह्या रविगुप्तसंवादात् । क्रिमिशत्रु विडङ्गसारः ॥ ३ ॥

आखुपर्णीदलैरित्यादि । —आखुपर्णी इन्दुरकानी मूषिकपर्णी दन्तीभेदो वा, मण्डुकपर्णीत्यन्ये ; दलं कोमलदलम् । यदाह वागभटः “आखुपर्णीकिसलयैः सुपिष्टैः पिष्टमिश्रितैः । पक्त्वा पूपुलिका खादेः धान्याम्लञ्च पिबेदनु” इति । पिष्टकेनेति यवपिष्टकेन क्रिमिहरत्वादिति सुश्रुतटीकाकृतः । शालितण्डुलपिष्टकेनेति निश्चलः । आखुपर्णीपत्रस्य भागत्रय पिष्टकस्य त्वेको भाग इत्याहुः । सौवीरं काञ्जिकम्, यद्यपि सुश्रुते वागभटे च चीराणि मांसानित्यादिनाम्लमात्रस्यैव वर्जनमुक्तं तथापि विशेषवचनादत्र काञ्जिकानुपानमिति न विरोधमावहति ॥ ४ ॥

पलाशबीजमित्यादि ।—पलाशबीजस्य स्वरसः ; तद्बीजकल्को वा तक्रेणेति तण्डुलाम्बुनाप्ययं योगो श्रेयः । तदुक्तं सुश्रुते “पलाशबीजस्वरस कल्कं वा तण्डुलाम्बुना” इति ॥ ५ ॥

सुरसादिगणः सौश्रुतः ; सर्वथैवेति कल्ककषायकल्पनया । विडङ्गसैन्धवेत्यादौ ।—काम्पिल्लकः गुण्डारोचनी कमलागुण्डी इति ख्याता ॥ ६ ॥

विड़ङ्गपिप्पलीमूलशिग्रुभिर्मरिचेन च।
तक्रसिद्धा यवागूः स्यात् क्रिमिघ्नी ससुवर्चिका॥
पीतं बिम्बीघृतं हन्ति पक्वामाशयगान् क्रिमीन्॥ ७॥

त्रिफलाघृतम्—त्रिफला त्रिवृता दन्ती वचा काम्पिल्लकं तथा।
सिद्धमेभिर्गवां मूत्रे सर्पिः क्रिमिविनाशनम्॥ ८॥

विड़ङ्गघृतम्—त्रिफलायास्त्रयः प्रस्था विड़ङ्गप्रस्थ एव च।
द्विपलं दशमूलञ्च लाभतः समुपाचरेत्॥
पादशेषे जलद्रोणे शृते सर्पिर्विपाचयेत्।
प्रस्थोन्मितं सिन्धुयुतं तत्परं क्रिमिनाशनम्॥
विड़ङ्गघृतमेतच्च लेह्यं शर्करया सह।
सर्वान् क्रिमीन् प्रणुदति वज्रं मुक्तमिवासुरान्॥ ९॥
रसेन्द्रेण समायुक्तो रसो धुस्तूरपत्रजः।
ताम्बूलपत्रजो वापि लेपो यूकविनाशनः॥ १०॥

विड़ङ्गतैलम्—

विडङ्गगन्धकशिलासिद्धं सुरभीजलेन कटुतैलम्।
आजन्म नयति नाशं लिख्यासहितास्तु यूकाश्च॥ ११॥

इति क्रिमिचिकित्सा।

---

विडङ्गेत्यादि।—चरकस्य। तक्रसिद्धेति तक्रमत्रार्द्धोदकं ग्राह्यम्, अन्यथा-ऽम्लता स्यादित्याहुः। सुवर्चिका सर्जिकाक्षारः, तं दत्त्वा भक्षयेत्। बिम्बीघृत इति।—बिम्बीघृते विपक्वबिम्बीफलस्य कल्कचतुर्गुणं जलम्॥ ७॥

त्रिफलाघृते दन्ती नागदन्ती, सा च स्थूलमूलेत्याहुः। तदुक्तं "त्रिवृत्काम्पिल्लक-नागदन्तीफलत्रयैः। गोमूत्रसाधितं सर्पिः पानतः क्रिमिनाशनम्" इति॥ ८॥

त्रिफलादि स्पष्टम्। विड़ङ्गघृतं क्वचित् पुस्तके; तथा ग्रन्थे च तत्र टीका-कृतैर्न घृतं ह्यधिकमेवेति ज्ञेयम्॥ ९॥

रसेन्द्रेणेत्यादौ।—रसेन्द्रः पारदः। ताम्बूलपत्रं पर्णे लेपनं यौकनाशनमिति यौकं यूकवृन्दम्॥ १०॥

# अथ पाण्डुरोगचिकित्सा ।

**साध्यन्तु पाण्ड्वामयिनं समीक्ष्य स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।**
**सम्पादयेत् क्षौद्रघृतप्रगाढैर्हरीतकीचूर्णमयैः प्रयोगैः ॥ १ ॥**

---

विडङ्गेत्यादौ—शिला मनःशिलेति केचिदाहुः ; अन्ये तु गन्धकशिला गन्धक पाषाणमेवेति वदन्ति । सुरभीजलं गोमूत्रं तच्च चतुर्गुणं ग्राह्यम् ॥ ११ ॥

इति क्रिमि चिकित्साविवृतिः ।

---

पुरीषक्रिमितः पाण्डुरोगस्य प्रादुर्भावात् क्रिम्यनन्तरं पाण्डुरोगचिकित्सामाह साध्यमित्यादि ।—सुश्रुतस्य । समीक्ष्येति अनुबन्ध्यानुबन्धरूप तद्दोषविशेषं सम्यगुपलभ्य स्निग्धमेव, न स्विन्नं पाण्डुरोगे स्वेदनिषेधात् । उक्तं हि सुश्रुते “पाण्डुमेही रक्तपित्ती तृषार्त्तः क्षतक्षीणो दुर्बलोऽजीर्णभुक्तः । दकोदरी गर्भिणी पीतमद्यो नैते स्वेद्याः यश्च मत्तोऽतिसारी” इति । घृतेनेति न तु तैलादिना सर्वपाण्डुरोगाणां पित्तप्रधानत्वात् रक्तदूष्यत्वाच्च । उक्तं हि सुश्रुते “व्यायाममम्ललवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम् । निषेवमाणस्य प्रदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति” इति । पित्ते घृतस्यैव प्रधानत्वात् घृतेनैव स्नेहनं युक्तम्, घृतञ्च भेषजसंस्कृतमेव देयं बहुगुणत्वात् । उक्तं हि चरके “कल्याणकं पञ्चगव्यं महातिक्तमथापि वा । स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे” इति । उक्तं हि सुश्रुते च “केवलेनैव घृतेनेत्याह ।” ऊर्द्ध्वमिति वमनेन, अध इति विरेचनेन । यद्यपि पाण्डुरोगे वमनं निषिद्धम्, यदुक्तं “न वामयेत् तैमिरिकं न गुल्मिनं चापि पाण्डुरोगपीडितम्” इति तथापि पीडितमिति वचनेन प्रवृद्धपाण्डुरोगविषयं तद्वचनं ज्ञेयम्, उपक्रमे तु कालर्तुदोषाद्यपेक्षया कफोद्रेकावस्थायां मृदुवमनं ज्ञेयम् । तथाच हारीतः “कालर्त्तुदोषप्रकृतिं शरीरं समीक्ष्य दद्याद्वमनं विधिज्ञः” इति । सुश्रुतेऽप्युक्तम् “एतेऽप्यजीर्णे व्यथिता वम्या ये च विषातुराः । अतीवोल्बणकफास्ते च स्युर्मधुकाम्बुना” इति । विरेचनन्तु तीक्ष्णमेव ; यदुक्तं “वान्तस्य तीक्ष्णान्यनुलोमनानि कफोपदिष्टानि भिषग्विदध्यात्” इति ॥ इदानीं संशोधनानन्तरं कृतसंसर्जनक्रमस्य दोषविशेषशमनार्थमाह सम्पादयेदित्यादि ।—हरीतकी

पिबेद्घृतं वा रजनीविपक्कं सत्रैफलं तैल्वकमेव वापि।
विरेचनद्रव्यकृतान् पिबेद्वा योगांश्च वैरेचनिकान् घृतेन ॥२॥

हेतुप्रत्यनीकचिकित्सा।

विधिः स्निग्धस्तु वातोत्थे तिक्तशीतस्तु पैत्तिके।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥ ३ ॥
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिके पिबेत्।
कफपाण्डुस्तु गोमूत्रक्लिन्नयुक्तां हरीतकीम् ॥
नागरं लौहचूर्णं वा कृष्णां पथ्यां तथाश्मजम् ॥
गुग्गुलुं वाथ मूत्रेण कफपाण्ड्वामयी पिबेत् ॥
सप्तरात्रं गवां मूत्रे भावितं वाप्ययोरजः।
पाण्डुरोगप्रशान्त्यर्थं पयसा प्रपिबेन्नरः ॥ ४ ॥

---

चूर्णमयैः प्रयोगैर्वक्ष्यमाणैर्नवायसादिभिर्हरीतकीचूर्णबहुलैरित्यर्थः। हरीतकीचूर्णयुतैरिति पाठान्तरम् ॥ १ ॥

रजनीविपक्कमिति हरिद्राकल्कक्काथाभ्यां सिद्धमिति गयदासः। तन्न, कल्कक्काथकरणस्य गणविषयत्वात्। तस्मात् हरिद्राकल्कसिद्धमित्यन्ये, अन्ये तु वक्ष्यमाणहरिद्राघृतमित्याहुः। तन्न, चरककृतत्वात्, इदं वाक्यं सौश्रुतमिति। त्रैफलमिति त्रिफलाक्काथकल्कसिद्धम्; त्रिफलापटोलपिचुमर्देत्यादि कुष्ठोक्तम्, वातरोगोक्तं वा ज्ञेयम्। तैल्वकमिति वातव्याध्युक्तम्। विरेचनद्रव्यकृतमिति त्रिवृतादिद्रव्यसंस्कृतं घृतम्; इदं हि वाक्यं सौश्रुतम्। योगांश्च वैरेचनिकानिति सौश्रुतविरेचनाध्यायोक्तान् घृतेन पिबेदिति ॥ २ ॥

हेतुप्रत्यनीकचिकित्सामाह विधिरित्यादि। मिश्रक इति द्वन्द्वजे ॥ ३ ॥

द्विशर्करमित्यादि।—त्रिवृच्चूर्णमेव द्विगुणशर्करं सत् पलार्द्धमानं पिबेत्, तेन शर्करा कर्ष १ मा ५ रक्ति ४। त्रिवृच्चूर्ण माषा १० रक्ति ८ एवं मिलित्वा पलार्द्धमित्यर्थः; न तु त्रिवृच्चूर्णं पलार्द्धं सत् द्विशर्करं पलमेकम्, एवं मिलित्वा सार्द्धपलमेकस्यह्नोपयोगेऽस्या मात्राया अनर्हत्वात्। गोमूत्रक्लिन्नयुक्तामिति गोमूत्रेण क्लिन्ना पिष्टां तदनु गोमूत्रेणैव युक्तामालोडितां पिबेदित्यर्थः; वृद्धवाग्भटेऽप्युक्तं "गोमूत्रेण वा हरीतकीः कल्किताः" इत्यादि; अन्ये तु गोमूत्रेण क्लिन्नामुत्स्वेदितामित्याहुः;

फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ।
क्वाथः क्षौद्रयुतो हन्यात् पाण्डुरोगं सकामलम् ।
अयस्तिलत्र्यूषणकोलभागैः सर्वैः समं माक्षिकधातुचूर्णम् ।
तैर्मोदकः क्षौद्रयुतोऽनुतक्रः पाण्ड्वामये दूरगतेऽपि शस्तः ॥६॥
अयोमलन्तु सन्तप्तं भूयो गोमूत्रसेचितम् ।
मधुसर्पिर्युतं चूर्णं सह भक्तेन योजयेत् ॥
दीपनञ्चाग्निजननं शोथपाण्ड्वामयापहम् ॥ ७ ॥

नवायसं लौहम्—

त्र्यूषणं त्रिफलामुस्तविडङ्गचित्रकाः समाः ।

---

अन्ये तु चरकवक्ष्यमाणयोगे आरग्वधरसेनेति पठित्वा आरग्वधरसेन हरीतकीं पिबेदिति पूर्वेण योजयन्ति ; किन्तु वाग्भटसंवादात् पूर्वपाठ एव साधुः । नागरमित्यादि—नागरलौहचूर्णाभ्यामेको योगः ; कृष्णापथ्याभ्यां द्वितीयः ; अश्मजशिलाजतु, अयं योगस्तृतीयः ; गुग्गुलुमिति चतुर्थः ; गोमूत्रेणेति सम्बध्यते सर्वत्रैव । लौहचूर्णन्तु जारितं पुटितञ्च ग्राह्यं तदभावे लौहपत्रिका ग्राह्या, सा च शालिञ्चरसत्रिफलाक्वाथैः पुटपाकेन संसाधनीया, एवं सर्वत्र ; तत्र माषकमेकं शुण्ठीचूर्णञ्च माषकचतुष्टयमित्याहुः । एवं गुणं पिप्पलीहरीतकीचूर्णं ; तथा शुद्धशिलाजतु माषा ३, घृतपेषितगुग्गुलुमाषा ८, सर्वत्रैव गोमूत्रेण पानम् । समशर्करमित्यादि—स्पष्टम् ॥ ४ ॥

फलत्रिकेत्यादौ ।—अमृता गुडूची, तिक्ता कटुकी, भूनिम्बश्चिरता ॥ ५ ॥

अयस्तिलेत्यादौ ।—कोलं शुष्कबदरं न तु कर्षार्द्धं ; यदाह सुदान्तसेनः "अयःकोलतिलव्योषैः समैर्माक्षिकधातुना । मधुना वटकान् कृत्वा जग्ध्वा तक्रं पिबेदनु" इति । तिलोऽपि कृष्णः माक्षिकधातुः स्वर्णमाक्षिकं, तदपि शुद्धं ग्राह्यं, तच्छोधनञ्च लौहप्रदीपादौ बोध्यम् । अनुतक्र इति तक्रानुपानः ॥ ६ ॥

अयोमलमित्यादि । अयोमलं पुराणमण्डूरं, भूयोगोमूत्रशोधितमिति सप्तवारान् । ईदृशस्य मण्डूरचूर्णस्य माषकद्वयं त्रिधा विभज्यातो दर्शनात् भोजनादिमध्यान्तेषु मधुसर्पिर्भ्यां लिह्यं, पश्चादभ्यासक्रमेण माषकं वर्द्धयेत् । अनुपानमिह तक्रं दुग्धं वा ॥ ७ ॥

नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा ॥
भक्षयेत् पाण्डुहृद्रोगकुष्ठार्शःकामलापहम् ॥ ८ ॥

योगराजः—त्रिफलायास्त्रयो भागास्त्रयस्त्रिकटुकस्य च।
भागश्चित्रकमूलस्य विडङ्गानां तथैव च ॥
पञ्चाश्मजतुनो भागास्तथा रूप्यमलस्य च।
माक्षिकस्य च शुद्धस्य लौहस्य रजसस्तथा ॥
अष्टौ भागाः सितायाश्च तत् सर्वं श्लक्ष्णचूर्णितम्।
माक्षिकेणाप्लुतं स्थाप्यमायसे भाजने शुभे।
उडुम्बरसमां मात्रां ततः खादेद् यथाग्निना ॥
दिने दिने प्रयोगेण जीर्णे भोज्यं यथेप्सितम्।
वर्जयित्वा कुलत्थांश्च काकमाचीं कपोतकान् ॥
योगराज इति ख्यातो योगोऽयममृतोपमः।
रसायनमिदं श्रेष्ठं सर्वरोगहरं परम् ॥
पाण्डुरोगं विषं कासं यक्ष्माणं विषमज्वरम्।
कुष्ठान्यजरकं मेहं श्वासं हिक्कामरोचकम्।
विशेषाद्धन्त्यपस्मारं कामलां गुदजानि च ॥ ९ ॥

---

त्र्यूषणमित्यादि।—एकभागापेक्षया नवगुणं मण्डूरचूर्णम् आदौ रक्तिद्वय घृत-मध्वा लौहपात्रे लौहमुषलिकया विमर्द्य लिह्यात्, रक्तिद्वयं कृत्वा वृद्धिः कार्या माषकद्वय यावदिति व्यवहारः। वाग्भटे तु तक्राद्यनुपानञ्चोक्तं, यथा "व्योषाग्नि-त्रिफलाविडङ्गमुस्तैस्तुल्यमयोरजः। चूर्णितं तक्रमध्वाज्यकोष्णाम्भोभिः प्रयोजितम्" इति। एतदेव नवायसं सुश्रुते प्रमेहचिकित्सायां पठितम् ॥ ८ ॥

त्रिफलाया इत्यादि। चरकस्य। त्रिफलायास्त्रयो भागा इति मिलित्वा त्रयो भागाः, एवं त्रिकटुकस्यापि, निर्देशस्य मानप्रधानत्वात्। चित्रकविडङ्गयोरपि प्रत्येकं भागम्। शिलाजत्वादिलौहचूर्णान्तानां प्रत्येकं पञ्च पलानि, शर्करायाश्चाष्टौ पलानि, शिलाजतु च शिवागुडिकोक्तविधिना ग्राह्यम्। रूप्यमलस्य चेति रूप्यस्याध्माय-मानस्य यत् किट्टं निर्गच्छति तद्रूप्यमलं माक्षिकस्येति मारणपुटनादिना शुद्धस्य

विशालाकटुकामुस्तकुष्ठदारुकलिङ्गकाः।
कर्षांशा द्विपिचुं मूर्वा कर्षार्द्धा च घुणप्रिया।
पीत्वा तच्चूर्णमम्भोभिः सुखैः लिह्यात् ततो मधु॥
पाण्डुरोगं ज्वरं दाहं कासं श्वासमरोचकम्।
गुल्मानाहामवातांश्च रक्तपित्तञ्च तज्जयेत्॥ १०॥
लौहपात्रे शृतं क्षीरं सप्ताहं पथ्यभोजनः।
पिबेत् पाण्ड्वामयी शोथी ग्रहणीदोषपीड़ितः॥
कल्याणकं पञ्चगव्यं महातिक्तमथापि वा।
स्नेहनार्थं घृतं दद्यात् कामलापाण्डुरोगिणे॥

---

स्वर्णमाक्षिकस्य। अन्ये पञ्चाश्मजतुनो भागाः पञ्च रूप्यमलस्य चैत्यत्र तथा च मलस्य इति पठन्ति, तेन रूप्यमलस्येति शिलाजतुविशेषणं; ततश्च रसायना कारे राजतं कटुकं श्वेतमित्यादिना यच्छिलाजतु रूप्यमलत्वेनोक्तं तदिह ग इत्याहुः। एतत्तु न व्यवहरन्ति वृद्धाः। वाग्भटे तु लौहस्थाने रूप्यं पठि यथा "ताप्याद्रिजरूप्यायोमलाः पञ्च पलाः पृथक्। चित्रकत्रिफलाव्योषविड पलिकैः सह। शर्कराष्टपलोन्मिश्राश्चूर्णिता मधुनाप्लुताः" इति तदत्र प्रयोगे भे दविरोधः, उक्तं हि "सुवर्णमथवा रूप्यं योगे यत्र न लभ्यते। तत्र लौहेन स्याद् भिषक् कुर्य्याद्विचक्षणः" इति। पूर्वोक्तव्यवस्थापि शिलाजतुलौहमलस माक्षिकलौहरजोभिश्चतुर्भिरेव दृश्यते, तेन तन्त्रकारवचनयोर्न विरोध इ उडुम्बरः कर्षः। अजरकम् अजीर्णम्। यथाग्निरित्यत्र मा पुरुषः॥ ९॥

विशालेत्यादि।—विशाला गोरक्षकर्कटी। कर्षांशा च घुणप्रिया इत्यप किन्तु कर्षार्द्धांशेति। उक्तं हि चरके "विशालाकटुकामुस्तकुष्ठदारुकलिङ्गका कर्षोन्मितानतिविषां कर्षार्द्धांश प्रदापयेत्। कर्षौ मधुरसाह्वौ च सर्वचूर्णं सु म्भसा। मर्दितं तं रसं पूतं पीत्वा लिह्यात्तु माक्षिकम्" इति; अतएव वचनबल कल्ककषायविधानमप्यत्र योगे बोध्यम्, तेन तच्चूर्णं सुखैः कदुष्णैरम्भोभिश्चूर्णापेक्ष चतुर्गुणैर्म्मर्द्दित्वा वस्त्रपूतं कृत्वा पिबेत्, अनन्तरञ्च मधु लिह्यादित्यर्थः॥ १०॥

लौहपात्र इत्यादि।—अत्र जलं चतुर्गुणं बोध्यं पाकानुपपत्तेः। कल्याण

रेचनं कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत्।
ततः प्रशमनी कार्य्या क्रिया वैद्येन जानता ॥ ११ ॥
त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ १२ ॥
अञ्जनं कामलार्त्तानां द्रोणपुष्पीरसः स्मृतः।
निशागैरिकधात्रीणां चूर्णं वा सम्प्रकल्पयेत् ॥ १३ ॥
नस्यं कर्कोटमूलं वा घ्रेयं वा जालिनीफलम् ॥ १४ ॥

अयोरजोव्योषविडङ्गचूर्णम्
लिह्याद्धरिद्रां त्रिफलान्वितां वा।
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥ १५ ॥

दार्वी सत्रिफला व्योषविडङ्गान्ययसो रजः।
मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ १६ ॥

---

गव्यघृतञ्च, उन्मादे वक्ष्यति, महातिक्तञ्च कुष्ठे, रेचनञ्च पित्तहरत्वेन ॥ ११ ॥

त्रिफलाया इत्यादि—स्पष्टम् ॥ १२ ॥

अञ्जनमित्यादि।—अञ्जन नेत्राञ्जनं, द्रोणपुष्पी दण्डकलस इति केचित्। निशा-
दिचूर्णाञ्जनं कार्य्यं, तदुक्तं तन्त्रान्तरे "निशागैरिकधात्रीणां चूर्णैरवाञ्जनं मतम्।"
च मध्वक्तशलाकया कार्य्यमित्याहुः ॥ १३ ॥

नस्यमित्यादौ।—कर्कोटमूलमिति कर्कोटमूलरस इत्यर्थः। जालिनी पीत-
घोषक. ॥ १४ ॥

सशर्करेत्यादि।—सुश्रुतस्य। त्रिभण्डी त्रिवृता, रेचनार्थमयं योगः। गवाक्षी
चककंटी, श्वेतापराजिता इत्यन्ये; अत्रापि सशर्करेत्यादि योज्यमित्याह
जलः। कार्त्तिकस्तु सगुडा च शुण्ठीत्यत्र चकारं, भिन्नक्रमं योजयित्वा शुण्ठी
इति व्याख्याय गवाक्षीमपि सगुडामाह। एवं सुश्रुतटीकायां डल्लनोऽपि
ख्यातवान् ॥ १५ ॥

दार्व्यीत्यादि।—चरकस्य। दार्व्यास्त्वक् ॥ १६ ॥

तुल्या अयोरजःपथ्याहरिद्राः चौद्रसर्पिषा।
चूर्णिता कामली लिह्याद् गुड़चौद्रेण वाभयाम् ॥ १७ ॥
धात्रीलौहरजोव्योषनिशाचौद्राज्यशर्कराः।
लीढ्वा निवारयत्याशु कामलामुद्धतामपि ॥ १८ ॥
दग्ध्वाक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान्।
विचूर्ण्य लीढं मधुनाचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥
पाण्डुरोगक्रियां सर्वां योजयेच्च हलीमके।
कामलायाञ्च या दृष्टा सापि कार्य्या भिषग्वरैः ॥ २० ॥

विडङ्गाद्यं लौहम्—

विड़ङ्गमुस्तत्रिफलादेवदारुषडूषणैः।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥
तैरक्षमात्रां गुड़िकां कृत्वा खादेद् दिने दिने।
कामलापाण्डुरोगार्त्तः सुखमाप्नोत्यचिरात् ॥ २१ ॥

---

तुला इत्यादि स्पष्टम ॥ १७ ॥

धात्रीत्यादि स्पष्टम् ॥ १८ ॥

दग्ध्वेत्यादि।—सुश्रुतस्य। अक्षद्रुमो विभीतकवृक्ष.। सुश्रुते बहुपुस्त चन्द्राटादिषु गोमूत्रनिर्वापितसप्तवारमित्येव पाठो दृश्यते, अन्ये तु गोमूत्रनिर्वापि मष्टवारमित्येव पठन्ति ॥ १९ ॥

पाण्डुरोगकामलाचिकित्सा हलीमकेऽप्यतिदिशति पाण्डुरोगक्रियेत्यादि। वि विरेचनादिरूपा ॥ २० ॥

विडङ्गलौहे तुल्यमात्रमयश्चूर्णमिति मिलितविडङ्गचूर्णादिसर्वचूर्णसममयश् मित्यर्थः। अत्र लौहस्य प्राधान्यात् तदपेक्षयैवाष्टगुणगोमूत्रेण लौहचूर्णं पक्वावस्था च विडङ्गादिचूर्णस्य प्रक्षेप इति केचित्। अन्ये तु विडङ्गादिचूर्णसहितस्यैव लौ चूर्णस्य पाक; गोमूत्रस्याष्टगुणत्वं सर्वचूर्णापेक्षयैव। अत्र द्रवद्वैगुण्य न व हरन्ति वृद्धा.। पाकश्चात्र मुद्रापाकेणेत्याहुः। अक्षमात्रा गुडिकां कुर्यात् तु तत्प्रमाणं खादेत्। मात्रा देहादिबलापेक्षिणी; अतएव वृद्धा वि कर्त्तव्या ॥ २१ ॥

·· त्र्यूषणाद्यं मण्डूरम्—

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चव्यचित्रकौ।
दार्वीत्वङ्माक्षिको धातुर्ग्रन्थिकं देवदारु च॥
एषां द्विपलिकान् भागांश्चूर्णं कृत्वा पृथक् पृथक्।
मण्डूरं द्विगुणं चूर्णाच्छुद्धमञ्जनसन्निभम्॥
मूत्रे चाष्टगुणे पक्त्वा तस्मिंस्तु प्रक्षिपेत् ततः।
उडुम्बरसमान् कुर्य्याद् वटकांस्तान् यथाबलम्॥
उपभुञ्जीत तक्रेण सात्म्यं जीर्णे च भोजनम्।
मण्डूरवटका ह्येते प्राणदाः पाण्डुरोगिणाम्॥
कुष्ठान्यजरकं शोथमूरुस्तम्भं कफामयान्।
अर्शांसि कामला मेहान् प्लीहानं शमयन्ति च॥

---

त्र्यूषणमित्यादि।—चरकस्य। दार्वीत्वगिति षष्ठीसमासः, न तु दार्वी त्वक्
त, "तार्क्ष्यं दार्व्यास्त्वचं चव्यम्" इति वाग्भटवचनात्। ग्रन्थिकं पिप्पलीमूलम्।
चतुर्दशद्रव्यैः पृथग्द्विपलैरष्टाविंशतिपलानि भवन्ति। मण्डूरञ्च स
र्णाद्द्विगुणं सत् षट्पञ्चाशत्पलमानं भवति। गोमूत्रञ्च मिलितचूर्णापेक्षया
म, पलीलिखागतत्वेन द्वैगुण्यमपि नास्ति। अन्ये तु मूत्रमष्टगुणं प्रत्यासन्ना
ड्रापेक्षयैव वदन्ति। चक्रेणाप्यनुमतोऽयं पक्षः। अतो दीपिकायामेव प
तमातीत्युक्तम्। एतच्च न युक्तं, यदाह वाग्भटः "तार्क्ष्यं दार्व्यास्त्वचं चव्य
न्थिकं देवदारु च। व्योषादिनवकञ्चैव चूर्णयेद्द्विगुणं ततः। मण्डूरञ्चाञ्जन
म सर्वतोऽष्टगुणे पचेत्। पृथग्विपक्वे गोमूत्रे वटकीकरणक्षमे। प्रक्षिप्य वट-
न् कुर्य्यात् तान् खादेत् तक्रभोजनम्" इति। वाग्भटटीकायाञ्च सर्वत इति
डूरसहितचूर्णादष्टगुणं गोमूत्रमिति व्याख्यातम्। हृद्वाग्भटेऽपि मूत्रं सर्वतो-
गुणमित्युक्तम्। पृथक् पृथगिति एकपृथक्शब्दो द्विपलिकानीत्यनेन सम्बध्यते,
तीयपृथक्शब्दाच्च मण्डूरचूर्णमेव पृथक् कृत्वा पक्तव्यम्, तस्मिन्नासन्नपाके त्र्यूष-
दिचूर्णप्रक्षेपः चूर्णबहुलत्वात्, एवं सर्वत्र बहुचूर्णप्रक्षेपविषये आसन्नपाक एव
पः, स्वल्पचूर्णस्य तु प्रक्षेपः सम्यक्पाके सत्येव, अतएवोक्तं "प्रायो न पाक-
ना भूरिचूर्णस्य तेन हि। आसन्नपाके प्रक्षेपः स्वल्पस्य पाकमागते।" पाक

निर्वाप्य बहुशो मूत्रे मण्डूरं ग्राह्यमिष्यते।
ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णतः॥ २२॥

पुनर्नवामण्डूरम्—

पुनर्नवात्रिवृत्शुण्ठीपिप्पलीमरिचानि च।
विड़ङ्गं देवकाष्ठञ्च चित्रकं पुष्कराह्वयम्॥
त्रिफलां द्वे हरिद्रे च दन्तीञ्च चविकं तथा।
कुटजस्य फलं तिक्ता पिप्पलीमूलमुस्तकम्॥
एतानि समभागानि मण्डूरं द्विगुणं ततः।
गोमूत्रेऽष्टगुणे पक्ता स्थापयेत् स्निग्धभाजने॥
पाण्डुशोथोदरानाहशूलार्शःक्रिमिगुल्मनुत्॥ २३॥

वज्रवटकमण्डूरम्—

पञ्चकोलं समरिचं देवदारु फलत्रिकम्।
विड़ङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः।
पक्ता चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत्॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक्।
पाण्डुरोगं जयत्येष मन्दाग्नित्वमरोचकम्॥

---

मागते इति सम्यक् पाक इत्यर्थः। पाकलक्षणञ्च "रसो गन्धः शुभः पाके स्यादगाढमर्दनात्" इति। उडुम्बरसमानिति कर्षमानान्, पञ्चषट्माषकेण प्रचारः। अजरकमजीर्णम्। बहुश इति सप्त वारान्। चक्रेण तु ग्राहयन्त्यष्टगुणितं मूत्रं मण्डूरचूर्णत इत्येव पाठो लिखितः। यतो दीपिकायां मण्डूरस्यैवाष्टगुणत्वम्, तेनायमेव पक्षः प्रतिभातीति वदता स्वीकृतम्; गोमूत्रं सर्वं इति त्वेकेनापि प्रतिसंस्कृत्य लिखितम्॥ २२॥

पुनर्नवामण्डूरे गोमूत्रस्याष्टगुणत्वं मण्डूरापेक्षयैव, सन्निहितत्वात् व्यवहारे अत्रापि द्वैगुण्यं न व्यवहरन्ति॥ २३॥

मण्डूरवज्रवटके विड़ङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिता इति पञ्चकोलादि

अर्शांसि ग्रहणीरोगमूरुस्तम्भमथापि वा।
क्रिमिं प्लीहानमुदरं गलरोगञ्च नाशयेत्॥
मण्डूरवज्रनामायं रोगानीकविनाशनः॥ २४॥

[धा]त्र्यरिष्टम्—धात्रीफलसहस्रे द्वे पीड़यित्वा रसं भिषक्।
क्षौद्राष्टभागं पिप्पल्याश्चूर्णार्द्धकुड़वान्वितम्॥
शर्करार्द्धतुलोन्मिश्रं पक्वं स्निग्धघटे स्थितम्।
प्रपिबेत् पाण्डुरोगार्त्तो जीर्णे हितमिताशनः॥
कामलापाण्डुहृद्रोगवातासृग्विषमज्वरान्।
कासहिक्कारुचिश्वासानेषोऽरिष्टः प्रणाशयेत्॥ २५॥

[द्र]ाक्षाघृतम्—पुराणसर्पिषः प्रस्थो द्राक्षार्द्धप्रस्थसाधितः।
कामलागुल्मपाण्डुर्त्तिज्वरमेहोदरापहः॥ २६॥

[ह]रिद्राघृतम्—हरिद्रात्रिफलानिम्बबलामधुकसाधितम्।
सक्षीरं माहिषं सर्पिः कामलाहरमुत्तमम्॥ २७॥

[मू]र्वाद्यं घृतम्—मूर्वातिक्तानिशावासकृष्णाचन्दनपर्पटैः।
त्रायन्तीवत्सभूनिम्ब-पटोलाम्बुददारुभिः॥
अक्षमात्रैर्घृतप्रस्थं सिद्धं क्षीरं चतुर्गुणम्।
पाण्डुताज्वरविस्फोट-शोथार्शोरक्तपित्तनुत्॥ २८॥

---

[..]डङ्गमुस्तसहितास्त्रिपलसम्मिता इत्यर्थः। अत्रापि मण्डूरापेक्षयैवाष्टगुणत्वं [..]त्र्य, अर्द्धगुणत्वञ्च पूर्ववत्॥ २४॥

धात्रीफलेत्यादि।—चरकस्य। क्षौद्राष्टभागमिति क्षौद्रस्याष्टमो भागः, तेना-[..]लिकस्वरसस्य सप्त भागा इति सिध्यति; शर्करार्द्धतुला पञ्चाशत् पलानि, अर्द्ध-[..]र्षेति लेखकदोषात् प्रमादपाठः॥ २५॥

पुराणसर्पिष इति पुराणं दशवर्षस्थितं सर्पिः। जलमत्र चतुर्गुणमर्थात्। [..]न्ये तु "पिष्टा गोस्तनिकायास्तु पलान्यष्टौ समावपेत्। पुराणसर्पिषः प्रस्थं पचेत् [क्ष]ीरचतुर्गुणम्" इति हारीतदर्शनात् क्षीरमत्र चतुर्गुणमाहुः॥ २६॥

हरिद्रेत्यादौ।—क्षीरं चतुर्गुणम्॥ २७॥

व्योषाद्यं घृतम्—

व्योषं विल्वं द्विरजनी त्रिफला द्विपुनर्नवा ।
मुस्तान्ययोरजः पाठा विडङ्गं देवदारु च ॥
वृश्चिकाली च भार्गी च सक्षीरैस्तैः शृतं घृतम् ।
सर्वान् प्रशमयत्येतद्विकारान् मृत्तिकाकृतान् ॥ २९ ॥

इति पाण्डुरोगचिकित्सा ।

---

## रक्तपित्त-चिकित्सा ।

नोद्रिक्तमादौ संग्राह्यं बलिनोऽप्यश्नतश्च यत् ।
हृत्पाण्डुग्रहणीदोषप्लीहगुल्मज्वरादिकृत् ।
ऊर्द्ध्वं प्रवृत्तदोषस्य पूर्वं लोहितपित्तिनः ॥
अक्षीणबलमांसाग्नेः कर्त्तव्यमपतर्पणम् ।

---

मूर्वाघृते वत्सकेन वत्सकफलं ग्राह्यम् ॥ २८ ॥

व्योषमित्यादि ।—वाग्भटस्य । विल्व विल्वशलाटुः । अयोरजोऽत्र पटादि शोधितं ग्राह्यम् । वृश्चिकाली विछाटीति ख्याता । क्षीरमत्र चतुर्गुणं बोध्यम्, अरुणस्तु क्षीर घृतसमम, जलन्तु चतुर्गुणमित्याह ॥ २९ ॥

इति पाण्डुरोगचिकित्साव्याख्याविवृतिः ।

---

पाण्डुरोगवत् रक्तपित्तस्यापि पित्तरक्तकारणत्वाव्यभिचारात् पाण्डुरोगानन्तर रक्तपित्तमाह नोद्रिक्तमित्यादि ।—नोद्रिक्तमित्यादिना सौश्रुतक्रियामाह ; उद्रिक्त मतिशयेन प्रवृत्त्युन्मुखम् । अश्नत इत्यनेन सन्तर्पणोत्थितत्वं दर्शयति । आदौ सग्रहणे दोषमाह हृदित्यादि । रोगशब्दस्य हृदादिभिः सम्बन्धः, प्रत्येकमिति शेष. । ऊर्द्ध्वं प्रवृत्तदोषस्येति—सुश्रुतस्य । अतिप्रवृत्तदोषस्येति पाठान्तरम् । अपतर्पणं लङ्घनम्, चरके रक्तपित्ते लङ्घनकरणोपपत्तिर्दर्शिता, यथा "प्रायेण हि समुत्क्लिष्टं सामदोषाच्च वारिणा । वृद्धिं प्रयाति पित्तासृक् तस्माल्लङ्घनमादितः"

ऊर्द्धगे तर्पणं पूर्वं कर्त्तव्यञ्च विरेचनम् ॥
प्रागधोगमने पेया वमनञ्च यथाबलम् ॥ १ ॥
तर्पणं सघृतक्षौद्रलाजचूर्णैः प्रदापयेत्।
ऊर्द्ध्वगं रक्तपित्तं तत् पीतं काले व्यपोहति ॥
जलं खर्जूरमृद्वीकामधुकैः सपरूषकैः।
शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥ २ ॥
त्रिवृता त्रिफला श्यामा पिप्पली शर्करा मधु।
मोदकः सन्निपातोर्द्ध्वरक्तपित्तज्वरापहः ॥ ३ ॥
शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते।
वमनं मदनोन्मिश्रो मन्थः सक्षौद्रशर्करः ॥ ४ ॥

---

इति। दोषनिदानापेक्षया यत् कर्त्तव्यं तदाह ऊर्द्धग इत्यादि। यदाह चरकः "मार्गं दोषानुबन्धञ्च निदानं प्रसमीक्ष्य च। लङ्घनं रक्तपित्तादौ तर्पणं वा प्रयोजयेत्" इति। अस्यार्थः—यदि ऊर्द्धमार्गगं सामं पित्तं कफस्थो दोषः स्निग्धोष्णञ्च निदानं तदा लङ्घनम्, अन्यथा तर्पणम् तर्पयतीति तर्पणमशनम्, तेन यवागूतर्पणञ्च ग्राह्यम्। ये तु शक्तुतर्पणे तर्पणमिति, तन्मते यवागूदानपक्षो न संगृहीतः स्यादित्याह प्रागधोवमन इति, अधोगे रक्तपित्ते प्राक् पूर्वं पेयादिकमित्यर्थः ॥ १ ॥

तर्पणमित्यादि।—चरकस्य। स्पष्टम्। येन द्रवेण शक्तूनामालोडनं कार्य्यं तदाह जलमित्यादि।—अथ खर्जूरादिना जलं षडङ्गविधानेन कार्य्यम्। एतच्च जलमत्यर्थं मधुरमप्यूर्द्धगे कफसम्बन्धे रक्तपित्तव्याधिप्रत्यनीकतया यौगिकं ज्ञेयम् ॥ २ ॥

विरेचनमाह त्रिवृतेत्यादि।—त्रिवृतेति अरुणमूला; श्यामेति श्याममूला त्रिवृत, न तु श्यामलता वृद्धदारको वा, चरके श्यामात्रिवृतः कल्पस्थाने पठितत्वात्। अत्र 'मोदके द्विगुणो गुड़ः' इति वचनात् शर्करायाश्चूर्णाद्द्वैगुण्यमिच्छन्ति, मधु पुनरक्तद्रव्यसमं किंवा मधुशर्करे मिलित्वा चूर्णाद्द्विगुणम्, उभयोरपि मोदकार्हत्वात्। अयं योगः सुश्रुतेऽपि पठ्यते; तट्टीकाकारस्तु त्रिफलायाः प्रत्येकं भागः, शर्करामाक्षिकन्तु मोदकयोग्यमाह ॥ ३ ॥

शालपर्ण्यादिना सिद्धेति।—शालपर्ण्यादि स्वल्पपञ्चमूलं तथातिसारे उक्तौ द्वौ

शालिषष्टिकनीवारकोरदूषप्रशातिकाः ।
श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम् ॥
मसूरमुद्गचणकाः समुद्गश्चाढ़कीफलाः ।
प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम् ॥
शाकं पटोलवेत्राग्र-तण्डुलीयादिकं हितम् ।
मांसं लावकपोतादिशशैणहरिणादिजम् ॥ ५ ॥
विना शुण्ठीं षड़ङ्गेन सिद्धं तोयञ्च दापयेत् ॥ ६ ॥
क्षीणमांसबलं बालं वृद्धं शोषानुबन्धिनम् ।
अवम्यमविरेच्यञ्च स्तम्भनैः समुपाचरेत् ॥ ७ ॥
वृषपत्राणि निष्पीड्य रसं समधुशर्करम् ।
पिबेत् तेन शमं याति रक्तपित्तं सुदारुणम् ॥ ८ ॥

---

च स्वल्पमहद्भेदात् एवं शालपर्ण्यादित्रयमेव दोषाद्यपेक्षया देयमित्याहुः। अव-हारस्तु प्रायः स्वल्पपञ्चमूलेनेति। वमनमिति।—मन्थो द्रवद्रव्यालोडित शक्तवः ॥ ४ ॥

शालीत्यादौ।—नीवार उड़िया, कोरदूषः कोद्रवः, स चेह पुरातनो ग्राह्य तेन कोरदूषस्य यद्रक्तपित्तहेतुत्वं चरके निदानस्थाने प्रोक्तं तदभिनवाभिप्रायेणेति केचित्। अन्ये तु निष्पावमाषपूपादियुक्तस्यैव कोषदूषस्य संयोगमहिम्ना रक्तपित्त हेतुत्वं निदाने प्रोक्तम्, केवलस्य तु कषायमधुरलघुत्वात् रक्तपित्तहन्तृत्वमेवाहु। प्रशातिका रक्तशूका, रक्त उड़िया इति ख्याता, सा जलमध्ये प्रायो भवति। प्रियङ्गुः कार्यानीति लोके। आढकी तूवरी ॥ ५ ॥

विना शुण्ठीमित्यादि स्पष्टम् ॥ ६ ॥

निषिद्धवमनविरेचनमाह क्षीणेत्यादि।—शोषानुबन्धिनं यक्ष्मानुबन्धयुतम् ॥ ७ ॥

स्तम्भनयोगानाह वृषेत्यादि।—वृषस्य पत्राणि पुटपाकविधिना उत्स्विद्य तद्रसो ग्राह्यः। अन्यथा तत्पत्रस्वरसो दुर्ग्राह्यो भवति। अयञ्च योग ऊर्द्ध्वगे बोध्य इत्याहुः। योगोऽयं मधुशर्करारव्यतिरेकेण तत्कृतकषायेणापि बोध्यः, यदा वाग्भटः "पित्तासृक् शमयेत् पीतो निर्यासो वाटरूषजः। शर्करामधुसंयुक्तः केवलो वा शृतोऽपि वा" इति ॥ ८ ॥

अटरूषकनिर्य्यूहे प्रियङ्गुमृत्तिकाञ्जने।
विनीय लोध्रं सक्षौद्रं रक्तपित्तहरं पिबेत्॥ ९॥
वासाकषायोत्पलमृत्प्रियङ्गुलोध्राञ्जनाम्भोरुहकेशराणि।
पीत्वा सिताक्षौद्रयुतानि हन्यात् पित्तासृजोवेगमुदीर्णमाशु॥१०
तालीशचूर्णसंयुक्तः पेयः क्षौद्रेण वासकस्वरसः।
कफपित्ततमकश्वास-स्वरभेदरक्तपित्तहरः॥ ११॥
अटरूषकमृद्वीका-पथ्याक्वाथः सशर्करः।
क्षौद्राढ्यः कसनश्वासरक्तपित्तनिवर्हणः॥ १२॥
वासायां विद्यमानायामाशायां जीवितस्य च।
रक्तपित्ती क्षयी कासी किमर्थमवसीदति॥ १३॥
समाक्षिकः फल्गुफलोद्भवो वा

---

अटरूषकनिर्य्यूह इत्यादि।—अटरूषो वासकः; मृत्तिका सौराष्ट्री मृत्, तदभावे पङ्कपर्पटी; अञ्जनं रसाञ्जनम्; क्षौद्रान्तोऽयं योगः। उक्तञ्च वाग्भटे "वासारसेन फलिनीमृद्रसाञ्जनमाक्षिकम्। पित्तासृक् शमयेत् पीतम्" इति। विनीय कल्कीकृत्य प्रक्षिप्येति वा। प्रियङ्ग्वादीनां मिलितानां कर्षं क्षौद्रस्य च कर्षं प्रक्षिप्य पिबेत्, परिभाषाबलात्। उक्तं ह्यग्निवेशेन कर्षश्चूर्णस्य कल्कस्येत्यादि, तथा मात्रा क्षौद्रघृतादीनामिति। अन्ये त्वाहुः—चूर्णादीनां कर्षमानत्वं स्वतन्त्रप्रयोग एव भवति। यदि पुनरत्रोक्तपरिभाषानुसारेण प्रियङ्ग्वादीनां प्रत्येकं गृह्यते तदा भेषजभूयस्त्वं स्यात्, प्रियङ्ग्वादीनामल्पत्वं युक्तं भवति; व्यवहारस्तु प्रियङ्ग्वादिकल्कक्षौद्रयोः प्रत्येकं चतुःपञ्चमाषकं प्रक्षेप इति॥ ९॥

वासाकषाय इत्यादि।—सुश्रुतस्य। उत्पलादीनां क्षौद्रान्तानां प्रक्षेपः। निश्चलस्तु सितामधुनोः प्रत्येकं शाणः, उत्पलादीनां मिलित्वा शाण इत्याह॥ १०॥

तालीशेत्यादि।—अत्र वासकस्वरसस्य पलम्, तालीशचूर्णस्य माषकद्वयम्, मधु माषचतुष्टयमिति व्यवहरन्ति॥ ११॥

अटरूषकेत्यादि।—चरकस्यायं योगोऽनार्ष इति जेज्जडः, दृश्यते त्वयं चन्द्राटादिषु बहुसंग्रहेष्वपीति॥ १२॥

वासायामित्यादि स्पष्टम्॥ १३॥

पीतो रसः शोणितमाशु हन्ति ॥ १४ ॥
मदयन्त्यङ्घ्रिजः क्काथस्तद्वत् समधुशर्करः ॥ १५ ॥
अतसीकुसुमसमङ्गावटावरोहत्वगम्भसा पीता ।
प्रशमयति रक्तपित्तं यदि भुङ्क्ते मुद्गयूषेण ॥ १६ ॥
कषाययोगैर्विविधैर्दीप्तेऽग्नौ निर्जिते कफे ।
रक्तपित्तं न चेच्छाम्येत् तत्र वातोल्वणे पयः ॥
छागं पयोऽथवा गव्यं शृतं पञ्चगुणे जले ।
अभ्यसेत् ससिताक्षौद्रं पञ्चमूलीशृतं पयः ॥ १७ ॥
द्राक्षया पर्णिनीभिर्वा बलया मधुकेन वा ।
श्वदंष्ट्रया शतावर्य्या रक्तजित् साधितं पयः ॥ १८ ॥
पक्कोडुम्बरकाश्मर्य्य-पथ्याखर्जूरगोस्तनाः ।

---

समाषिक इत्यादि ।—फल्गुफलं काकोडुम्बरिकाफलम् । अयं योगोऽधोगे भवति ॥ १४ ॥

मदयन्त्यङ्घ्रीति मदयन्ती मल्लिकाभेदः, तस्या मूलम् ॥ १५ ॥

अतसीत्यादौ ।—वटावरोहत्वगिति वटावरोहस्य त्वक् । एतत् सर्वं पिष्ट्वा अम्भसा पेयम् ॥ १६ ॥

क्षीरपानविषयमाह कषाययोगैरित्यादि ।—वाग्भटस्य । कषायाश्चूर्णकल्कादयः । पञ्चमूली स्वल्पा ; क्षीरपाकविधानेन पञ्चमूलीसाधितं पयः । अत्रापि ससिताक्षौद्रमिति योज्यम् । उक्तं हि वाग्भटे "पञ्चमूलेन लघुना शृतञ्च ससिता मधु" इति ॥ १७ ॥

द्राक्षयेत्यादि ।—एते षड्योगाः । पर्णिनीभिरिति शालपर्णी-पृश्निपर्णी-मुद्गपर्णीमाषपर्णीभिरिति, एवं सर्वत्र बहुवचनान्ते, द्विवचनान्ते त्वाद्ये द्वे । एते योगा विशेषेण मूत्रमार्गगे रक्तपित्ते श्रेयाः । तथा घृतस्य शर्करायाः प्रक्षेपोऽत्र बोध्यः । यदुक्तं वाग्भटे "जीवकर्षभकौ द्राक्षाबलामधुकगोक्षुरैः । पृथक् पृथक् शृतं क्षीरं सघृतं सितयापि वा । गोकण्टकाभीरुशृतं पर्णिनीभिस्तथा पयः । हन्त्याशु रक्तं सरुजं विशेषान्मूत्रमार्गगम्" इति । एवञ्च सजीवकं सर्षभकमित्यादि चरकेणाप्युक्तम् ॥ १८ ॥

मधुना घ्नन्ति संलीढ़ा रक्तपित्तं पृथक् पृथक् ॥ १९ ॥
भद्रश्रीखोटकत्वग्रसविन्दुद्वितययुतो घृतद्विगुणः।
भूनिम्बकल्क ऊर्द्ध्वगपित्तास्रकासश्वासघ्नः ॥ २० ॥
खदिरस्य प्रियङ्गूणां कोविदारस्य शाल्मलेः।
पुष्पचूर्णन्तु मधुना लीढ्वा चारोग्यमश्नुते ॥ २१ ॥
अभया मधुसंयुक्ता पाचनी दीपनी मता।
श्लेष्माणं रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥ २२ ॥
वासकस्वरसे पथ्या सप्तधा परिभाविता।
कृष्णा वा मधुना लीढ़ा रक्तपित्तं द्रुतं जयेत्।
भावनायां द्रवो देयः सम्यगार्द्रत्वकारकः ॥ २३ ॥

---

पक्वोडुम्बरेत्यादि।—उडुम्बरादीनां फलानि पक्वानि, ततस्तेषां चूर्णानां मधुना लिह। काश्मर्य्यं गाम्भारीफलम्, खर्जूरं पिण्डखर्जूरम्, गोस्तनी द्राक्षा। मधुनिव्यादर्द्रैवादप्राप्तौ अनर्हत्वे वा सर्वत्र शार्करं जलं वङ्गसेनरसं कदल्यादिकुसुमस्रव वा ग्राह्यमित्यर्थः। नासाप्रवृत्तरुधिरेऽपि पक्वोडुम्बरफलं मधुना गुडेन च दृश्यते, उक्तं हि विन्दुसारे "उडुम्बराणि पक्वानि गुडेन मधुनापि वा। उपयुक्तानि निघ्नन्ति नासारक्तं नृणां ध्रुवम्" इति ॥ १९ ॥

भद्रेत्यादि।—भद्रस्तरुणः ॥ २० ॥

खदिरस्येत्यादि।—चरकस्य। चरके तु पुष्पचूर्णानि मधुना लिह्याद्वा रक्तपित्तनुदिति पाठः, टीकाकारोऽपि चूर्णानि तस्य रक्तपित्तनुदिति विशेषणं नोपपद्यत इति कृत्वा पुरुषविशेषणत्वमाह। सग्रहकारैश्च पुष्पचूर्णानि मधुना लीढ्वा चारोग्यमश्नुते इति प्रतिसंस्कृत्य लिखितम्। अयञ्च पुष्पचूर्णलेहो व्यस्त, सुवैत्र विभक्त्यन्तत्वेन निर्देशादिति वृन्दटिप्पनी, किन्तु चरकटीकाकृद्भिर्न व्याख्यातोऽयमर्थः ॥ २१ ॥

अभयेत्यादि। अयं योगो यद्यपि पक्वोडुम्बरकाश्मर्य्येत्यादियोगमध्ये पठित एव तथापि फलविशेषकथनार्थमिह पुनरुक्तम् ॥ २२ ॥

वासकस्वरस इत्यादि।—कृष्णा च वासकस्वरसे भावितेति योज्यम्, भावना च सप्ताहम् उक्तम्, हि चन्द्राटे "दिवा दिवातपे शुष्कं रात्रौ रात्रौ च वासयेत्।

एलागुड़िका—

एलापत्रत्वचोऽर्द्धाक्षाः पिप्पल्यर्द्धपलं तथा।
सितामधुकखर्जूरमृद्वीकाश्च पलोन्मिताः॥
संचूर्ण्य मधुना युक्त्या गुड़िकाः कारयेद्भिषक्।
अक्षमात्रां ततश्चैकां भक्षयेत्तु दिने दिने॥
कासं श्वासं ज्वरं हिक्कां छर्दिं मूर्च्छां मदं भ्रमम्।
रक्तनिष्ठीवनं तृष्णां पार्श्वशूलमरोचकम्॥
शोथप्लीहाढ्यवातांश्च स्वरभेदं क्षतक्षयम्।
गुड़िका तर्पणी वृष्या रक्तपित्तञ्च नाशयेत्॥ २४॥
लोहगन्धिनि निश्वासे चोद्गारे रक्तगन्धिनि।
पृथ्वीकां शाणमात्रान्तु खादेद्विगुणशर्कराम्॥ २५॥
नासाप्रवृत्तरुधिरं घृतभृष्टं श्लक्ष्णपिष्टमामलकम्।
सेतुरिव तोयवेगं रुणद्धि मूर्ध्नि प्रलेपनेन॥ २६॥
घ्राणप्रवृत्ते जलमाशु देयं सशर्करं नासिकया पयो वा।
द्राक्षारसं क्षीरघृतं पिबेद्वा सशर्करञ्चेक्षुरसं हितं वा॥ २७॥

---

शुष्कं चूर्णीकृतं द्रव्यं सप्ताहं भावनाविधिः। द्रवेण यावता द्रव्यमेकीभूयार्द्रतां व्रजेत्। तावत्प्रमाणं निर्दिष्टं भिषग्भिर्भावनाविधौ” इति॥ २३॥

एलेत्यादि।—क्षतक्षीणे चरकस्य। अर्द्धाक्षा इति प्रत्येकं कर्षार्द्धमाना। एव सितादयश्च प्रत्येकं पलोन्मिता। युक्त्या इति यावता मधुना गुड़िका भवति तावन्मानं मधु देयम्। आढ्यवातं वातरक्तम् ऊरुस्तम्भमित्यन्ये॥ २४॥

पृथ्वीका शाणमात्रामिति पृथ्वीका कृष्णजीरकं न तु सूक्ष्मैला, टीकाकृद्भिर्व्याख्यातत्वात्। शाणो माषचतुष्टयम्। कृष्णजीरकस्य तीक्ष्णत्वे उष्णत्वेऽपि द्विगुणशर्करायोगात प्रभावाद्वा पित्तहन्तृत्वम्॥ २५॥

नासेत्यादि।—आमलकं घृते भृष्ट्वा काञ्जिके पिष्ट्वा शिरसि लेपो देयः॥ २६॥

घ्राणप्रवृत्त इत्यादि।—सुश्रुतस्य। जलादयः सशर्कराः पञ्च नस्ययोगा इति गयदासः। तथा डल्लनोऽपि घ्राणप्रवृत्ते सशर्करं पानीयम्, पयोऽपि सशर्करम्,

नस्यं दाड़िमपुष्पोत्थो रसो दूर्वाभवोऽथवा।
आम्रास्थिजः पलाण्डोर्वा नासिकास्रुतरक्तजित्॥ २८॥
मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसंज्ञितः।
शृतं क्षीरं पिबेद्वापि पञ्चमूल्या तृणाह्वया॥ २९॥

दूर्वाद्यं घृतम्—

दूर्वा सोत्पलकिञ्जल्का मञ्जिष्ठा सैलवालुका।
सिता शीतमुशीरञ्च मुस्तं चन्दनपद्मकम्॥
विपचेत् कार्षिकैरेतैः सर्पिराजं सुखाग्निना।
तण्डुलाम्बु त्वजाक्षीरं दत्त्वा चैव चतुर्गुणम्॥
तत्पानं वमतो रक्तं नावनं नासिकागते।

---

तथा द्राक्षारसमपि सशर्करं नासिकया पिबेत्। तथा क्षीरघृतं क्षीरमथनोद्भूतघृतं तच्च सशर्करं नासिकया पिबेत् एवमिक्षुरसमपि नासिकया पिबेत्। वृन्दटीप्पन्यान्तु केवलद्राक्षारसस्य नस्यञ्चेक्षुरसस्य च नस्यमित्युक्तम्, इदमपि युक्तम्; यदाह चरकः "द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव" इति। चक्रस्तु नासिकया इत्यत्र नस्तकर्म्मेति पठित्वा नासापुटयोरिति विवृतवान्। केचित् तु मूर्ध्नि लेपेनेत्यतो मूर्ध्नि इति पदमनुवृत्य अत्र मूर्ध्नि जलं देयमित्यर्थमाहुः। तन्न, नासाप्रवृत्तरुधिरमित्यादि चरकवचनम्; घ्राणप्रवृत्त इत्यादि सौश्रुतम्; तस्मात् दुरन्वयः। हितं वेत्यत्र हिमं वेति पाठोऽपि ज्ञेयः॥ २७॥

नस्यमित्यादि।—चत्वारो योगाः; चरकेऽप्युक्तं "द्राक्षारसस्येक्षुरसस्य नस्यं क्षीरस्य दूर्वास्वरसस्य चैव। यवासमूलानि पलाण्डुमूलं नस्यं तथा दाड़िमपुष्पतोयैः" इति। एवं वाग्भटेऽप्युक्तम्। केचित् तु "रसो दाड़िमपुष्पस्य दूर्वारससमन्विते", इति तन्त्रान्तरप्रदर्शनादत्रापि दूर्वारस-दाड़िमरसाभ्यामेक एव योग इत्याहुः॥ २८॥

मेढ्रग इत्यादि।—पञ्चमूल्या तृणाह्वयेति तृणपञ्चमूल्या, यदुक्तं सुश्रुते "कुशकाशशरेक्षुदर्भाः" इति। अत्र दर्भा उलुघासः। चरके तु "शरेक्षुकाशदर्भाणां शालीनां मूलमेव च" इति। उभयमपि शस्तम्॥ २९॥

दूर्वाघृते शीतं श्वेतचन्दनमिति वृन्दः। अन्ये तु बहुवारत्वचं रसाञ्जनं वेत्याहुः।

कर्णाभ्यां यस्य गच्छेत्तु तस्य कर्णौ प्रपूरयेत् ॥
चक्षुःस्राविणि रक्ते तु पूरयेत् तेन चक्षुषी।
मेढ्रपायुप्रवृत्ते तु वस्तिकर्मसु तद्धितम् ॥
रोमकूपप्रवृत्ते तु तदभ्यङ्गे प्रयोजयेत् ॥ ३० ॥

शतावरीघृतम्—शतावरी दाड़िमतिन्तिड़ीकम्
काकोलिमेदे मधुकं विदारीम्।
पिष्ट्वा च मूलं फलपूरकस्य
घृतं पचेत् क्षीरचतुर्गुणं ज्ञः।
कासज्वरानाहविबन्धशूलं
तद्रक्तपित्तं घृतमाशु हन्यात् ॥ ३१ ॥

बृहच्छतावरीघृतम्—

शतावर्य्यास्तु मूलानां रसप्रस्थद्वयं मतम्।
तत्समञ्च भवेत् क्षीरं घृतप्रस्थं विपाचयेत् ॥
जीवकर्षभकौ मेदा महामेदा तथैव च।
काकोली क्षीरकाकोली मृद्वीका मधुकं तथा ॥
मुद्गपर्णी माषपर्णी विदारी रक्तचन्दनम्।
शर्करामधुसंयुक्तं सिद्धं विस्रावयेद्भिषक् ॥
रक्तपित्तविकारेषु वातरक्तगदेषु च।

---

वयाबामेव रक्तशालादो शीतसंज्ञकत्वेनोक्तत्वात् व्यवहारस्तु प्रायः श्वेतचन्दनेनेति तच्चूर्णाम्बु लजाक्षीरञ्च प्रत्येकं चतुर्गुणम्, दत्त्वा चेवोत शंकाराक्रियाहु' ॥ ३० ॥

शतावरीत्यादि।—चरकस्य। केचिदत्र दाडिमफलम् क्षीरपर्थिकमित्याह तिन्तीड़ीकं महार्द्रकम्। काकोलीयुक्ते मेदे काकोलीमेदे, मध्यपदलोपी समासः किवा काकोलीशब्द. प्रथमैकवचनान्तस्त्रीलिङ्गशब्दः, मेदे इति मेदाद्वयम्, तन्त्रान्तरप्रमाणात्, उक्तं हि "काकोली मधुकं मेदं तिन्तिड़ीकं सदाडिमम्। शतावरीं विदारीञ्च बीजपूरजटान्विताम्। पिष्ट्वा चतुर्गुणे तोये पक्वमाज्यं ज्वरापहम्" इति ॥ ३१ ॥

क्षीणशुक्रेषु दातव्यं वाजीकरणमुत्तमम् ॥
अङ्गदाहं शिरोदाहं ज्वरं पित्तसमुद्भवम् ।
योनिशूलञ्च दाहञ्च मूत्रकृच्छ्रञ्च पैत्तिकम् ॥
एतान् रोगान् निहन्त्याशु छिन्नाभ्राणीव मारुतः ।
शतावरीसर्पिरिदं बलवर्णाग्निवर्द्धनम् ॥
स्नेहपादः स्मृतः कल्कः कल्कवन्मधुशर्करे ।
इति वाक्यबलात् स्नेहे प्रक्षेप्यं पादिकं भवेत् ॥ ३२ ॥

वासाद्यं घृतम्—वासां सशाखां सपलाशमूलां
कृत्वा कषायं कुसुमानि चास्याः ।
प्रदाय कल्कं विपचेद्घृतं तत्
सक्षौद्रमाश्वेव निहन्ति रक्तम् ॥
शणस्य कोविदारस्य वृषस्य ककुभस्य च ।
कल्काढ्यत्वात् पुष्पकल्कं प्रस्थे पलचतुष्टयम् ॥ ३३ ॥

---

बृहच्छतावरीघृते शर्करामधुसंयुतमिति सिद्धशीते मधुशर्करयोर्मिलित्वा पादिकः क्षेपः, अतएवाह स्नेहपाद इत्यादि ॥ ३२ ॥

वासामित्यादि ।—चरकस्य । अत्राद्रीया विधानात् क्वाथविधानेन द्वैगुण्यम् । नित्यमार्द्रा प्रयोक्तव्या न तासां द्विगुणो भवेत" इति वचनात । अत्राष्टगुणं जलं दत्त्वा अष्टांशशेषः कषायः कार्य्यः । उक्तं हि भाग्भटे "समूलमस्तकं पिष्टं वृष अष्टगुणेऽम्भसि । पक्त्वाष्टांशावशेषेण घृत तेन विपाचयत् । तत् पुष्पगर्भं तच्छीतं सक्षौद्रं पित्तशोणितम्" इत्यादि । अत्र वासापुष्पकल्कं, अतः प्रस्थेऽपि पलचतुष्टयम्, शणस्य कोविदारस्य वृषस्येति वक्ष्यमाणपरिभाषाबलात । अत्रानिर्दिष्टप्रमाणत्वात् स्नेहस्य प्रस्थ एव पक्तव्य.। अतएवोक्तम्, "अनिर्दिष्टप्रमाणानां स्नेहानां प्रस्थ इष्यते" इति । यत् पुनः "स्नेहपाकविधौ यत्र प्रमाणं नेरितं क्वचित् । स्नेहस्य कुडवं तत्र पचेत् कल्कपलेन तु" इति परिभाषया स्नेहकुडवपाकाभिधानं तत् तु नस्यविषयं ज्ञेयम् । सक्षौद्रमिति कल्कवन्मधुशर्करे इति वचनेन घृतात् पादिकत्वं ज्ञेयम् । अन्ये तु कल्कधर्मं मधुशर्करे इत्यतिदेशबलात् कल्कस्येव मधु-

कामदेवघृतम्—

अश्वगन्धापलशतं तदर्द्धं गोक्षुरस्य च ।
शतावरी विदारी च शालपर्णी बला तथा ॥
अश्वत्थस्य च शुङ्गानि पद्मबीजं पुनर्नवा ।
काश्मरीफलमेतत्तु माषबीजं तथैव च ॥
पृथग्दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ।
चतुर्भागावशेषन्तु कषायमवतारयेत् ॥
मृद्वीका पद्मकं कुष्ठं पिप्पली रक्तचन्दनम् ।
बालकं नागपुष्पञ्च आत्मगुप्ताफलं तथा ॥
नीलोत्पलं शारिवे द्वे जीवनीयं विशेषतः ।
पृथक् कर्षसमञ्चैव शर्करायाः पलद्वयम् ॥
रसस्य पौण्ड्रकेक्षूणामाढ़कं तत्र दापयेत् ।
चतुर्गुणेन पयसा घृतप्रस्थं विपाचयेत् ॥
रक्तपित्तं क्षतक्षीणं कामलां वातशोणितम् ।
हलीमकं तथा शोथं स्वरभेदं बलक्षयम् ॥
अरोचकं मूत्रकृच्छ्रं पार्श्वशूलञ्च नाशयेत् ।
एतद्राज्ञां प्रयोक्तव्यं बह्वन्तःपुरचारिणाम् ॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम् ।
क्लीवानामल्पशुक्राणां जीर्णानामल्परेतसाम् ।

---

ध्यत्वात् मधुनोऽपि चतुष्पलत्वमाह. । अत्र केचिच्चरके "कास ज्वरं पित्तभवं शूलं गुल्मं यकृत्प्लीहगदांश्च हन्ति" इति फलश्रुतं पठन्ति । वाग्भटेऽप्युक्तं "पित्तगुल्मयक्ष्मश्वासकासहृदयहृत्कामला । तिमिरज्वरवीसर्पं स्वरभेदांश्च नाशयेत" इति ॥ ३३ ॥

अश्वगन्धेत्यादौ ।—तदर्द्धमिति गोक्षुरस्य पञ्चाशत् शतानि ; शतावर्य्यादीनां दशानाञ्च प्रत्येकं पञ्चाशत् पलानीत्यर्थः ; अश्वत्थशुङ्गादीनाञ्च पञ्चानां पृथक् दश

श्रेष्ठं बलकरं हृद्यं वृष्यं पेयं रसायनम्॥
ओजस्तेजस्करश्चैव आयुःप्राणविवर्द्धनम्।
संवर्द्धयति शुक्रञ्च पुरुषं दुर्बलेन्द्रियम्॥
सर्वरोगविनिर्मुक्तस्तीयसिक्तो यथा द्रुमः।
कामदेव इति ख्यातः सर्वर्त्तुषु च शस्यते॥ २४॥

सप्तप्रस्थघृतम्—

शतावरीपयोद्राक्षा-विदारीच्छ्वामले रसैः।
सर्पिषा सह संयुक्तैः सप्तप्रस्थं पचेद्घृतम्॥
शर्करापादसंयुक्तं रक्तपित्तहरं पिबेत्।
उरःक्षते पित्तशूले चोष्णवातेऽप्यसृग्दरे॥
बल्यमूर्जस्करं वृष्यं क्षयहृद्रोगनाशनम्॥ २५॥

खण्डकुष्माण्डकः—

कुष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे॥
यदा मधुनिभः पाकस्तदा खण्डशतं न्यसेत्।
कुष्माण्डपीड़नात् तोयेनाढ़केन पुनः पचेत्॥

---

पलानि, ततो मिलित्वा पलशतचतुष्टये क्वाथ्ये प्रतिशत जलद्रोणी देय, तुलाद्रव्ये जलद्रोण इत्युक्तेः। नागपुष्पं नागकेशरम्, आत्मगुप्ताया शूकशिम्बाः फलम्, जीवनीयमिति जीवनीयदशकम्; शर्करान्तः कल्कः। तजस्कारमुत्साहवर्द्धकम्॥२४॥

शतावरीत्यादि।—शतावर्य्यादीना षण्णां मिलित्वा रसप्रस्थाः षट्, घृतस्यैकः प्रस्थ इति सप्त प्रस्थाः॥ २५॥

कुष्माण्डकादिति।—निष्कुलीकृतं निस्त्वगस्थीकृतम्; किञ्चित् जलं दत्त्वा उत्स्विद्य क्षौमे निष्पीड्य आतपे मनाक् संशोष्य पिष्टा च पलशतं गृहीत्वा पक्तव्यम्। द्वे पले जीरकस्य चेति कणाशुण्ठ्योः प्रत्येकं पलद्वयम्; जीरकस्य च द्वे पले; तन्मात्रसम्मतञ्चैतत्। तद्यथा "द्विपलांशैः कणाशुण्ठीजीरकैरवचूर्णितैः" इति। वैद्यप्रसारकेऽप्येवमेवोक्तम्। व्यवहारोऽपीत्थमेव। अन्ये तु पलार्द्धिकमिति

युक्तसर्पिर्यदा पश्येत् तदा सिद्धेऽत्र निक्षिपेत्।
पिप्पलीशृङ्गवेराभ्यां द्वे पले जीरकस्य च।
त्वगेलापत्रमरिचधान्यकानां पलार्द्धकम्।
न्यस्येत् चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः॥
तत् पक्वं स्थापयेद्भाण्डे दत्त्वा क्षौद्रं घृतार्द्धकम्।
तद्यथाग्निबलं खादेद् रक्तपित्ती क्षतक्षयी॥
कासश्वासतमश्छर्दितृष्णाज्वरनिपीड़ितः।
वृष्यं पुनर्नवकरं बलवर्णप्रसाधनम्॥
उरःसन्धानकरणं बृंहणं स्वरवर्द्धनम्।
अश्विभ्यां निर्मितं सिद्धं कुष्माण्डकरसायनम्॥
खण्डामलकमानानुसारात् कुष्माण्डकद्रवात्।
पात्रं पाकाय दातव्यं यावान् वात्र रसो भवेत्।
अत्रापि मुद्रया पाको निस्त्वचं निष्कुलीकृतम्॥ ३६॥

---

परेण सम्बन्धात् जीरकस्य पलार्द्धमित्याहुः, तन्न, तन्त्रान्तरविरोधात्। त्वगेलादीनाञ्च पञ्चानां प्रत्येकं पलार्द्धम्। आयुर्वेदसारेऽप्युक्तं "कुष्माण्डकानां रूढाना स्विन्नं शतपलं पचेत्। प्रतप्ते हविषः प्रस्थे मधुवर्णेऽत्र वीक्षिते। खण्डाच्छतं कणाजाज्योर्द्विपलं नागरादपि। धान्योषण त्रिगन्धञ्च पृथगर्द्धपलांशिकम्। घृतार्द्धं माक्षिकोपेतं लिह खादेदस्रपित्तजित्" इति। घृतार्द्धमिति प्रस्थार्द्धमानमित्यर्थः। खण्डामलकमानानुसारादित्यादि।—खण्डामलके कुष्माण्डतुलार्द्धे कुष्माण्डरसामलकरसयोः प्रत्येकं प्रस्थ इत्युक्तः, तेन कुष्माण्डशते पले पात्रमिति द्विगुण्येन प्रस्थचतुष्टयं दातव्यमित्यर्थः। पक्षान्तरमाह यावान् वात्र रसो भवेदिति। स्विन्नकुष्माण्डस्यातिपीडनेन यावान् रसो भवति तावानेव पाक इत्यर्थः। व्यवहारोऽप्यनेनैव। युक्तश्चायं पक्षः, उक्तं हि तन्त्रान्तरे "वृद्धं पुरातनञ्चापि कुष्माण्डं कठिनं दृढम्। त्वक्शिराभ्यां विनिर्मुक्तमन्तर्बीजैर्विवर्जितम्। स्विन्नं सुपिष्टं दृषदि वस्त्रेणैव प्रपीडितम्। विशुष्कमातपे किञ्चिद् ग्राह्यं तत् तुलया धृतम्। औडुम्बरकटाहे तु पचेत् प्रस्थे च सर्पिषः। कृत्वा क्षौद्रनिभं तस्मिन्

वासाखण्डकुष्माण्डकः—

पञ्चाशच्च पलं स्विन्नं कुष्माण्डात् प्रस्थमाज्यतः।
पाद्यं पलशतं खण्डं वासाक्काथाढ़के पचेत् ॥
मुस्ताधात्रीशुभाभार्गीत्रिसुगन्धैश्च कार्षिकैः।
ऐलेयविश्वधन्याक-मरिचैश्च पलांशिकैः ॥
पिप्पलीकुड़वश्चैव मधुमानीं प्रदापयेत्।
एतच्चूर्णीकृतं तत्र दर्व्या सङ्घट्टयेत् पुनः ॥
तद्यथाग्निवलं खादेद् रक्तपित्ती चतचयी।
वृष्यं पुनर्नवकरं बलवर्णकरञ्च तत् ॥
कासं श्वासं चयं हिक्कां रक्तपित्तं हलीमकम्।
हृद्रोगमम्लपित्तञ्च पीनसञ्च व्यपोहति ॥ ३७ ॥

---

चिपेत् खण्डशत भिषक्। कुष्माण्डपीडनात् तोयं यत् तेन विपचेत् पुनः इति। मुद्रापाक इत्यादि—अङ्गुलिपीडनजन्य चिह्न मुद्रा, तया पाको ज्ञेयः। एतच्चोपलक्षणम्, तेनान्यदपि पक्कलक्षणं ज्ञेयम् ॥ ३६ ॥

पञ्चाशच्च पलमित्यादि।—अत्रापि पूर्ववत् स्विन्नम्, संस्कृतकुष्माण्डात् पञ्चाशत्पलम्। न चात्र खण्डकुष्माण्डवत कुष्माण्डरसो ग्राह्यः, पाकार्थं वासाक्काथस्यैवोक्तत्वात्। वासायाश्चतुःषष्टिः पलानि, जलस्यापि चतुःषष्टि. शरावाः स्थाप्यन्तु षोडशशरावरूपमाढकम्। शुभा वंशलोचना, ऐलेयम् एलबालुकम्। मधुमानीति मधुनोऽष्टौ पलानि। अत्र केचित् मानिकाया द्वैगुण्यमिच्छन्ति; किन्तु "मानिकाकुड़वौ चेति या वा संख्या पलैः कृता। आर्द्रद्रव्ये द्रवे चैव न तत्र द्विगुणं विदुः." इति वचनात्, तथा चारपाणिवचने मानिकाष्टौ पलान्येवेत्यवधारणादष्टावेव पलानि, न तद्द्वैगुण्यात् षोड़श पलानीत्यर्थः। चरकेऽपि पूर्णं शरावमित्यत्र पूर्णपदेन शरावे द्वैगुण्याभावः सूचितः, तथाहि पूर्णपदं द्वैगुण्यप्रतिषेधपरम्, अन्यथा पूर्णपदं व्यर्थं स्यात्। चक्रस्तु मानिकाकुड़वौ चेति वचनस्य केनापि क्वचिदप्यलिखितत्वादनार्षत्वमाशङ्क्य मानिकायां द्वैगुण्यङ्कित्वन् चरकोक्तलघुनादिहते मानिकया षोडशपलत्वं व्याख्यातवान् ॥ ३७ ॥

वासाखण्डः—तुलामादाय वासायाः पचेदष्टगुणे जले।
तेन पादावशेषेण पाचयेदाढ़कं भिषक्॥
चूर्णानामभयानाञ्च खण्डाच्छुद्धाच्छतं तथा।
द्वे पले पिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्॥
कुड़वं पलमात्रन्तु चातुर्जातं सुचूर्णितम्।
क्षिप्त्वा विलोड़ितं खादेद् रक्तपित्ती क्षतक्षयी।
श्वासकासपरीतश्च यक्ष्मणा च प्रपीड़ितः॥ ३८॥

खण्डकाद्यो लौहः—

शतावरी छिन्नरुहा वृषमुण्डतिका बला।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा।
भार्गी पुष्करमूलञ्च पृथक् पञ्च पलानि च।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम्॥
दिव्यौषधहतस्यापि माक्षिकेण हतस्य वा।

---

तुलामादायेत्यादि।—अत्रार्द्रा वासा, एवं सर्वत्र, निम्बादिकमपि। उक्तं हि "वासानिम्बपटोलकेतकबलाकुष्माण्डकेन्दीवरी-वर्षाभूकुटजाश्वगन्धसहिते द्वे पूतिगन्धाश्रुते। मांसं नातबला सहाचरपुरी हिङ्ग्वार्द्रके नित्यशो ग्राह्यास्तत्क्षणमेव न द्विगुणिता ये चेक्षुजाता घनाः" इति। अष्टगुणे जले इति शरावशते; नात्र द्वैगुण्यम्, "न द्वैगुण्यं तुलामाने पलोक्ते स्वागते तथा" इत्युक्तेः। पादशेषाश्च पञ्चविंशतिशरावाः। चूर्णानामिति हरीतकीचूर्णानामाढकं चतुःषष्टिपलानीत्यर्थः, शायी न पाकश्चूर्णानामिति प्रायःशब्दात् पाकोऽप्यस्तीति सूचयति, तेन चूर्णानां पाकोऽपि न विरोधः। चातुर्जातं पलमानमिति प्रत्येकं पलमानम्, निर्देशस्य मानप्रधानत्वात्॥ ३८॥

खण्डाद्यं लौहमाह शतावरीत्यादि।—छिन्नरुहा गुडूची; वृषो वासकः; मुण्डतिका मुण्डीरी; गायत्री खदिरः। त्रिफलायास्त्वच इति निरस्थित्रिफलायाः। दिव्यौषधिर्मनःशिला, कथामूलं च; माक्षिकं स्वर्णमाक्षिकम्; मनःशिलास्वर्णमाक्षिकाभ्यां प्रत्येकं मिलित्वा वा प्रलिप्य दग्ध्वा च लौहं मारणीयम्। खण्डतुल्य-

पलद्वादशकं देयं वज्रलौहस्य चूर्णितम् ॥
खण्डतुल्यं घृतं देयं पलषोड़शिकं बुधैः।
पचेत् ताम्रमये पात्रे गुड़पाको यथा मतः ॥
प्रस्थार्द्धं मधुनो देयं शुभाश्मजतुकत्वचः।
शृङ्गी विड़ङ्गं कृष्णा च शुण्ठ्यजाजी पलं पलम् ॥
त्रिफला धान्यकं पत्रं द्वाच्चं मरिचकेशरम्।
चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥
यथाकालं प्रयुञ्जीत विड़ालपदकं ततः।
गव्यक्षीरानुपानञ्च सेव्यं मांसरसं पयः।
गुरुवृष्यानुपानानि स्निग्धं मांसादि वृंहणम् ॥
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः।
वातरक्तं प्रमेहञ्च शीतपित्तं वमिं क्रिमीन् ॥
श्वयथुं पाण्डुरोगञ्च कुष्ठं प्लीहोदरं तथा।
आनाहं रक्तसंस्रावमम्लपित्तं निहन्ति च ॥
आरोग्यं पुत्रदं श्रेष्ठं कामाग्निबलवर्द्धनम्।
चक्षुष्यं वृंहणं वृष्यं माङ्गल्यं प्रीतिवर्द्धनम् ॥
श्रीकरं लाघवकरं खण्डकाद्यं प्रकीर्त्तितम् ॥
छागं पारावतं मांसं तित्तिरिः क्रकराः शशाः।
कुरङ्गाः कृष्णसाराश्च तेषां मांसानि योजयेत् ॥

---

मिति च्छेदः ; तेन खण्डस्यापि द्वादश पलानि। केचित् तु रक्तपित्तहन्तृत्वात् खण्डस्य गुरुतरमेवाधिकारीतीति घृतपदेन सह खण्डतुल्यमिति योजयन्ति ; तत् तु न थक्, लौहयोगत्वादत्र लौहप्राधान्येन तन्मानापकर्षस्यायुक्तत्वात् ; रक्तपित्तघ्नत्व- किन्तु लौहस्य स्वरूपत एव महाशक्तिकत्वात् विशेषतो रक्तपित्तहरम्। तत् तु त्वं पुटादिभावितत्वेन महावीर्य्यकतयोपपन्नम्। व्यवहारश्च लौहसमतयैव। स्थार्द्धमिति षोड़श पलानि। शुभा वंशलोचना ; अश्मजतुकं शिलाजतु ; त्वक्

नारिकेलपयःपानं सुनिषण्णकवास्तुकम्।
शुष्कमूलकजीराख्यं पटोलं वृहतीफलम्॥
फलं वार्त्ताकु पक्वाम्रं खर्जूरं स्वादु दाड़िमम्।
ककारपूर्वकं यच्च मांसञ्चानूपसम्भवम्॥
वर्जनीयं विशेषेण खण्डकाद्यं प्रकुर्वता।
लौहान्तरवदत्रापि पुटनादिक्रियेष्यते॥ ३९॥
यच्च पित्तज्वरे प्रोक्तं वहिरन्तश्च भेषजम्।
रक्तपित्ते हितं तच्च क्षीणक्षतहितञ्च यत्॥ ४०॥

इति रक्तपित्तचिकित्सा।

---

गुडत्वक्, शुभादीनां जीरकान्तानां प्रत्येकं पलम्; त्रिफलादीनां केशरान्तानां प्रत्येकं द्रव्यं कर्षद्वयमित्यर्थः। विडालपदकं कर्षः; एतच्च पूर्वयुगपुरुषाभिप्रायेण मानमुक्तम्, व्यवहारस्तु रक्तित्रिचतुःपञ्चकादारभ्य रक्तिद्वयवृद्ध्या माषचतुष्टयं यावत् वृद्धिः। गव्यक्षीरानुपानमिति लौहापेक्षया चतुःषष्टिगुणम्, लौहान्तरे तथा दर्शनात्। उक्तं हि "अनुपानं चतुःषष्टिगुणं प्राहुः सदा बुधाः" इति। जीराख्यमिति जीराख्यशाकं मारिशाकारं चम्पकादौ जीरेति ख्यातम्। ककारपूर्वकमिति विहितान् क्रकरकुरङ्गकृष्णसारान् विहाय, दद्यात्। ककारपूर्वकं कपीतक कर्कोटादि तत् परित्याज्यम्। अमृतसारलौहवदत्रापि वलिमन्त्रादि शुंयं मधुघृतमर्दनादिकञ्च। अत्र केचित् गन्धकाभ्ररसयोगं कुर्वन्ति; एतदनुकूलञ्च वचः पठन्ति, "न रसेन विना लौहं गन्धकञ्चाभ्रकं विना" इति, तथा "अभ्रकेण विना लौहं यः करोति पुमानिह। उदरे तस्य किट्टानि जायन्ते नात्र संशयः" इति। एतत् तु न व्यवहारसिद्धम्। यतः रसाभ्रसहितलौहप्रयोगस्य प्रशस्तताप्रतिपादनार्थं तथाभ्रकशून्यलौहे क्रिमिकिट्टादिव्यापच्छङ्कानिरस्यर्थमभ्रकस्यावश्यं प्रक्षेपार्थञ्च फलातिशयप्रतिपादनार्थमपि चतुःसमलौहे वाक्यद्वयमिदं पठितम्। पुमानिहेति, इहशब्दात् वचनद्वयमपि तत्रैव बोध्यं, नान्यत्र। अन्यथा सामान्यत एव परिभाषितमिदं स्यादिति॥ ३९॥ ४०॥

इति रक्तपित्त-चिकित्सा-विवृतिः॥

## अथ यक्ष्मचिकित्सा ।

शालिषष्टिकगोधूमयवमुद्गादयः शुभाः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यताम् ॥
शुष्यतां क्षीणमांसानां कल्पितानि विधानवित् ।
दद्यात् क्रव्यादमांसानि बृंहणानि विशेषतः ॥ १ ॥
दोषाधिकानां वमनं शस्यते सविरेचनम् ।
स्नेहस्वेदोपपन्नानां सस्नेहं यन्न कर्षणम् ॥
शुद्धकोष्ठस्य युञ्जीत विधिं बृंहणदीपनम् ।
शुक्रायत्तं बलं पुंसां मलायत्तं हि जीवितम् ।
तस्माद्यत्नेन संरक्षेद् यक्ष्मिणो मलरेतसी ॥ २ ॥

---

यक्ष्मरूपेषु पित्तासृजश्चागम इति रक्तपित्तानन्तरं राजयक्ष्मचिकित्सितमुच्यते । शालीत्यादि ।—शाल्यादिकं संवत्सरातिक्रान्तं, यदाह वाग्भटः "शालियष्टिकगोधूमयवमुद्गं समातीतम्" इति । क्रव्यादमांसानीति क्रव्यादा व्याघ्रगृध्रादयः । एषाञ्च मांसमतिशयेन मांसकरं भवति । उक्तं हि "मांसेनोपचिताङ्गानां मांसं मांसकरं परम् ।" एतच्च भक्ष्यच्छागादिमांसव्याजेन देयम् । उक्तं हि "काकोलूकवृकद्वीपिगवाश्वनकुलोरगम् । गृध्रभासखरोष्ट्रञ्च हितं छद्मोपसंहितम्" इति । सुश्रुतेऽप्युक्तं "काकानुलूकान् नकुलान् बिडालान् गण्डूपदान् व्यालबिलेशयाखून् । खादेच्च दद्याद्विविधैः प्रकारैः ससैन्धवान् सर्षपतैलभृष्टान् । देयानि मांसानि च जाङ्गलानि मुद्गाढकीसूपरसाश्च हृद्याः । खरोष्ट्रनागाश्वतराश्वजानि देयानि मांसानि सुकल्पितानि । मांसोपदंशांश्च पिबेदरिष्टान् माध्वीकयुक्ता मदिराश्च सेव्याः" इति । सुकल्पितानीति सूदशास्त्रोक्तविधया उपकल्पितानि ॥ १ ॥

दोषाधिकानामित्यादि ।—चरकस्य । सस्नेहमीषत्स्नेहम् । यन्न कर्षणमित्यनेन वमनविरेचनयोरत्र मृदुतीक्ष्णत्वापकर्षणयोः प्रयोगं दर्शयति । शुक्रेत्यादि ।—वाग्भटस्य । शुक्रस्य सर्वधातुसारत्वात् तदधीनं शक्तिलक्षणं बलम्, मलायत्तं हि जीवितमिति । यद्यपि सर्वेषामेव जीवितं मलाधीनं मलस्य शरीरस्तम्भकत्वात् तथापि विशेषाद्राजयक्ष्मिणो जीवितं मलाधीनम् । उक्तं हि "तस्मिन् काले पच-

सपिप्पलीकं सयवं सकुलत्थं सनागरम्।
दाड़िमामलकोपेतं स्निग्धमाजरसं पिबेत्॥
तेन षड् विनिवर्त्तन्ते विकाराः पीनसादयः।
रसे द्रव्याम्बुपेयावत् सूदशास्त्रवशादिह॥
पलानि द्वादश प्रस्थे घनेऽथ तनुके तु षट्।
मांसस्य वटकं कुर्य्यात् पलमच्छतरे रसे॥ ३॥

---

त्यग्निर्यदन्नं कोष्ठसंश्रितम्। मलं भवति तत्प्राय कल्पते किञ्चिदोजसे। तस्मात् पुरीष मरक्ष्य विशेषाद्राजयक्ष्मिण। सर्वधातुक्षयार्त्तस्य बलं ह्यस्य हि विड्बलम् इति॥ २॥

सपिप्पलीकमित्यादि। अत्र केचित यवकुलत्थान्यद्रव्यापेक्षया प्रचुरौ देयौ यूषयोनित्वात्, पिप्पली शुण्ठी च तावती देया यावत्या कटुत्वमात्र स्यात्, एवमम्लार्थं दाड़िमामलकयोर्दानम्, एतत सव पिप्पल्यादिद्रव्यापेक्षया द्विगुणमांसेन सह एकीकृत्याष्टगुणजले क्वथनीय, तत पादस्थ घृतेन संस्कृत्य उपयोज्यमिति। वृद्धवैद्यास्तु पिप्पलीशुण्ठ्यौ प्रत्येक माषकचतुष्टय, यवकुलत्थयोस्तु प्रत्येक कर्ष, दाड़िमामलकयोरपि प्रत्येक माषकचतुष्टय ग्राह्यं, समुदितद्रव्यापेक्षया मांस द्विगुणं ग्राह्यम्, सर्वमेकीकृत्याष्टगुणजले क्वथनीय, तत्पादस्थ घृतेन संस्कृत्य उपयोज्यमित्याहु। चक्रस्तु स्वमतमाह रस इत्यादि। षडङ्गपरिभाषया द्रव्य जलञ्च ग्रहीत्वार्द्धशृत कार्य्य, तेनार्द्धशृतक्वाथेन पलानि द्वादशप्रस्थ इत्यादि वक्ष्यमाणसूदशास्त्रोक्तपरिभाषानुमारेण परिमित पिष्टा मांस वटकीकृत्य पुनरपि पिष्टा पक्वा यूष कार्य्य इति। व्यवहारस्तु पूर्वोक्तवृद्धोपदिष्ट एव ज्ञेय। पीनसादय इत्यादिशब्दात् चरकोक्तानि शिर शूलश्वासकासस्वरक्षयपार्श्वशूलानि बोध्यानि। रसे द्रव्याम्बुपेयावदित्यादौ पेयावदित्यनेन यथा क्वाथसाध्यपेयायां षडङ्गपरिभाषया द्रव्यजलयोर्व्यवस्था तथा मांसरसेऽपीत्यर्थ। मांसन्तु सूदशास्त्रोक्तवचनानुसारेण ग्राह्यमित्याह पलानीत्यादि।—अस्यार्थ सर्वत्रापि पिष्टेति शेष। प्रस्थे द्रवे यदि घनरसः कर्त्तव्यस्तदा मासस्य द्वादश पलानि पिष्टा वटकं कुर्य्यात्, तथा प्रस्थे द्रवे यदि तनुकोऽच्छरस कर्त्तव्यस्तदा मासस्य षट्पलानि पिष्टा वटक कुर्य्यात्, एव प्रस्थे द्रवे यदि अच्छतरो रस. कर्त्तव्यस्तदा मांसस्य पल पिष्टा वटकं कुर्य्यादिति। वङ्ग

अथोदशाङ्गः—धन्याकपिप्पलीविश्व-दशमूलीजलं पिबेत्।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये॥ ४॥
अश्वगन्धामृताभीरुदशमूलीबलावृषाः।
पुष्करातिविषे घ्नन्ति क्षयं क्षीररमाशिनः॥ ५॥
दशमूलबलारास्नापुष्करसुरदारुनागरैः क्वथितम्।
पेयं पार्श्वांसशिरोरुक्क्षयकासादिशान्तये सलिलम्॥ ६॥
ककुभत्वङ्नागबलावानरीबीजानि चूर्णितं पयसि।
पक्वं मधुघृतयुक्तं ससितं यक्ष्मादिकासहरम्॥ ७॥
पारावतकपिच्छागकुरङ्गाणां पृथक् पृथक्।
मांसचूर्णमजाक्षीरं पीतं यक्ष्महरं परम्॥ ८॥
घृतकुसुमसारलीढं क्षयं क्षयं नयति गजबलामूलम्।
दुग्धेन केवलेन तु वायसजङ्घा निपीतेव॥ ९॥
कृष्णाद्राक्षासितालेहः क्षयहा क्षौद्रतैलवान्।

---

यूषे पुनः षडङ्गपरिभाषानुसारेण प्रस्थमात्रं जलमर्द्धशृतं सत् प्रस्थार्द्धमेव भवति, तेन तत्र घनरसे मांसस्य षट् पलानि ; तनुके पलत्रयम्, अच्छतरेऽर्द्धपलमिति॥ ३॥

धन्याकपिप्पलीत्यादि।—वातकफोत्तरे योगोऽयम्॥ ४॥

अश्वगन्धेत्यादि।—अभीरुः शतमूली ; वृषो वासकः। क्वाथेनायं योगः। असमासनिर्देशादिह पुष्करातिविषयोः प्रक्षेपपलमिति वृन्दटिप्पनी॥ ५॥

दशमूलबलेत्यादि स्पष्टम्॥ ६॥

ककुभेत्यादि।—ककुभत्वक् अर्जुनवल्कलं ; नागबला गोरक्षतण्डुला, अस्या मूलं सर्वत्र बोध्यम् ; वानरी शूकशिम्बी ; एषां चूर्णं प्रत्येकमेकपलं १ शर्करा पल १, दुग्धशराव, २, सर्वमिदं पक्त्वा उत्कारिका कार्य्या, परिभर्जनार्थं घृतकर्ष २, शृशीते मधु किञ्चित् दत्त्वा भक्ष्यम्॥ ७॥

पारावतेत्यादि स्पष्टम्॥ ८॥

घृतेत्यादौ।—कुसुमसारो मधु ; गजबला नागबला, गोरक्षतण्डुलीति ख्याता। वायसजङ्घा काकजङ्घा॥ ९॥

मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भवः ॥
शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥ १० ॥

सितोपलादिलेहः—

सितोपलातुगाक्षीरीपिप्पलीबहुलात्वचः ।
अन्त्यादूर्द्ध्वं द्विगुणितं लेहयेत् क्षौद्रसर्पिषा ॥
चूर्णितं प्राशयेदेतत् श्वासकासक्षयापहम् ।
सुप्तजिह्वारोचकिनमल्पाग्निं पार्श्वशूलिनम् ।
हस्तपादांसदाहेषु ज्वरे रक्ते तथोर्द्ध्वगे ॥ ११ ॥

लवङ्गाद्यं चूर्णम्—

लवङ्गकक्कोलमुशीरचन्दनं नतं सनीलोत्पलजीरकं समम् ।
त्रुटिः सकृष्णागुरुभृङ्गकेशरं कणा सविश्वा नलदं सहाम्बुदम् ।
अहीन्द्रजातीफलवंशलोचनाः सिताष्टभागं समसूक्ष्मचूर्णितम् ।
सुरोचनं तर्पणमग्निदीपनं बलप्रदं वृष्यतमं त्रिदोषजित् ॥
उरो विबद्धं तमकं गलग्रहं सकासहिक्कारुचियक्ष्मपीनसम् ।
ग्रहण्यतीसारभगन्दरार्वुदं प्रमेहगुल्मांश्च निहन्ति सज्वरान् ॥१

कृष्णेत्यादि सितोद्भव इत्यन्त योगद्वय स्पष्टम् । अतुल्ये चाज्यमाक्षिके इत्यपि योगान्तरम्, अत्रापि लिहन् क्षयी क्षीराशी लभते पुष्टिमिति बोध्यम् ॥ १० ॥

सितोपलेत्यादि ।—चरकस्य । सितोपला शर्करा, तुगाक्षीरी वंशलोचना, बहुला एला, त्वक् गुडत्वक् । अन्त्यादूर्द्ध्वं द्विगुणितमिति अन्त्यायास्त्वच एको भागः, एलाया द्वौ, पिप्पल्याश्चत्वारः, तुगाक्षीर्या अष्टौ; सितोपलायाः षोडशेत्यर्थः यद्यप्यूर्द्ध्वशब्दोऽनागतमभिधत्ते, यथा "अत ऊर्द्ध्वं प्रवक्ष्यामि यवागूर्विविधौषधाः" तथाप्यत्र विवक्षावशादतीतमप्यभिधत्ते । चूर्णं वा प्राशयेदित्यनेन मधुघृत विनापि भक्षणं बोधयति ॥ ११ ॥

लवङ्गमित्यादौ ।—नतं तगरपादिका, तदभावे सियलीकोपरः । सनीलोत्पलजीरकमिति पाठे पत्रं तेजःपत्रम् । त्रुटिः सूक्ष्मैला, भृङ्गं गुडत्वक्, नखर

तालीशाद्यं चूर्णं मोदकश्च—

तालीशपत्रं मरिचं नागरं पिप्पली शुभा ।
यथोत्तरं भागवृद्ध्या त्वगेले चार्द्धभागिके ॥
पिप्पल्यष्टगुणा चात्र प्रदेया सितशर्करा ।
श्वासकासारुचिहरं तच्चूर्णं दीपनं परम् ॥
हृत्पाण्डुग्रहणीरोगप्लीहशोषज्वरापहम् ।
छर्द्यतीसारशूलघ्नं मूढवातानुलोमनम् ॥
कल्पयेद् गुडिकाञ्चैतच्चूर्णं पक्त्वा सितोपलाम् ।
गुडिका ह्यग्निसंयोगाच्चूर्णाल्लघुतरा: स्मृता: ।
पैत्तिके ग्राहयन्त्येके शुभया वंशलोचनाम् ॥ १३ ॥

शृङ्ग्यर्जुनाद्यचूर्णम्—

शृङ्ग्यर्जुनाश्वगन्धानागबलापुष्कराभयाच्छिन्नरुहा: ।
तालीशादिसमेता लेह्या मधुसर्पिर्भ्यां यक्ष्महरा. ॥ १४ ॥

---

मासी । सहाम्बुनेति पाठे अम्बु बालकम् । अहीन्द्रीऽनन्तमूलम् । शर्कराया एकभागापेक्षयाष्टौ भागा., अन्ये तु मिलितचूर्णापेक्षयेत्याहु. । व्यवहारस्तु पूर्वैर्यैव ॥ १२ ॥

तालीशपत्रमित्यादौ ।—शुभेति पिप्पलीविशेषणं, न तु वंशलोचना, समानतन्त्रे हारीतादावदृष्टत्वात् । किन्तु संग्रहकारा: प्रबलपित्ते शुभार्थे वंशलोचना ग्राह्येति लिखन्ति । एतमेवार्थं कश्चिल्लिखति यथा "तालीशमरिचनागरमागधिकावंशलोचना क्रमश: । वृद्धास्त्वगेलाद्धं कृष्णाया: सिता भवेदष्टगुणा" इति । त्वगेले चार्द्धभागिके इति । प्रथमभागापेक्षया त्वगेलयो: प्रत्येकमर्द्धभागत्वम्, पिप्पल्यष्टगुणेति पिप्पलीभागापेक्षया अष्टगुणा सितशर्करा । गुडिकापक्षे समं जलेन शर्करापाकं कुर्वन्ति वृद्धा' ॥ १३ ॥

शृङ्गीत्यादौ ।—छिन्नरुहा गुडूची । तालीशादिसमेता इत्यनेन तालीशादिद्रव्यमात्रमनुकर्षति, न तु तत्रोक्तभागवृद्धिक्रममपि, यथा वक्ष्यमाणैतद्वते कल्याणकस्य चाङ्गेष्वल्पेऽपि कल्याणघृतोक्तकल्कद्रव्यमात्र-

मधुताप्यविडङ्गाश्मजतुलौहघृताभयाः।
घ्नन्ति यक्ष्माणमत्युग्रं सेव्यमाना हिताशिना ॥ १५ ॥

विन्ध्यवासियोगः—

व्योषं शतावरी त्रीणि फलानि द्वे बले तथा।
सर्वामयहरो योगः सोऽयं लौहरजोऽन्वितः ॥
एष वक्षःक्षतं हन्ति कण्ठजांश्च गदांस्तथा।
राजयक्ष्माणमत्युग्रं बाहुस्तम्भमथार्दितम् ॥ १६ ॥

रसेन्द्रगुड़िका—

कर्षं शुद्धं रसेन्द्रस्य स्वरसेन जयार्द्रयोः।
शिलायां खल्वयेत् तावद् यावत् पिण्डं घनं ततः।
जलकणाकाकमाचीरसाभ्यां भावयेत् पुनः।
सौगन्धिकपलं भृङ्गस्वरसेन विभावितम् ॥

---

मिति, तेनात्र शुङ्ग्यादीनां समभागतया तालीशादयोऽपि समभागा एव ग्राह्या ॥ १४ ॥

मधुताप्येत्यादि।—मधुघृताभ्यां लिहः। लौहमयोरजश्चूर्णं पुटादिशोधितं, न तु लौहमगुरु रसायनत्वात्। लौहमगर्विति वृन्दटिप्पनी। ताप्यं स्वर्णमाक्षिकं, तच्च मृतसारवक्ष्यमाणविधिना शोधितं ग्राह्यम्। अश्मजतु शिलाजतु, तदपि वक्ष्यमाण शिवाटिकागुड़िकाविधिना शोधितं ग्राह्यम्। अयोरजश्चात्र मिलितेतरचूर्णसमम्। लौहचूर्णमत्र रसायनतया श्रेष्ठत्वात् महावीर्य्यत्वाच्च, महाव्याधिप्रशमनहेतुत्व युज्यत इति ॥ १५ ॥

विन्ध्यवासियोगे त्रीणि फलानीति त्रिफला ; द्वे बले इति नागबलाबले, न तु श्वेतपीतभेदात्। अत्र लौहचूर्णं रसायनतया श्रेष्ठत्वात् यौगिकत्वात् महावीर्यत्वाच्च मिलितव्योषादिचूर्णेन समं ग्राह्यम्, अतएव व्योषादिपाठात् विच्छिद्य लौहरजोऽन्वितमिति पठितम्। चूर्णयोग एवायं घृतमधुनोरश्रुतत्वात्। अन्ये तु लेह एवायं घृतमधुभ्यां कर्त्तव्यः, लेहप्रकरणविहितत्वादित्याहुः। युक्तञ्चैतत् ॥ १६ ॥

कर्षमित्यादि।—रसेन्द्रः पारदस्तस्य शोधनं वक्ष्यमाणकज्जलीगुड़िकायां वक्ष्य

चूर्णितं रससंयुक्तमजाक्षीरपलद्वये ।
खल्वितं घनपिण्डन्तु गुडीं खिन्नकलायवत् ॥
कृत्वादौ शिवमभ्यर्च्य द्विजातीन् परितोष्य च ।
जीर्णान्नो भक्षयेदेकां क्षीरमांसरसाशनः ॥
सर्वरूपं क्षयं श्वासं रक्तपित्तमरोचकम् ।
अपि वैद्यशतैस्त्यक्तमम्लपित्तं नियच्छति ॥ १७ ॥

एलादिमन्थः—

एलाजमोदामलकाभयाक्षगायत्रीनिम्बाशनशालसारान् ।
विडङ्गभल्लातकचित्रकांश्च कटुत्रिकाम्भोदसुराष्ट्रिकाश्च ॥

पक्त्वा जले तेन पचेत्तु सर्पि-
स्तस्मिन् सुसिद्धे त्ववतारिते च ।
विंशत्पलान्यत्र सितोपलाया
दद्यात् तुगाक्षीरिपलानि षट् च ॥
प्रस्थे घृतस्य द्विगुणञ्च दद्यात्
क्षौद्रं ततो मन्थहतं निदध्यात् ।
पलं पलं प्रातरतो लिहेच्च
पश्चात् पिबेत् क्षीरमतन्द्रितश्च ॥

भावविधिना कार्य्यम् । तदनुक्रमेण जयाया जयन्त्याः स्वरसेन खल्वशिलाया सम्मर्द्य पिण्डाकारं कुर्य्यात्, तदनु जलकर्णा मोरटा तस्या रसेनाप्लाव्य प्रत्येकं सप्तधा भावयेत्, तत, सौगन्धिक भद्रतरगन्धक तदपि क्षुधावत्यां वक्ष्यमाणविधिना शोधितं पलपरिमितं पारदेन सह घर्षणीयम्; तदनन्तरमजाक्षीरपलद्वये खल्वशिलास्थिते खल्वित घनपिण्डतापन्ने सु खिन्नकलायप्रमाणां गुडिकां कुर्य्यात्; तदनु प्रत्यहमेका गुड़िकां जीर्णान्ने भक्षयेत् । अनुपानन्तु दुग्धादिकमेव ॥ १७ ॥

एलेत्यादि ।—सुश्रुतस्य । अजमोदा यमानी; अक्ष विभीतकम्, गायत्री खदिरः; असनः पीतशालः; गायत्र्यादीनां शालान्तानां चतुर्णां सारो ग्राह्यः । सौराष्ट्रजा सुराष्ट्रजत् । एलादीनां सौराष्ट्रान्तानां पृथगष्टौ पलानि गृह्यन्ते । सर्व

एतद्धि मेध्यं परमं पवित्रं चक्षुष्यमायुष्यतमं तथैव ।
यक्ष्माणमाशु व्यपहन्ति शूलं पाण्ड्वामयञ्चापि भगन्दरञ्च ॥
न चात्र किञ्चित् परिवर्जनीयं रसायनञ्चैतदुपास्यमानम् ॥१८

सर्पिर्गुडः—बला विदारी ह्रस्वा च पञ्चमूली पुनर्नवा ।
पञ्चानां क्षीरिवृक्षाणां शुङ्गा मुष्टंशिकाः पृथक् ॥
एषां कषाये द्विक्षीरे विदार्य्याजरसांशिके ।
जीवनीयैः पचेत् कल्कैरक्षमात्रैर्घृताढकम् ॥
सितापलानि पूते च शीते द्वात्रिंशदावपेत् ॥
गोधूमपिप्पलीवांशीचूर्णं शृङ्गाटकस्य च ।

---

षोड़शगुणं दत्त्वा षोड़शांशं स्थापयेत् ; तेन क्वाथेन केवलेनैव घृतप्रस्थं पाचयेत्। घृतप्रस्थापेक्षया द्विगुणं मधु। मन्थो मन्थानदण्ड इत्याहुः। अन्ये तूक्तव्याख्यानवादाय वाग्भटवचनं पठन्ति, यथा "एलाजमोदात्रिफलासौराष्ट्रीव्योषचित्रकम्। सारानरिष्टगायत्री-शालबीजकसम्भवान्। भल्लातकविडङ्गञ्च पृथगष्टपलोन्मितम्। सलिलैः षोड़शगुणैः षोडशांशं स्थितं पचेत्। पुनस्तेन घृतप्रस्थं सिद्धे चास्मिन् पलानि षट्। तुगाक्षीर्य्याः क्षिपेत् त्रिंशत् सितायाः द्विगुणं मधु। ततस्त्रिजातत्रिपलं ततो लीढं खजाहतम्। पयोऽनुपानं तत् प्राह्ने रसायनवरन्त्विदम्" इत्यादि। एतद्दर्शनात् त्रिजातकमपि बोध्य सौगन्ध्यार्थम् ; अत्र तु न पठितम्, तद्व्यतिरेकेणापि व्याधिहन्तृत्वात्। अन्ये त्वाहुः सुश्रुतोक्तयोगेऽस्मिन्नभीदपाठात् त्रिजाताभावाद्योगान्तरमेवेदम्। तदा घृतप्रस्थस्य साध्यत्वादेलादीनां सप्तदशानां मिलित्वा चतुःषष्टिपलानि, जलस्य तु चतुःषष्टिशरावाः, 'शेषाः षोड़श शरावा' इति ॥ १८ ॥

बलेत्यादि।—अयं योगश्चरके क्षतक्षीणचिकित्सिते उक्तः। क्षीरिवृक्षाः प्लक्षवेतसोडुम्बराश्वत्थवटाः। शालाक्यं तु वेतसस्थाने मधूकं निक्षिप्य पञ्च क्षीरिवृक्षा व्याख्याताः ; यथा "उडुम्बरो वटोऽश्वत्थो मधूकः प्लक्ष एव च। पञ्चैते क्षीरिणो वृक्षा अभिसंज्ञे प्रकीर्त्तिताः" इति। अभिसंज्ञ इति वचनेन शालाक्याधिकारव्यतिरिक्ते स्थाने पूर्वंवृक्षा उक्ता युक्ताः। अन्ये तु वेतसस्थाने कपीतनमाहुः। कपीतनो

समाक्षिकं क्षौद्रविकं तच्चैवं खजमूर्च्छितम् ।
स्थानं सर्पिर्गुडान् कृत्वा भूर्जपत्रेण वेष्टयेत् ।
तान् जग्ध्वा पलिकान् क्षीरं मद्यञ्चानुपिबेत् कफे ।
शोषे कासे क्षतक्षीणे श्रमस्त्रीभारकर्शिते ॥
रक्तनिष्ठीवने तापे पीनसे चोरसि स्थिते ।
शस्ताः पार्श्वशिरःशूले भेदे च स्वरवर्णयोः ॥
क्वाथ्ये त्रयोदशपले द्रव्याल्पत्वभयाज्जलम् ।
अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् ।
केचिद्यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुः ॥ १९ ॥

गर्द्दभाण्डः । शुङ्गा इत्यविकसितपत्रमुकुलम् । मुष्टंशिका: पलमानाः । अत्र बलादिक्वाथ्ये त्रयोदशपले जलद्रोणो देयस्तस्य पादावशेषादष्टाविंशत्यधिकशतपलमानम् । द्विक्षीर इति द्विप्रकारं क्षीरं यत्रेति तथा । क्षीरद्वयञ्चात्र प्राधान्यादाजं गव्यञ्च ग्राह्यम् । आजरसश्छागमांसरसः । एषां चतुर्णामपि द्रवाणां क्वाथसमत्वमेव साहचर्य्यादिति पञ्चगुणपाकः । क्षीरानुपानञ्च पित्ते श्रेयम् । उक्तार्थसंवादकतन्त्रान्तरं यथा "पुनर्नवा बला कृत्स्नां पञ्चमूलीं विदारिकाम् । उडुम्बरवटाश्वत्थप्लक्षवेतसशुङ्गकान् । पलिकांशान् जलद्रोणे पक्त्वा पादावशेषिते । पादांशैश्छागगोक्षीरविदार्य्याः स्वरसैः पृथक् । कर्षांशैर्जीवनीयैश्च कल्कैराज्याढकं पचेत् । कणागोधूमशृङ्गाटवांशीक्षौद्राञ्जलि पृथक् । सिद्धे प्रस्थौ सितायाश्च दत्त्वा खादेत् खजाहतम् । एतद्गुडीकृतं सर्पिर्घटे भूर्जान्विते स्थितम् । अनुपानं पिबेत् क्षीरं पित्ते मद्यं कफे हितम् । क्षतक्षयाम्लपित्तघ्नं ज्वरशोषप्रणाशनम्" इति । अत्र पादांशैरिति पादस्थक्वाथसमभागैरिति । चक्रस्त्वाह क्वाथ्ये त्रयोदशपले द्रव्याल्पत्वभयाज्जलम् । अष्टगुणं क्वाथसमौ विदार्य्याजरसौ पृथक् । केचिद्यथोक्तक्वाथ्ये तु क्वाथं घृतसमं जगुरिति । अस्यार्थः त्रयोदशपले क्वाथ्येऽष्टगुणं जलं त्रयोदशशरावपरिमितं भवति ; तस्य तु पादशेषात् सपादशरावत्रयं क्वाथं वदन्ति । क्वाथसमश्च विदारीरसश्छागमांसरसश्च, क्षीरञ्च क्वाथापेक्षया द्विगुणमिति सार्द्धषट् शरावाः ; एवं घृताढके पक्तव्ये त्रिंशत्पलाधिकं द्रवपलशतमिह भवति । एवञ्च सति द्रवाल्पत्वं स्यादिति भयात् केचिदत्र यथोक्त एव क्वाथ्ये त्रयोदशपलरूपे तथा पानीयं देयं यथा

च्यवनप्राशः—बिल्वाग्निमन्थश्योनाककाश्मर्य्यः पाटली बला।

पर्ण्यश्चतस्रः पिप्पल्यः श्वदंष्ट्रा बृहतीद्वयम्॥

शृङ्गी तामलकी द्राक्षा जीवन्ती पुष्करागुरु।

अभया साऽमृता ऋद्धिर्जीवकर्षभकौ शटी॥

मुस्तं पुनर्नवामेदे सूक्ष्मैलोत्पलचन्दने।

विदारी वृषमूलानि काकोली काकनासिका।

एषां पलोन्मितान् भागान् शतान्यामलकस्य च॥

पञ्च दद्यात् तदैकध्यं जलद्रोणे विपाचयेत्।

ज्ञात्वा गतरसान्येतान्यौषधान्यथ तं रसम्॥

तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषोः।

पलद्वादशके भृष्ट्वा दत्त्वा चार्द्धतुलां भिषक्॥

---

पादशेषात् क्वाथो घृतसमः स्यात्, तेनात्र त्रयोदशपलेऽपि क्वाथ्ये जलद्रोणं दत्त्वा पादावशिष्टक्वाथस्य घृतसमत्वं कल्पनीयमिति जगद्भगवन्तः। अस्मिन् पक्षे क्षीरं द्विगुणं दत्त्वा विदारीमांसरसौ च मिलित्वा घृतसमाविति चतुर्गुणद्रवेण पाक उत्सर्गसिद्धो भवति, चतुर्गुणद्रवेण तु स्नेहपाकौत्सर्गिकत्वात्। जतूकर्णेनापि क्वाथमानमनियतमेवोक्तं क्वाथन्तु तथापि स्नेहसम एव, पञ्चप्रभृति यत्र स्युरित्युक्तेः। अपि च यथा ह्यष्टौ पञ्चमूलं बला विदारी वटादिशुङ्गाश्च निक्वाथ्य द्विक्षीरे छाग विदारीरसे च समे तत् जीवनीयगणकल्कं पक्त्वा घृताढकमित्यादि। अन्ये तु "द्रव्यमापोथितं क्वाथ्यं दत्त्वा षोडशिकं जलम्। पादावशेषः कर्त्तव्य एष क्वाथविधिः स्मृतः।" इति कृष्णात्रेयपरिभाषानुसारेण क्वाथ्ये षोडशगुणं जलं दीयमानं षड्विंशतिशरावं भवति, पादशेषाच्च सार्द्धषट्शरावक्वाथो भवति; द्विक्षीरं इति क्वाथापेक्षया क्षीरस्य द्वैगुण्यात् त्रयोदश शरावाः; मिलितौ विदार्य्याजरसावपि कषायापेक्षया द्विगुणाविति, एवं मिलित्वा सार्द्धद्वात्रिंशच्छरावद्रवैः पाक इति व्याचक्षते। व्यवहारं पुनः प्रायेणानेनैव। खजो मन्थानदण्डः। भूर्जपत्रे वेष्टनञ्च शक्त्युत्कर्षार्थम्॥ १९॥

बिल्वेत्यादौ।—पर्ण्यश्चतस्र इति शालपर्णी-पृश्निपर्णी-मुद्गपर्णी-माषपर्ण्यः। तामलकी भूम्यामलकी। जीवन्ती स्वनामख्याता। पुनर्नवामेदेति पुनर्नवा च मेदा च

मत्स्यण्डिकायाः पूतायाः लेहवत् साधु साधयेत्।
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत्॥
चतुष्पलं तुगाक्षीर्य्याः पिप्पल्या द्विपलं तथा।
पलमेकं निदध्याच्च त्वगेलापत्रकेशरात्॥
इत्ययं च्यवनप्राशः परमुक्तो रसायनः।
कासश्वासहरश्चैव विशेषेणोपदिश्यते॥
क्षीणक्षतानां वृद्धानां बालानाञ्चाङ्गवर्द्धनम्।
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम्॥
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति।
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भोजनम्॥
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा॥
मेधां स्मृतिं कान्तिमनामयत्वं वपुःप्रकर्षं बलमिन्द्रियाणाम्।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं वर्णप्रसादं पवनानुलोम्यम्।
रसायनस्यास्य नरः प्रयोगात् लभेत जीर्णोऽपि कुटीप्रवेशात्।
जराकृतं पूर्वमपास्य रूपं बिभर्त्ति रूपं नवयौवनानाम्॥
सितामत्स्यण्डिकालाभे धात्राद्य मृदुभर्जनम्।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत्॥ २०॥

---

ति द्वन्द्वः न तु मेदाद्वयम्, पर्णिन्यः पिप्पली शृङ्गी मेदा तामलकी त्रुटि” इति वाग्भटवचनात्। उत्पलं नीलोत्पलं न तु कुष्ठम्, सर्वस्मिन्नेव तन्त्रान्तरे कुष्ठमिति पाठस्य तट्टीकाकारैरव्याख्यातत्वात। काकनासिका कायुयाठुँटी, जेज्जड़स्तु रस-फलमित्याह। शतान्यामलकस्येति आकृतिमानत्वात् आमलकीफलस्य पञ्चशतानि; तानि कर्पटे पोट्टली कृत्वा अपरैः क्वाथ्यद्रव्यैः सह क्वथनीयम्। गतरसत्वञ्च द्रव्याणां चतुर्भागावशेषेण क्वाथेनेति स्वयमेव वक्ष्यति, अतएव पादावशेष इति वाग्भटीक्तम्। अन्ये त्वष्टभागावशेष इत्याहुः, तत्तु न व्यवहारसिद्धम्। निष्कुल-मिति शिरास्थिरहितम्, तच्च क्षौमादिघर्षणेन कार्य्यम्। पलद्वादशक इति मिलित्वा, निर्देशस्य मानप्रधानत्वात्, एवं त्वगेलापत्रकेशरादपि मिलित्वैव पलम्। ये तु

जीवन्त्याद्यं घृतम्—

जीवन्तीं मधुकं द्राक्षां फलानि कुटजस्य च।
शटीं पुष्करमूलञ्च व्याघ्रीं गोक्षुरकं बलाम्॥
नीलोत्पलं तामलकीं त्रायमाणां दुरालभाम्।
पिप्पलीञ्च समं पिष्ट्वा घृतं वैद्यो विपाचयेत्॥
एतद्व्याधिसमूहस्य रोगेशस्य समुत्थितम्।
रूपमेकादशविधं सर्पिरग्र्यं व्यपोहति॥ २१॥

पिप्पलीघृतम्—पिप्पलीगुड़संसिद्धं छागक्षीरयुतं घृतम्।
एतदग्निप्रवृद्ध्यर्थं सर्पिश्च क्षयकासिनाम्॥ २२॥

पाराशरघृतम्—यष्टीबलागुडूच्यल्पपञ्चमूलीतुलां पचेत्।
शूर्पेऽपामष्टभागस्थे तत्र पात्रं पचेद्घृतम्॥
धात्रीविदारीक्षुरसे त्रिपात्रे पयसोऽर्मणे।

---

. समासकरणसामर्थ्यात् मिलितग्रहणमाह. तन्मते अगस्त्यहरीतक्यादौ दशमूलस्यापि मिलित्वा द्विपलता स्यात्, दशमूलीति समासनिर्देशादिति ज्ञेयम्। अत्र समयोरपि मधुसर्पिषोर्द्रव्यान्तरसंयोगादेव न विरुद्धत्वं ज्ञेयम्, किंवा आमलकभजनेन घृतस्योपक्षीणत्वात् समत्वमेव नास्तीति। यद्यपि मत्स्यण्डिकापेक्षया शर्करा विमला तथाप्युपात्तत्वादिह सैव प्रशस्ता, तदभावे शर्कराखण्डो वा गृह्यते, चक्रेण तु शर्करैवोक्ता। च्यवनस्य मुनेः प्राश इति घञ्। योपहन्यान्न भोजनमिति या प्रथमाह्न भोजनोपयुक्ता जरणेन द्वितीयाह्नकाले भोजनोपरोधं न करोतीत्यर्थः, यदुक्तं "दधाद्धि,नैकमाहारं या सा मात्रा जरां प्रति" इति। कुटीप्रवेशादिति वातातपपरिहारेणेत्यर्थः॥ २०॥

जीवन्तीमित्यादि।—चरकस्य। अत्र जलमेव चतुर्गुणम्। केचित्तु अगस्त्यदंष्ट्राघृतानन्तरमयं योग उक्तः अतः प्रत्यासत्त्या पूर्वयोगोक्तं क्षीरमेवात्रापि द्रष्टुमिच्छन्ति, किन्तु वाग्भटादपि न दुग्धमतो जलमेव युक्तम्॥ २१॥

पिप्पलीत्यादि।—पिप्पलीगुडौ कल्कौ, छागक्षीरं चतुर्गुणम्॥ २२॥

यष्टीत्यादि।—वाग्भटस्य। यष्ट्यादीनां मिलित्वा तुला। शूर्पं इति द्रोणद्वयं,

सुपिष्टैर्जीवनीयैश्च पाराशरमिदं घृतम् ॥
ससैन्यं राजयक्ष्माणमुन्मूलयति शीलितम् ॥ २१ ॥

छागलाद्यं घृतम्—

छागमांसतुलां गृह्य साधयेन्नल्वणेऽम्भसि।
पादशेषेण तेनैव सर्पिःप्रस्थं विपाचयेत् ॥
ऋद्धिवृद्धी च मेदे द्वे जीवकर्षभकौ तथा।
काकोलीक्षीरकाकोलीकल्कैः पृथक् पलोन्मितैः ॥
सम्यक् सिद्धे चावतार्य्य शीते तस्मिन् प्रदापयेत्।
शर्कराया: पलान्यष्टौ मधुनः कुड़वं क्षिपेत् ॥
पलं पलं पिबेत् प्रातर्यक्ष्माणं हन्ति दुर्जयम्।
क्षतक्षयञ्च कासञ्च पार्श्वशूलमरोचकम् ॥
स्वरक्षयमुरोरोगं श्वासं हन्यात् सुदारुणम्।
बल्यं मांसकरं वृष्यमग्निसन्दीपनं परम् ॥ २४ ॥

अपरं छागलाद्यं घृतम्—

तोयद्रोणद्वितये मांसं छागलमांसस्य पलशतं पक्त्वा।
जलमष्टांशं सुक्वथितं तस्मिन् विपचेद्घृतं प्रस्थम् ॥
कल्केन जीवनीयानां कुड़वेन तु मांससर्पिरिदम्।
पित्तानिलं निहन्यात् तज्जानपि रसकयोजितं पीतम् ॥
कासश्वासावुग्रौ यक्ष्माणं पार्श्वहृद्रुजां घोराम्।
अध्वव्यवायशोषं शमयति चैवापरं किञ्चित् ॥ २५ ॥

---

...का दृढबलेन "कुम्भो द्रोणद्वयं शूर्पः" इति, खारपाणिनाप्युक्तं "द्रोणद्वयन्तु शूर्पः ...ात् कुम्भ इत्यभिधीयते"; तस्मात् द्रोणपर्य्यायः शूर्प इति वृन्दलिखितमतं नादर...ीयम्। यद्यपि तुलाद्रव्ये एक एव जलद्रोण उचितस्तथापि निर्द्दिष्टत्वादिह तोयं ...णद्वयमेव देयम्; यथा वक्ष्यमाणद्वितीयच्छागलादिघृते छागमांसतुलायां जल...णद्वयमिति। धात्र्यादिरसानां मिलित्वा विपाकम्, पावमाढकम् छागलाद्ये ...ण्णो द्रोणः ॥ २१ ॥ २४ ॥

तोयेत्यादौ।—जीवनीयानां दशानां कुड़वेनेति मिलित्वा तज्जानिति पित्ता-

अजापञ्चकं घृतम्—

छागशकृद्रसमूत्रक्षीरैर्दध्ना च साधितं सर्पिः।
सक्षारं यक्ष्महरं कासश्वासोपशान्तये परमम् ॥ २६ ॥

बलागर्भं घृतम्—

द्विपञ्चमूलस्य पचेत् कषाये प्रस्थद्वये मांसरसस्य चैके।
कल्कं बलायाः सुनियोज्य गर्भं सिद्धं पयःप्रस्थयुतं घृतञ्च।
सर्वाभिघातोत्थितयक्ष्मशूलक्षतक्षयोत्कासहरं प्रदिष्टम् ॥२७॥

नागबलाघृतम्—

पादशेषे जलद्रोणे पचेन्नागबलातुलाम्।
तेन क्वाथेन तुल्यांशं घृतं क्षीरञ्च साधयेत् ॥
पलार्द्धिकैश्चातिबला बलायष्टिपुनर्नवा।
प्रपौण्डरीककाश्मर्य्यपियालकपिकच्छुभिः ॥
अश्वगन्धामिताभीरुमेदायुग्मत्रिकण्टकैः।
मृणालबिसशालूकशृङ्गाटककशेरुकैः ॥
एतन्नागबलासर्पिरक्तपित्तक्षतक्षयम्।
हन्ति दाहं भ्रमं तृष्णां बलपुष्टिकरं परम् ॥
बल्यमोजस्यमायुष्यं वलीपलितनाशनम्।
उपयुञ्जीत षण्मासान् वृद्धोऽपि तरुणायते ॥ २८ ॥

---

भिषजान् कृपणान्। रसकर्षीजितमिति मांसरसाविचारितमित्यर्थः ॥ २५ ॥

अजापञ्चकघृते सर्पिःप्यजाया एव, एवं दधि च। यवक्षारस्याप्यत्र प्रक्षेपत्त माङ्. ॥ २६ ॥

द्विपञ्चमूलस्येति दशमूलस्य मिलित्वा द्वात्रिंशत्पलानि, जलस्य च द्वात्रिंशच्छरावास्तत प्रस्थद्वयं शेषः। मांसरसस्य चैक इति छागमांसरसस्य एकस्मिन् प्रस्थ इत्यर्थः। गर्भमित्यन्तः ॥ २७ ॥

पादशेषमित्यादि।—वाग्भटस्य। पादशेषमित्येव पाठः। पादशेष यथा भवति तथा पचेदिति। अन्ये तु पादशेष इति पठित्वा पादशेषं कर्त्तव्य इति व्या

निर्गुण्डीघृतम्—समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ।
सिद्धं पीत्वा क्षतक्षीणो निर्व्याधिर्भाति देववत् ॥ २९ ॥

बलाद्यं घृतम्—

बलां श्वदंष्ट्रां बृहतीं कलसीं धावनीं स्थिराम् ।
निम्बं पर्पटकं मुस्तं त्रायमाणां दुरालभाम् ॥
कृत्वा कषायं पेष्यार्थं दद्यात् तामलकीं शटीम् ।
द्राक्षापुष्करमूलञ्च मेदामामलकानि च ॥
घृतं पयश्च तत्सिद्धं सर्पिर्ज्वरहरं परम् ।
क्षयकासप्रशमनं शिरःपार्श्वरुजापहम् ॥
चरकोदितवासाद्यघृतानन्तरमुक्तितः ।
वदन्तीह घृतात् क्वाथं पयश्च द्विगुणं पृथक् ॥ ३० ॥

चन्दनाद्यं तैलम्—

चन्दनाम्बु नखं वाप्यं यष्टीशैलेयपद्मकम् ।
मञ्जिष्ठा सरलं दारु शट्येला पूतिकेशरम् ॥
पत्रं तैलं मुरामांसी कक्कोलं वनिताम्बुदम् ।
हरिद्रे शारिवे तिक्ता लवङ्गागुरुकुङ्कुमम् ॥
त्वग्रेणु नलिका चैभिस्तैलं मस्तुचतुर्गुणम् ।

---

यते । नागबला गोरक्षतण्डुला, अतिबला गोरक्षतण्डुलैव । मृणालेत्यादि स्वल्प-मध्यङ्कदात् । मृणालमुशीरं विसं पद्ममूलमित्यर्थः ॥ २८ ॥

निर्गुण्डीघृतमकल्कम् ॥ २९ ॥

बलामित्यादि ।—चरकस्य । ज्वरचिकित्सितेऽयं योगः । कलसी पृश्निपर्णी ; धावनी कण्टकारिका, स्थिरा शालपर्णी । चरकोदितेत्यादि चरके हि वासाघृतानन्तरमयं योग उक्तः, तत्र च क्वाथः पयश्च प्रत्येकं घृताद्द्विगुणम् ; तत्साहचर्यादि-हापि तथैवेति । घृतसमं क्षीरम्, क्वाथस्त्रिगुण इत्यन्ये ॥ ३० ॥

चन्दनादितैले अम्बु बालकम् ; वाप्यं कुष्ठम् ; पूतिः खट्टाशी ; तैलं त्रिवा-

लाक्षारससमं सिद्धं ग्रहघ्नं बलवर्णकृत् ॥
अपस्मारज्वरोन्मादकृत्यालक्ष्मीविनाशनम् ।
आयुःपुष्टिकरञ्चैव वशीकरणमुत्तमम् ॥ ३१ ॥
छागं मांसं पयश्छागं छागं सर्पिः सशर्करम् ।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥ ३२ ॥
उरो मत्वा क्षतं लाक्षां पयसा मधुसंयुताम् ।
सद्य एव पिबेज्जीर्णे पयसाद्यात् सशर्करम् ॥ ३३ ॥
इक्ष्वालिकाबिसग्रन्थि-पद्मकेशरचन्दनैः ।
शृतं पयो मधुयुतं सन्धानार्थं पिबेत् क्षयी ॥ ३४ ॥
बलाश्वगन्धा श्रीपर्णीबहुपुत्रीपुनर्नवाः ।
पयसा नित्यमभ्यस्ताः क्षपयन्ति क्षतक्षयम् ॥ ३५ ॥

बलाद्यघृतम्—

घृतं बलानागबलार्जुनाम्बु सिद्धं सयष्टीमधुकल्कपादम् ।
हृद्रोगशूलक्षतरक्तपित्तकासानिलासृक् शमयत्युदीर्णम् ॥३६॥

इति यक्ष्मचिकित्सा ।

---

रसः ; वनिता प्रियङ्गुः , तिक्ता लताकस्तूरी , रेणु रेणुकम् ; नलिका नालुका लाक्षारसो लाक्षाक्काथः , लाक्षायाः षोडशपलम्, पाकार्थजलं षोडशशरावम्, शेषं प्रस्थकम् ॥ ३१ ॥

छागमित्यादि स्पष्टम् ॥ ३२ ॥

उर इत्यादिना उरःक्षतचिकित्सामाह ।—उरःक्षतं मत्वा लाक्षां पयसा मधुसंयुतां पिबेदित्यर्थः । जीर्णे पयसा सशर्करमन्नं भुञ्जीतेत्यन्वयः ॥ ३३ ॥

इक्ष्वालिकेत्यादि ।—इक्ष्वालिका वनखागरीति ख्याता ; बिसग्रन्थिः मृणालग्रन्थिः ; पद्मकेशरं पद्मकिञ्जल्कम् । सन्धानार्थमिति क्षतोरःसन्धानार्थम् ॥ ३४ ॥

बलेत्यादौ ।—श्रीपर्णी गाम्भार्याः फलम् , बहुपुत्री शतावरी । बलादयो व्यस्ताः समस्ता वा बोध्याः ॥ ३५ ॥

घृतमित्यादि स्पष्टम् ॥ ३६ ॥

इति यक्ष्मचिकित्साविवृतिः ॥

# अथ कासचिकित्सा।

## वातकासचिकित्सा।

वास्तूको वायसीशाकं मूलकं सुनिषण्णकम्।
स्नेहास्तैलादयो भक्ष्याः क्षीरेक्षुरसगौड़िकाः॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च।
शस्यते वातकासेषु स्वाद्वम्ललवणानि च॥
ग्राम्यानूपौदकैः शालियवगोधूमयष्टिकान्।
रसैर्माषात्मगुप्तानां यूषैर्वा भोजयेद्धितान्॥ १॥
पञ्चमूलीकृतः क्वाथः पिप्पलीचूर्णसंयुतः।
रसान्नमश्नतो नित्यं वातकासमुदस्यति॥ २॥

अपराजितलेहः—

शटीशृङ्गीकणाभार्गीगुड़वारिदयासकैः।
सतैलैर्वातकासघ्नो लेहोऽयमपराजितः॥ ३॥
चूर्णिता विश्वदुष्पर्शाशृङ्गीद्राक्षाशटीसिताः।
लीढ़ा तैलेन वातोत्थं कासं जयति दारुणम्॥ ४॥
भार्गीद्राक्षाशटीशृङ्गीपिप्पलीविश्वभेषजैः।
गुड़तैलयुतो लेह्यो हितो मारुतकासिनाम्॥ ५॥

## पित्तकासचिकित्सा।

पित्तकासे तनुकफे त्रिवृतां मधुरैर्युताम्।

---

यक्ष्मरूपेषु कासपाठात् कासापेक्षया च यक्ष्मासम्भवात् यक्ष्मानन्तरं कासचिकित्सामाह वास्तूक इत्यादि।—वायसी काकमाची। पञ्चमूलीत्यादि। पञ्चमूली महती, उष्णवीर्य्यतया विशेषेण वातप्रशमनीकत्वात्। अन्ये तु स्वल्पामाहुः। रसान्नं मांसरसोपहितमन्नम्॥ १। २॥

शटीत्यादि।—योगत्रयेऽपि कटुतैलेन लेह इति वृन्दटिप्पनी, किन्तु टीकाकृद्भिर्न व्याख्यातोऽयमर्थः॥ ३—५॥

दद्यात्तनकफे तिक्तैर्विरेकार्थं युतां भिषक् ॥ ६ ॥
मधुरैर्जाङ्गलरसैः श्यामाकयवकोद्रवाः ।
मुद्गादियूषैः शाकैश्च तिक्तकैर्मात्रया हिताः ॥ ७ ॥
बलाद्विबृहतीवासाद्राक्षाभिः क्वथितं जलम् ।
पित्तकासापहं पेयं शर्करामधुयोजितम् ॥ ८ ॥
शरादिपञ्चमूलस्य पिप्पलीद्राक्षयोस्तथा ।
कषायेण शृतं क्षीरं पिबेत् समधुशर्करम् ॥ ९ ॥
काकोलीबृहतीमेदायुग्मैः सवृषनागरैः ।
पित्तकासे रसक्षीरयूषांश्चाप्युपकल्पयेत् ॥ १० ॥
द्राक्षामलकखर्जूरं पिप्पलीमरिचान्वितम् ।
पित्तकासापहं ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥ ११ ॥

---

पित्तकास इत्यादि ।—चरकस्य तनुकफ इत्यघनकफे । कफस्य तनुत्वं घनत्वञ्च 'कासरोगनि साध्यमानकफस्य दर्शनादेव ज्ञेयम् ॥ ६ ॥

मधुरैरिति ।—मधुरद्रव्यैर्युक्ता हिततामिति सम्बन्धः । अन्ये तु मधुरैर्जीवनीय दशकैरित्याहुः । मधुरैर्जाङ्गलरसैरित्यत्र मधुरैः स्वादुभिः किंवा जीवनीय संस्कृतैः ॥ ७ ॥

बलेत्यादि स्पष्टम् ॥ ८ ॥

शरादीत्यादि ।—चरकस्य । शरादिपञ्चमूलन्तु शरेक्षुदर्भकाशशालयस्तेषां शृत ज्ञेयम् । अत्र ऋ॒ङ्गपरिभाषया अर्द्धशृतकषायेण चतुर्गुणेन दुग्धं साध्यम् । काकोलीत्यादि ।—अत्र युग्मैरिति काकोल्यादिभिः सम्बध्यते इति चक्रः । अन्ये तु बृहतीमेदाभ्यां युज्यत इति, युक्तञ्चैतत्, यदाह जतूकर्णः वृषकाकोलीयुक्तीमेदा- बृहतीयुग्मैरिति ॥ ९ । १० ॥

द्राक्षेत्यादि ।—इद कफानुबन्धे ज्ञेयम्, पित्तोद्रेके तु मरिचस्थाने शर्करा ज्ञेया, यदाह चारपाणि "पिप्पल्यामलकी द्राक्षा खर्जूरं शर्करा मधु । लिह्योऽयं बृहतो लेहः पित्तक्षयजकासजित्" इति ॥ ११ ॥

खर्जूरपिप्पलीद्राक्षासितालाजाः समांशिकाः ।
मधुसर्पिर्युतो लेहः पित्तकासहरः परः ॥ १२ ॥
शटीक्षीरविबृहतीशर्कराविश्वभेषजम् ।
पिष्ट्वा रसं पिबेत् पूतं सघृतं पित्तकासनुत् ॥ १३ ॥
मधुना पद्मबीजानां चूर्णं पैत्तिककासनुत् ॥ १४ ॥

कफकासचिकित्सा ।

बलिनं वमनेनादौ शोधितं कफकासिनम् ।
यवान्नैः कटूरूक्षोष्णैः कफघ्नैश्चाप्युपाचरेत् ॥ १५ ॥
पिप्पलीक्षारकैर्यूषैः कौलत्थैर्मूलकस्य च ।
लघून्यन्नानि भुञ्जीत रसैर्वा कटुकान्वितैः ॥ १६ ॥
पञ्चकोलैः शृतं क्षीरं कफघ्नं लघु शस्यते ।
श्वासकासज्वरहरं बलवर्णाग्निवर्द्धनम् ॥ १७ ॥
पौष्करं कट्फलं भार्गीविश्वपिप्पलिसाधितम् ।
पिबेत् क्वाथं कफोद्रेके कासे श्वासे च हृद्ग्रहे ॥
स्वरसं शृङ्गवेरस्य माक्षिकेण समन्वितम् ।
पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥ १८ ॥

---

खर्जूरेत्यादि स्पष्टम् ॥ १२ ॥

शटीत्यादि ।—वाग्भटस्य । तत्र शट्यादिकं जले पिष्ट्वा तद्रसं वस्त्रपूतं कृत्वा तद्घृतमिश्रं पिबेत् । बृहती चात्र कण्टकारी कासहन्तृत्वात् । उक्तं हि चरके “शर्करानागरोदीच्य कण्टकारीशटीसमम् । पिष्ट्वा रसं पिबेत् पूतं वस्त्रेण घृतमूर्च्छितम्” इति ॥ १३ । १४ ॥

बलिनमित्यादिना कफचिकित्सामाह । पिप्पलीक्षारकैरिति पिप्पलीयवक्षारकृतैरित्यर्थः ॥ १५—१७ ॥

पौष्करमित्यादि ।—कफावह्रपर्य्यन्तं स्पष्टम् ॥ १८ ॥

नवाङ्गयूषः—

मुद्गामलाभ्यां यवदाड़िमाभ्यां कर्कन्धुना मूलकशुण्ठकेन ।
शुण्ठीकणाभ्याञ्च कुलत्थकेन यूषो नवाङ्गः कफरोगहन्ता ॥१८॥
पार्श्वशूले ज्वरे कासे श्वासे श्लेष्मसमुद्भवे ।
पिप्पलीचूर्णसंयुक्तं दशमूलीजलं पिबेत् ॥ २० ॥
कट्फलादिः—कट्फलं कत्तृणं भार्गी मुस्तं धान्यं वचाभया।
शृङ्गी पर्पटकं शुण्ठी सुराह्वा च जले शृतम् ॥
मधुहिङ्गुयुतं पेयं कासे वातकफात्मके ।
कण्ठरोगे क्षये शूले श्वासहिक्काज्वरेषु च ॥ २१ ॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्वकासहा ॥ २२ ॥
विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ॥ २३ ॥
वासकस्वरसः पेयो मधुयुक्तो हिताशिना ।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥ २४ ॥
मधुकं पिप्पली द्राक्षा लाक्षा शृङ्गी शतावरी ।
द्विगुणा च तुगाक्षीरी सिता सर्वैश्चतुर्गुणा ॥

---

नवाङ्गयूषे, यवामलकदाडिमकर्कन्धुमूलकशुण्ठकैः षडङ्गपरिभाषया अर्द्धशृतं कृत्वा मुद्गकुलत्थौ युक्त्या प्रचुरौ दत्त्वा यूषं साध्यं, पश्चात् कटुत्वार्थं शुण्ठीपिप्पलीचूर्णदानम्, किंवा सकलमेव द्रव्यं यथोचितमात्रया गृहीत्वा क्वाथविधानेन पञ्चमुष्टिकवत् यूषः कार्य्य इत्याहुः ॥ १९ ॥

पार्श्वशूल इत्यादि स्पष्टम् ॥ २० ॥

कट्फलमित्यादौ कत्तृणं गन्धतृणम् ॥ २१ ॥

कण्टकारीत्यादि स्पष्टम् ॥ २२ ॥

विभीतकमित्यादि स्पष्टम् ॥ २३ ॥

वासकेत्यादि च स्पष्टम् ॥ २४ ॥

तं लिह्यान्मधुसर्पिर्भ्यां क्षतकासनिवृत्तये ॥ २५ ॥

पिप्पली पद्मकं द्राक्षा सम्पक्वं बृहतीफलम् ।
घृतक्षौद्रयुतो लेहः श्वासकासनिवर्हणः ॥ २६ ॥

हरीतकीनागरमुस्तचूर्णं गुड़ेन तुल्यं गुड़िका विधेया ।
निवारयत्यास्यविधारितोऽयं श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥२७॥

मरिचाद्यं चूर्णम्—

कर्षः कर्षार्द्धमथो पलं पलद्वयमथार्द्धकर्षश्च ।
मरिचस्य पिप्पलीनां दाड़िमगुड़यावशूकानाम् ॥
सर्वौषधैरसाध्या ये कासाः सर्ववैद्यविवर्जिताः ।
अपि पूयं छर्दयतां तेषामिदमौषधं पथ्यम् ॥ २८ ॥

समशर्करं चूर्णम्—

लवङ्गजातीफलपिप्पलीनां भागान् प्रकल्प्याक्षयुतानमीषाम् ।
पलार्द्धमेकं मरिचस्य दद्यात् पलानि चत्वारि महौषधस्य ॥
सितासमं चूर्णमिदं प्रसह्य रोगानिमानाशु बलान् निहन्यात् ।
कासज्वरारोचकमेहगुल्मश्वासाग्निमान्द्यग्रहणीप्रदोषान् ॥२९॥

हरीतकीकणाशुण्ठीमरिचं गुड़संयुतम् ।
कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ ३० ॥

---

मधुकमित्यादौ ।—तुगाक्षीरी वंशलोचना एकभागापेक्षया द्विगुणा, सर्वचूर्णापेक्षया चतुर्गुणा सिता ॥ २५ ॥

पिप्पलीत्यादि स्पष्टम् ॥ २६ ॥

हरीतकीत्यादौ—समुदितचूर्णेन तुल्यो गुड ॥ २७ ॥

कर्ष इत्यादि ।—मरिचकर्ष १, पिप्पली तोलक १, अम्लदाडिमवीज पल १, गुड पल २, यवक्षार तोलक १ । वाग्भटेऽप्युक्तं "गुडक्षारोषणकणा दाडिमं श्वासकासजित् । क्रमात् पलद्वयार्द्धाक्ष-कर्षकार्द्धपलोन्मितम्" इति ॥ २८ ॥

लवङ्गेत्यादि ।—पलार्द्धमेकमित्यत्र एकपद श्लोकपूरणार्थमेवोक्तम् । बलानिति

व्योषान्तिका गुड़िका—

तालीशवह्निदीप्यकचविकाम्लवेतसव्योषैः।
तुल्यैस्त्रिसुगन्धियुतैर्गुड़ेन गुड़िका प्रकर्त्तव्या॥
कासश्वासारोचकपीनसहृत्कण्ठवाङ्निरोधेषु।
ग्रहणीगदोद्भवेषु गुड़िका व्योषान्तिकानाम्॥ ३१॥
मनःशिलालमधुकमांसीमुस्तेङ्गुदैः पिबेत्।
धूमं तस्य च तस्यानु सगुड़ञ्च पयः पिबेत्॥
एष कासान् पृथग्द्वन्द्वसर्वदोषसमुद्भवान्।
शतैरपि प्रयोगाणां साधयेदप्रसाधितान्॥ ३२॥
मनःशिलालिप्तदलं वदर्य्यातपशोषितम्।
सक्षीरं धूमपानञ्च सर्वकासनिवारणम्॥ ३३॥

---

शर्शादित्वादच्, बलवती रोगानित्यर्थः। तेन प्रसह्य इत्यनेन न पौनरुक्त्यम्॥ २९॥

हरीतकीत्यादि।—मोदकत्वात् गुडो द्विगुणः॥ ३०॥

तालीशेत्यादौ।—वह्निश्चित्रकः; दीप्यकं यमानी; त्रिसुगन्धियुतैरिति सर्वचूर्णापेक्षया चतुर्थांशेन मिलितं त्रिसुगन्धिचूर्णमित्याहुः। व्योषान्तिकेति, अत्रान्तशब्द उपान्तमाह व्योषस्यान्तस्थितत्रिसुगन्धा पूर्वमवस्थितत्वात्। किंवा तालीशादीना विशेषणप्रधानत्वादपेक्षयैवान्तो ‍न ॥ ३१॥

मन शिलालेत्यादि।—आल हरितालम्, इङ्गुदं पुत्रञ्जीवफलमध्यम्, फलत्वगित्यन्ये, युक्तञ्चैतत्, "मनःशिलालमधुक मांसीमुस्तेङ्गुदीत्वच." इति वाग्भटवचनात्। अत्र मनःशिलादीनां पेषणं छागमूत्रेण बोध्यम्, छागलाम्बुपिष्टैरिति सुश्रुतदर्शनात्। अत्र मधुकस्थाने मरिच केचित पठन्ति, तन्न, "शिलालेङ्गुदयष्ट्याह्व-मांसीधूपं पिबेत् त्र्यहम्" इति तन्त्रान्तरदर्शनात्। अत्र मन.शिलादिकं कल्कीकृत्य सूक्ष्मवस्त्रखण्डं लिम्पेत्, तत आतपे शोषयित्वा वर्त्तिं विधाय शरावसम्पुटस्थवदराङ्गारवह्नौ निक्षिप्य यथोक्तनलिकया धूमपानं कार्य्यम्, विश्राम्य किञ्चित् सगुड़क्षीरं पेयम्, धूमस्य तीक्ष्णत्वं नोजःक्षयादिति॥ ३२॥

मनःशिलेत्यादौ।—वदर्य्यातपशोषितमिति वदर्य्याः मनःशिलालिप्तदलम्, आतपे शोषितमिति योजना। वदर्य्यातपेति असन्धिविधेरनित्यत्वात् सन्धिः॥ ३३॥

अर्कच्छल्लशिले तुल्ये ततोऽर्द्धेन कटुत्रिकम्।
चूर्णितं वह्निनिक्षिप्तं पिबेद् धूमन्तु योगवित्॥
भक्षयेदथ ताम्बूलं पिबेद् दुग्धमथाम्बु वा।
कासाः पञ्चविधा यान्ति शान्तिमाशु न संशयः॥ ३४॥
मरिचशिलार्कक्षीरैर्वार्त्ताकीं त्वचमाशुभावितां शुष्काम्।
कृत्वा विधिना धूमं पिबतः कासाः शमं यान्ति॥३५॥
[द]शमूलघृतम्—दशमूलीकषायेण भार्गीकल्कं पचेद् घृतम्।
दक्षतित्तिरिनिर्यूहे तत्परं वातकासनुत्॥ ३६॥

दशमूलाद्यं घृतम्—

दशमूलाढ़के प्रस्थं घृतस्याक्षसमैः पचेत्।
पुष्कराह्वशटीबिल्वसुरसव्योषहिङ्गुभिः॥
पेयानुपानं तत् पेयं कासे वातकफाधिके।
श्वासरोगेषु सर्वेषु कफवातात्मकेषु च॥ ३७॥

दशमूलषट्पलकं घृतम्—

दशमूलीचतुःप्रस्थे रसे प्रस्थोन्मितं हविः।
सक्षारैः पञ्चकोलैस्तु कल्कितं साधु साधितम्॥

---

अर्कच्छल्लेत्यादि।—अर्कच्छल्लं अर्कमूलत्वक्, शिला मनःशिला, ततोऽर्द्धेन [क]टुत्रिकमिति तत उभयोरर्द्धेन मिलित त्रिकटुकम्॥ ३४॥

मरिचेत्यादि स्पष्टम्॥ ३५॥

दशमूलकषायेणेत्यादि।—दक्ष. कुक्कुट., दक्षतित्तिरिभ्यां मिलित्वैव क्वाथः। [द]शमूलक्वाथेन दक्षतित्तिरिक्वाथेन च मिलित्वा चातुर्गुण्यम्॥ ३६॥

दशमूलाढक इत्यादि।—वाग्भटस्य। अत्र दशमूलस्य क्वाथस्याढकमानत्वम्, [त]न "क्वाथ क्वाथ्यसमो मत." इति वचनात् पादावशिष्टक्वाथोऽप्याढकमानो भवति। [बि]ल्व बिल्वमूलम्, सुरसं पर्णासं। पेयानुपानमित्यत्र पयोऽनुपानमिति केचित् [प]ठन्ति, किन्त्वत्र पेयैव वातकफघ्नत्वात् शुभा॥ ३७॥

कासहृत्पार्श्वशूलघ्नं हिक्काश्वासनिवारणम् ।
कल्कं षट्पलमेवात्र ग्राहयन्ति भिषग्वराः ॥ ३८ ॥

कण्टकारीघृतम्—

कण्टकारीगुडूचीभ्यां पृथक् त्रिंशत्पलाद्रसे ।
प्रस्थः सिद्धो घृताद्वातकासनुद्वह्निदीपनः ॥ ३९ ॥

अपरं कण्टकारीघृतम्—

घृतं रास्नाबलाव्योषश्वदंष्ट्राकल्कपाचितम् ।
कण्टकारीरसे सर्पिः पञ्चकासनिसूदनम् ॥ ४० ॥

बृहत्कण्टकारीघृतम्—

समूलपत्रशाखायाः कण्टकार्य्या रसाढके ।
घृतप्रस्थं बलाव्योषविडङ्गशटीचित्रकैः ॥
सौवर्चलयवक्षारबिल्वामलकपुष्करैः ।
वृश्चीरबृहतीपथ्यायमानीदाडिमर्द्धिभिः ॥
द्राक्षापुनर्नवाचव्यधन्वयासाम्लवेतसैः ।
शृङ्गीतामलकीभार्गीरास्नागोक्षुरकैः पचेत् ॥
कल्कैस्तु सर्वकासेषु हिक्काश्वासे च शस्यते ।
कण्टकारीघृतं सिद्धं सफव्याधिविनाशनम् ॥ ४१ ॥

रास्नाद्यं घृतम्—

द्रोणेऽपां साधयेद्रास्नां दशमूलीं शतावरीम् ।

---

दशमूलषट्पलकं घृतं स्पष्टम् ॥ ३८ ॥

कण्टकारीत्यादि ।—कण्टकारीगुडूच्योर्मिलित्वा पल ६०, जल शराव ६० शेष १५ । अन्ये तु जलद्रोणं दत्त्वा शेषं १६ इत्याहुः । कण्टकारीरस इति कण्टकारीस्वरसश्चतुर्गुणः; उक्तञ्च "निदिग्धिकायाः स्वरसं ग्राहयेद्यन्त्रपीडितम् चतुर्गुणे रसे तस्मिन् घृतप्रस्थं विपाचयेत्" इत्यादि ॥ ३९ । ४० ॥

समूलेत्यादि ।—अयं योगश्चरके वाग्भटे च पठ्यते । अत्र श्लेोकभेदात् पुनर्मयाऽयम् ॥ ४१ ॥

पलिकां माणिकांशांस्त्रीन् कुलत्थान् वदरान् यवान् ॥
तुलार्द्धं छागमांसस्य पादशेषेण तेन च।
घृताढ़कं समक्षीरं जीवनीयैः पलोन्मितैः ॥
सिद्धं तद्दशभिः कल्कैर्नस्यपानानुवासनैः।
समीक्ष्य वातरोगेषु यथावस्थं प्रयोजयेत् ॥
पञ्च कासान् क्षयं श्वासं पार्श्वशूलमरोचकम्।
सर्वाङ्गैकाङ्गरोगांश्च सप्लीहोर्द्धानिलं जयेत् ॥
जीवकर्षभकौ मेदे काकोल्यौ शूर्पपर्णिके।
जीवन्ती मधुकश्चैव दशको जीवको गणः ॥ ४२ ॥

अगस्त्यहरीतकी--

दशमूलीं स्वयंगुप्तां शङ्खपुष्पीं शटीं बलाम्।
हस्तिपिप्पल्यपामार्गपिप्पलीमूलचित्रकान् ॥
भार्गीपुष्करमूलञ्च द्विपलांशं यवाढकम्।
हरीतकीशतञ्चैकं जले पञ्चाढके पचेत् ॥
यवैः स्विन्नैः कषायं तं पूतं तच्चाभयाशतम्।
पचेद् गुडतुलां दत्त्वा कुडवञ्च पृथग् घृतात् ॥
तैलात् सपिप्पलीचूर्णात् सिद्धशीते च माक्षिकात्।
लिह्याद् द्वे चाभये नित्यमतः खादेद्रसायनात् ॥

---

द्रोणेऽपामित्यादि।—अयमपि योगश्चरके वाग्भटे च पठ्यते। पलिकामिति रास्नादिविशेषण सम्बध्यते, दशमूलापि प्रत्येक पलांशम्। पलिकानिति पाठे रास्नादिशतावर्य्यन्तानां पलिकान् भागानिति सम्बन्धः। माणिका शराव अष्टौ पलानि। अत्र रास्नादिच्छागमांसान्तक्वाथे द्रोणप्रमाण जलम्, तच्च पादावशेषाढकम्, क्षीरमप्याढकम्, अतो द्विगुण. पाक. ॥ ४२ ॥

दशमूलीमित्यादि।—वाग्भटचरकयोः। अत्र शूकशिम्ब्या बीजम्, तदभावे मूलमपि ग्राह्यमाहुः। यवाढकमिति यवहरीतक्यौ पटे बद्धा दातव्यौ। पञ्चभि

तद्वल्लीपलितं हन्याद्वर्णायुर्बलवर्द्धनम् ॥
पञ्च कासान् क्षयं श्वासं हिक्कां सविषमज्वरान् ।
हन्यात् तथा ग्रहण्यर्शोहृद्रोगारुचिपीनसान् ॥
अगस्त्यविहितं धन्यमिदं श्रेष्ठं रसायनम् ॥ ४३ ॥

व्याघ्रीहरीतकी—

समूलपुष्पच्छदकण्टकार्य्यास्तुलां जलद्रोणपरिस्रुतायाः ।
हरीतकीनाञ्च शतं निदध्यादथात्र पक्वा चरणावशेषम् ॥
गुड़स्य दत्त्वा शतमेतदग्नौ विपक्वमुत्तीर्य ततः सुशीते ।
कटुत्रिकञ्च द्विपलप्रमाणं पलानि षट् पुष्परसस्य तत्र ॥
क्षिपेच्चतुर्जातपलं यथाग्नि प्रयुज्यमानो विधिनावलेहः ।
वातात्मकं पित्तकफात्मकञ्च द्विदोषकासानपि यांस्त्रिदोषान् ॥
क्षयोद्भवञ्च क्षतजञ्च हन्यात् सपीनसश्वासमुरःक्षतञ्च ।
यक्ष्माणमेकादशरूपमुग्रं भृगूपदिष्टं हि रसायनं स्यात् ॥४४॥

इति कासचिकित्सा ।

---

राढकैरिति द्वैगुण्यादशीतिशरावा भवन्ति । दशमूल्यादिहरीतक्यन्ताः काथ्या एकत्रैव पक्तव्याः । यवैः स्विन्नैरित्युपलक्षणे तृतीया, तेन स्विन्नैर्यवैरुपलक्षितः कषायो यदा भवति तदा तं कषायं पूतं कृत्वा, तत्र हरीतकीशतं गुडतुलाञ्च दत्त्वा पुनः पचेदिति योज्यम् । यवानाञ्च स्विन्नता चतुर्भागावशिष्टकषाय एव भवतीति कृत्वा चतुर्भागावशिष्टमेव कषायं कुर्वन्ति । अन्ये त्वष्टभागावशिष्टं कषायमिच्छन्ति; तन्न, सुश्रुतसंवादात् । स्विन्नहरीतकीशतस्य वंशशलाकया कृतच्छिद्रस्य भर्जनार्थं घृत-तैलयोः कुडवे पृथक्, द्वैगुण्याच्च पृथगष्टपलमाने । भर्जनन्तु अवयवदार्ढ्यार्थम् । तन्त्रान्तरे चात्र मधुनश्च पलाष्टकमेवोक्तम्, तुल्यमानत्वेऽपि घृतमधुनोर्द्रव्यान्तरयोगान्न विरुद्धत्वम् । अवतारणसमये पिप्पलीचूर्णकुडवं प्रक्षेप्यम् । लिह्यादिति प्रकृत-लेहं लिह्यात् द्वे चाभये खादेदिति योज्यम् । अत्र यद्यपि लेहस्य मानं नोक्तं तथापि सुश्रुतसंवादात् कर्षमानं बोध्यम् । धन्यमिति प्रभावात् किंवा धनार्जनहेतुः नैरुज्यसाधकत्वात् ॥ ४३ ॥

## अथ हिक्काश्वासचिकित्सा ।

हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते ।
स्निग्धैर्लवणयोगैश्च मृदु वातानुलोमनम् ॥
ऊर्द्ध्वाधःशोधनं शक्ते दुर्बले शमनं मतम् ॥ १ ॥
कोलमज्जाञ्जनं लाजास्तिक्ता काञ्चनगैरिकम् ।
कृष्णा धात्री सिता शुण्ठी काशीशं दधिनाम च ॥
पाटल्याः सफलं पुष्पं कृष्णा खर्जूरमस्तकम् ।
षड़ेते पादिका लेह्या हिक्काघ्ना मधुसंयुताः ॥ २ ॥
मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता ।
नागरं गुड़संयुक्तं हिक्काघ्नं नावनत्रयम् ॥ ३ ॥
स्तन्येन मक्षिकाविष्ठा नस्यं वालक्तकाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥ ४ ॥
मधुसौवर्चलोपेतं मातुलुङ्गरसं पिबेत् ॥ ५ ॥

---

व्याघ्रीहरीतक्या कटुत्रिक प्रत्येक पलद्वयम । चातुर्जातमिति मिलित्वा लम् ॥ ५४ ॥

इति कासचिकित्साविवृति. ।

---

तुल्यनिदानत्वात कासानन्तर हिक्काश्वासचिकित्सामाह हिक्काश्वासातुर श्यादि ।—तैलाक्त इति लवणसयोगै सह तैलाक्त इति योज्यम् , तेन सैन्धवसयु ेन तैलनाभ्यक्त इत्यर्थ. । स्निग्धैरिति स्निग्धैर्द्रव्यैः स्वेद इति योज्य' वाग्भट-वादात् । मृदु वातानुलोमनमिति ऊर्द्ध्वाध.शोधनस्य विशेषण वाग्भटसवादात् , तथा लवणयोगैरुपलक्षित शोधनमिति योज्यम् ॥ १ ॥

शमनमाह कोलेत्यादि ।—कोलमज्जा वदरास्थिमज्जा , अञ्जनमत्र सौवीराञ्ज-म् , तिक्ता कटुकी ; काञ्चनगैरिकमिति उत्तमलोहितगैरिकम् ; काशीश धातु-काशीशम्, कास्यमाक्षिकमित्यन्ये , दधिनाम कपित्थफलम् ॥ २ ॥

हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ॥ ६ ॥
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ॥ ७ ॥
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवर्हणम् ॥ ८ ॥
हिक्काश्वासोद्भवे भार्गीं सविश्वामुष्णवारिणा ।
नागरं वा सिताभार्गी-सौवर्चलसमन्वितम् ॥ ९ ॥

शृङ्गीकटुत्रिकफलत्रयकण्टकारी
भार्गी सपुष्करजटा लवणानि पञ्च ।
चूर्णं पिबेद्धि शिशिरेण जलेन हिक्का-
श्वासोर्द्ध्ववातकसनारुचिपीनसेषु ॥ १० ॥

अभयानागरकल्कं पौष्करयवशूकमरिचकल्कं वा ।
तोयेनोष्णेन पिबेत् श्वासी हिक्की च तच्छान्त्यै ॥ ११ ॥

पर्णासपञ्चकम्—

अमृतानागरफञ्जी-व्याघ्रीपर्णासससाधितः क्वाथः ।
पीतः सकणाचूर्णं कासश्वासौ निहन्त्याशु ॥ १२ ॥
दशमूलीकषायस्तु पुष्करेणावचूर्णितः ।
कासश्वासप्रशमनः पार्श्वहृच्छूलनाशनः ॥ १३ ॥
कुलत्थनागरव्याघ्री-वासाभिः क्वथितं जलम् ।
पीतं पुष्करसंयुक्तं हिक्काश्वासनिवर्हणम् ॥ १४ ॥
गुडं कटुकतैलेन मिश्रयित्वा समं लिहेत् ।
त्रिसप्ताहप्रयोगेण श्वासं निर्मूलतो जयेत् ॥ १५ ॥

---

मधुकमित्यादि सौवर्चलान्तं स्पष्टम् ॥ ३—९ ॥
शृङ्गीत्यादौ ।—पुष्करजटा पुष्करमूलम् ॥ १० ॥
अभयेत्यादि योगद्वयं स्पष्टम् ॥ ११ ॥
अमृतेत्यादौ ।—फञ्जी ब्रह्मयष्टिः ॥ १२ ॥
दशमूलीकषाय इत्यादि जयेदित्यन्तं स्पष्टम् ॥ १३—१५ ॥

शृङ्गीमहौषधकणाघनपुष्कराणाम्
चूर्णं शटीमरिचशर्करया समेतम्।
क्वाथेन पीतममृतावृषपञ्चमूल्याः
श्वासं नरस्य शमयेदतिदोषमुग्रम्॥ १६॥

हरिद्रां मरिचं द्राक्षां गुडं रास्नां कणां शटीम्।
जह्यात् तैलेन विलिहन् श्वासान् प्राणहरानपि॥ १७॥

हिक्कां हरति प्रबलां प्रबलं श्वासं नाशयत्याशु।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम्॥ १८॥

कर्षं कलिफलचूर्णं लीढं स्यात्यन्तमधुना मिश्रितम्।
अचिराद्धरति श्वासं प्रबलामुद्धंसिकाञ्चैव॥ १९॥

हिंस्राद्यं घृतम्—

हिंस्राविडङ्गपूतीकत्रिफलाव्योषचित्रकैः।
हिक्कोरं सर्पिषः प्रस्थं चतुर्गुणजलान्वितम्॥
कोलमात्रैः पचेत् तद्धि श्वासकासौ व्यपोहति।
अर्शांस्यरोचकं गुल्मं शकृद्भेदं क्षयं तथा॥ २०॥

---

शृङ्गीत्यादि।—शृङ्ग्यादीनां चूर्णं क्वाथात् पादिकम्, प्रक्षेपत्वात्। अत्र पञ्चमूली बृहती, वातकफघ्नत्वादित्याहुः॥ १६॥

हरिद्रामित्यादि।—सुश्रुतस्य। स्पष्टमिदम्॥ १७॥

हिक्कामित्यादौ।—शिखी मयूरस्तत्पुच्छस्य भूतिर्भस्म तथा पिप्पलीचूर्णञ्च समं मधुना लेह्यम्॥ १८॥

कर्षमित्यादि।—कलिफलं विभीतकम्॥ १९॥

हिंस्रेत्यादि।—सुश्रुतस्य। हिंस्रा काला चोरकः; पूतिकं लाटाकरञ्जस्य त्वम्। कोलमात्रैरिति यद्यपि कोलशब्देन माषकाष्टकं कर्षार्द्धमुच्यते यदाह शारपालिः "माषकाभ्यान्तु शाणी स्यात् कोलं वटकमुच्यते। ताभ्यां कर्षः पिचुस्तच्च सवं पाणितलं तथा। बिडालपदकं कोलं तिन्दुकञ्च उदुम्बरम्" इति, तथापि कर्ष एवात्र ग्राह्यः। अन्यथा कल्कस्याल्पीयस्त्वं स्यात्। द्रवकल्कापेक्षया च-तुर्गुणम्, तस्मात् साध्वीयं व्याख्येति॥ २०॥

तेजोवत्याद्यं घृतम्—

तेजोवत्यभया कुष्ठं पिप्पली कटुरोहिणी।
भूतिकं पौष्करं मूलं पलाशश्चित्रकं शठी॥
सौवर्चलं तामलकी सैन्धवं बिल्वपेशिका।
तालीशपत्रं जीवन्ती वचा तैरक्षसम्मितैः॥
हिङ्गुपादैर्घृतप्रस्थं पचेत् तोयचतुर्गुणे।
एतद्यथाबलं पीत्वा हिक्काश्वासौ जयेन्नरः॥
शोथानिलार्शोग्रहणीहृत्पार्श्वरुज एव च॥ २१॥

भार्गीगुड़ः—शतं संगृह्य भार्ग्यास्तु दशमूल्यास्तथापरम्।
शतं हरीतकीनाञ्च पचेत् तोयचतुर्गुणे॥
पादावशेषे तस्मिंस्तु रसे वस्त्रपरिस्रुते।
आलोड्य च तुलां पूतां गुड़स्य त्वभयां ततः॥
पुनः पचेत्तु मृद्वग्नौ यावल्लेहत्वमागतम्।
शीते तु मधुनश्चात्र षट् पलानि प्रदापयेत्॥
त्रिकटु त्रिसुगन्धञ्च पलिकानि पृथक् पृथक्।
कर्षद्वयं यवक्षारं सञ्चूर्ण्य प्रक्षिपेत् ततः॥
भक्षयेदभयामेकां लेहस्यार्द्धपलं लिहेत्।
श्वासं सुदारुणं हन्ति कासं पञ्चविधं तथा।
स्वरवर्णप्रदो ह्येष जठराग्नेश्च दीपनः॥

---

तेजोवतीत्यादि।—चरकस्य। तेजोवती चविका; भूतिकं कतृणम्। हि- पादैरित्येकभागमपेक्ष्य, तेन हिङ्गुनश्चत्वारो माषकाः॥ २१॥

भार्गीगुडे दशमूल्यपि मिलित्वा। तोये चतुर्गुणे इति चक्रतन्त्रेऽभुक्तात् द- मूलीशतं भार्गीशतञ्च मिलित्वा जलस्य शरावशतं देयमित्याहुः। हरीतकीश- तस्य च प्रस्थत्वादाढकं जलमिति वक्ष्यति, तेन जलस्य चीफशरावाधिकशरावश- भिप्रायः। इन्दुस्तु हरीतकीशतैकस्य वारिप्रस्थमित्यधिकमित्याह। तद्वाद ज

पलोन्मे छागले मूत्रे न हि गुञ्जामितेऽथवा ।
हरीतकीशतञ्चात्र प्रस्थत्वादाढकं जलम् ॥ २२ ॥
कुलत्थगुडः—कुलत्थं दशमूलञ्च तथैव द्विजयष्टिका ।
शतं शतञ्च संक्षुद्य जलद्रोणे विपाचयेत् ॥
पादावशेषे तस्मिंस्तु गुडस्यार्द्धतुलां क्षिपेत् ।
शीतीभूते च पक्वे च मधुनोऽष्टौ पलानि च ॥
षट् पलानि तुगाक्षीर्य्याः पिप्पल्याश्च पलद्वयम् ।
त्रिसुगन्धिसुगन्धं तत् खादेदग्निबलं प्रति ॥
श्वासं कासं ज्वरं हिक्कां नाशयेत् तमकं तथा ।
प्रतिशतं द्रोणनियमाज्ज्ञेयं द्रोणद्वयन्त्विह ॥ २३ ॥

इति हिक्काश्वासचिकित्सा ।

---

र्थ्याधानार्थमत्र द्रवस्य द्विगुणमिच्छन्ति, तन्मते जलशरावशतद्वयम् । अनेनैव हरी-का अपि पाकः । व्यवहारस्तु प्रायश्चतुर्गुणजलेनाढकद्विगुणेन ॥ २२ ॥

कुलत्थमित्यादौ ।—जलद्रोण इति प्रतिशतमित्यर्थः, एतत्तु चक्रमतम् ; वृन्द-स्तु "योगसन्दर्शनादत्र शतवैयर्थ्यपदेशतः । अत्र चतुर्गुणं द्विगुणत्वाद्द्रोण-रिषः । मानशास्त्रिध्वंसवादाद्द्विपलं त्रिसुगन्धिनः" इति । योगसन्दर्शनादिति मानद्रव्यप्रभावकुलत्थगुडान्तरे चतुर्गुणजलसन्दर्शनादित्यर्थः ; इदन्तु न युज्यते पदस्य साक्षादुपादानात्, तस्य चतुर्गुणत्वकल्पने द्रोणपदस्य वैयर्थ्यं स्यात् । पलीपलद्वयसान्निध्यात् त्रिसुगन्धि च मिलित्वा पलद्वयं तथा तन्त्रान्तरसंवादाच्च, था एतत्त्वातीयकुलत्थगुडान्तरे "मधुनः कुडवं दद्यात् त्रिसुगन्धिपलद्वयम्" ति ॥ २३ ॥

इति हिक्काश्वासचिकित्साविवृतिः ।

## अथ स्वरभेदचिकित्सा।

वाते सलवणं तैलं पित्ते सर्पिः समाक्षिकम्।
कफे सक्षारकटुकं क्षौद्रं कवड इष्यते॥
गले तालुनि जिह्वायां दन्तमूलेषु चाश्रितः।
तेन निष्कृष्यते श्लेष्मा स्वरश्चास्य प्रसीदति॥ १॥
आद्ये कोष्णं जलं पेयं जग्ध्वा घृतगुडौदनम्।
क्षीराश्नपानं पित्तोत्थे पिबेत् सर्पिरतन्द्रितः॥
पिप्पलीं पिप्पलीमूलं मरिचं विश्वभेषजम्।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसंक्षये॥ २॥
स्वरोपघाते मेदोजे कफवद्विधिरिष्यते॥ ३॥
क्षयजे सर्वजे चापि प्रत्याख्याय समाचरेत्॥ ४॥
चव्याम्लवेतसकटुत्रिकतिन्तिडीक-
तालीशजीवकतुगादहनैः समांशैः।

---

प्राणोदानदुष्टिसाधर्म्यात् हिक्काश्वासानन्तरं स्वरभेदचिकित्सामाह वाते इत्यादि।—तैलमत्र कदुष्णं कृत्वा कवलः कार्य्य इत्याहुः। क्षारो यवक्षारः॥ १॥

आद्य इति वातस्वरभेदे पिबेत्। सर्पिरिति यद्यपि सामान्येनैवोक्तं तथापि सुश्रुते श्वासोक्तं वासाघृतं पित्तकासोक्तं वा विदारीगन्धोत्पलशारिबेत्यादिनोक्तं ग्राह्यमित्याहुः। पिप्पलीमित्यादि।—पिप्पल्यादिचूर्णं गोमूत्रेण पेयम्। स्वरसंक्षय इति स्वरभेदे॥ २॥

स्वरोपघात इत्यादि।—सुश्रुतस्य। कफवदिति कफजस्वरभेदवत्। क्षयजे सर्वजे चापीत्यपिशब्दबलात् मेदोजरक्तजयोः परिग्रहः। तन्त्रान्तरे हि अनयोरप्यसाध्यत्वमुक्तम्, यथा "क्षीणस्य वृद्धस्य कृशस्य चापि चिरोत्थितो यश्च सहोपजातः। मेदस्विनः सर्वसमुद्भवश्च स्वरामयो यो न स सिद्धिमेति॥" क्रिया चात्र क्षयजे क्षयकासोक्ता, सर्वजे तु प्रत्येकदोषोक्तैव मिलिता कार्य्या॥ ३। ४॥

चव्याम्लवेतसेत्यादौ।—तिन्तिडीकं वृक्षाम्लकम्; तुगा, वंशलोचना; दहन

चूर्णं गुड़प्रमर्द्दितं त्रिसुगन्धियुक्तम्
वैस्वर्य्यपीनसकफारुचिषु प्रशस्तम् ॥ ५ ॥

तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे ।
पथ्यां वा पिप्पलीयुक्तां संयुक्तां नागरेण वा ॥
अजमोदां निशां धात्रीं क्षारं वह्निं विचूर्ण्य च ।
मधुसर्पिर्युतं लीढ्वा स्वरभेदं व्यपोहति ॥ ६ ॥
कलितरुफलसिन्धुकणाचूर्णं तक्रेण लीढ़मपहरति ।
स्वरभेदं गोपयसा पीतं वामलकचूर्णञ्च ॥ ७ ॥
बदरीपत्रकल्कं वा घृतभृष्टं ससैन्धवम् ।
स्वरोपघाते कासे च लेहमेनं प्रयोजयेत् ॥ ८ ॥
शर्करामधुमिश्राणि शृतानि मधुरैः सह ।
पिबेत् पयांसि यस्योच्चैर्वदतोऽभिहतः स्वरः ॥ ९ ॥

कण्टकारीघृतम्—

व्याघ्रीस्वरसविपक्वं रास्नावाट्यालगोक्षुरव्योषैः ।
सर्पिः स्वरोपघातं हन्यात् कासञ्च पञ्चविधम् ॥

---

त्रिकटुकः । गुडोऽत्र समुदितचूर्णसमः । त्रिसुगन्धि प्रत्येकमेकभागापेक्षया चतुर्थांशेनेति केचित, एकभागसमं मिलितमित्यन्ये ॥ ५ ॥

तैलाक्तमित्यादि ।—श्लोकद्वयं स्पष्टम् ॥ ६ ॥

कलितरुफलेत्यादि ।—कलितरुफलं विभीतकफलम् । तक्रेणेत्यत्र चुक्रेणेति पाठान्तरम् ॥ ७ ॥

बदरीपत्रकल्कं वेत्यादि ।—बदरीपत्रं ससैन्धवं बहुघृते भृष्ट्वा तेनैव घृतेनालोड्य लिह्यात् ॥ ८ ॥

शर्करेत्यादि ।—सुश्रुतस्य । मधुरैरिति काकोल्यादिगणैः । पयःसाधनमत्र क्षीरपाकपरिभाषया ॥ ९ ॥

व्याघ्रीत्यादि । –यद्यपि इदं घृतं रास्नेत्यादिना कासेऽप्युक्तं तथाप्यत्र स्वरभेदहन्तृत्वप्रतिपादनार्थं पुनरप्युक्तम् । स्वरसस्याभावे क्वाथग्रहणमाह शुष्कद्रव्य-

शुष्कद्रव्यमुपादाय स्वरसानामसम्भवे।
वारिण्यष्टगुणे साध्यं ग्राह्यं पादावशेषितम् ॥ १० ॥

भृङ्गराजाद्यं घृतम्—

भृङ्गराजामृतावल्लीवासकदशमूलकासमर्द्दरसैः।
सर्पिः सपिप्पलीकं सिद्धं स्वरभेदकासजिन्मधुना ॥ ११ ॥

इति स्वरभेदचिकित्सा।

## अथारोचकचिकित्सा।

वस्तिं समीरणे पित्ते विरेकं वमनं कफे।
कुर्याद् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ १ ॥
वान्तो वचाम्बुभिरनिले विधिवत् पिबेत्तु
स्नेहोष्णतोयमदिरान्यतमेन चूर्णम्।

---

मित्यादि।—पादस्तु चतुर्थभागः। अत्र केचित् स्वरसानुकल्पत्वादष्टावशिष्ट एव क्वाथो युक्तो गुरुत्वादिति। पादशब्दस्य मूलवचनत्वेनात्रापि पादशब्दोऽयं मूलीभूतमाद्यभागमाह, तेन यद्भागापेक्षया अष्टगुणत्वं तावानेव भागः स्थापनीय इत्याहुः। अन्ये तु पादावशेषितमित्यत्र भागावशेषितमिति पठित्वा भागशब्दोऽत्राष्टमो भाग इत्याहुः। व्यवहारस्तु चतुर्थभागेनैव ॥ १० ॥

भृङ्गराजेत्यादि।—भृङ्गराजादीनां क्वाथश्चतुर्गुणः, पिप्पल्याः पादिकः कल्कः, सिद्धशीते तु घृतात् पादिकं मधु प्रक्षेप्यम् ॥ ११ ॥

इति स्वरभेदचिकित्साविवृतिः।

---

अरोचकस्यापूर्द्धगविकारत्वेन स्वरभेदानन्तरमरोचकमाह, वस्तिमित्यादि।—मनोघ्नजे इति मनोविदनाहेतुशोकादितः। एतच्चोपलक्षणं तेन क्रोधादिजेऽपि ज्ञेयम्। वान्त इत्यादि।—सुश्रुतस्य। विधिवत वान्तः कृतवमनः : विधिवदित्यनेन लाजपेयादिक्रमञ्च बोधयति तेन वान्तः सन् पेयादिक्रमेण जातबलः सन् चूर्णं

कृष्णाविडङ्गयवभस्महरेणुभार्गी-
रास्नैलहिङ्गुलवणोत्तमनागराणाम् ॥ १ ॥
पेये गुडाम्बु मधुरैर्वमनं प्रशस्तम्
लेहः ससैन्धवसितामधुसर्पिरिष्टः ।
निम्बाम्बु छर्दितवतः कफजे तु पानम्
राजद्रुमाम्बु मधुना सह दीप्यकाढ्यम् ।
चूर्णं यदुक्तमथवानिलजे तदेव
सर्वेषु सर्वकृतमेवमुपक्रमेच्च ॥ २ ॥
कुष्ठसौवर्चलाजाजी शर्करामरिचं विडम् ।
धात्र्येलापद्मकोशीरपिप्पलीचन्दनोत्पलम् ॥

---

पिबेत् सहसेति । अनिल इति कारणे कार्य्योपचारात् अनिलजे, अनिलजेऽपि वमनमिह कफस्थानगतत्वाद्देदितव्यम् । स्नेहस्तैलमिह वातहन्तृत्वादिति ब्रह्मटिप्पनी, तन्न, घृतमेव युक्तम्, वक्ष्यमाणवाग्भटवचनात् । यवभस्म इति यवक्षारः । लवणोत्तमं सैन्धवम् । एलं एलबालुकमिति कार्त्तिकः ; एलेत्यन्ये, युक्तञ्चैतत् वाग्भटसंवादात् ॥ १ । २ ॥

गुडाम्बुमधुरैरिति गुडाम्बुयोगान्मधुरैर्वमनयोगैः ; अत्र मदनफलयोगोऽपि ज्ञेयः, केवलगुडोदकेन वमनस्यासम्भवात् ; अन्ये तु मधुरशब्देनाष्टवर्गमाहुः ; अपरे तु मधुरैरित्यत्र मधुकैरिति पठन्ति । निम्बाम्बु छर्दितवत इति आगमशासनमनित्यमिति आगमाभावादत्र केवलश्छकारः, तेन न छन्दोभङ्गः । चन्द्राटस्तु निम्बाम्बु वमितवत इति पठति । राजद्रुमाम्बुमधुनेति राजद्रुम आरग्वधस्तस्य फलक्वाथो मधुना सहित इत्यर्थः ; कार्त्तिकस्तु राजद्रुमशब्देन आरग्वधादिगणमाह, कफाधिक्येऽस्यैवोचितत्वादिति, किन्तु वाग्भटे एवं नोक्तं तेन आरग्वधादिगणग्रहणं न प्रमाणमिति । दीप्यकाढ्यमिति यमानीचूर्णमत्र प्रक्षेप्यम् । चूर्णं यदुक्तमथवेति अनिलजे यत् चूर्णमुक्तं कृष्णादिनागरान्तं तदेवेह राजद्रुमाम्बुना पिबेत् । अयञ्च विधिर्वातानुबन्धे सति ज्ञेयः । सर्वेषु सर्वकृतमिति प्रत्येकदोषोक्तं मेलयित्वा सर्वदोषजमरोचकमुपाचरेदित्यर्थः ॥ २ ॥

कुष्ठेत्यादि ।—चरकस्य । चत्वारो योगाः स्पष्टाः । त्वगुस्तेत्यादि ।—नव्

लोध्रं तेजोवती पथ्या तूरषणं सयवाग्रजम्।
आर्द्रं दाड़िमनिर्यासश्चाजाजीशर्करायुतः॥
सतैलमाक्षिकाश्चैते चत्वारः कवड़ग्रहाः।
चतुरोऽरोचकान् हन्युर्वाताद्यं काजसर्वजान्॥ ४॥
त्वङ्मुस्तमेला धान्यानि मुस्तमामलकानि च।
त्वक् च दार्वी यमान्यश्च पिप्पल्यस्तेजोवत्यपि॥
यमानी तिन्तिड़ीकञ्च पञ्चैते मुखशोधनाः।
श्लोकपादैरभिहिताः सर्वारोचकनाशनाः॥ ५॥
अम्लीका गुड़तोयञ्च त्वगेलामरिचान्वितम्।
अभक्तच्छन्दरोगेषु शस्तं कवड़धारणम्॥ ६॥
कारव्यजाजीमरिचं द्राक्षावृक्षाम्लदाड़िमम्।
सौवर्चलं गुड़ं क्षौद्रं सर्वारोचकनाशनम्॥ ७॥
लोध्रूषणानि त्रिफला रजनीद्वयञ्च
चूर्णीकृतानि यवशूकविमिश्रितानि।
क्षौद्रान्वितानि वितरेन्मुखधारणार्थ-
मन्यानि तिक्तकटुकानि च भेषजानि॥ ८॥

---

गुडत्वक्, तेजोवती चवी। एषां चूर्णेन जिह्वाघर्षणं कार्य्यमित्याहुः। मुखशोधना इति मुखगतदोषशोधनाः॥ ४॥ ५॥

अम्लीकेत्यादि। अम्लीका पक्कतिन्तिडीफलम्, एतच्च पुरातनं ग्राह्यमित्याहुः। त्वगेलादीनाञ्च कटुत्वसौगन्ध्यापादक मानम्॥ ६॥

कारवीत्यादि।—कारवी कृष्णजीरकं; वृक्षाम्लं महार्द्रकम्। गुडिका पञ्चषण्माषकमाना मुखे धार्य्येत्याहुः॥ ७॥

लोध्रेत्यादि।—सुश्रुतस्य। मुखधारणार्थमिति घर्षणं मुखशोधनमिति। अन्यानि तिक्तकटुकानि च भेषजानीति त्वगेलादिसहितानि भवन्ति, यदुक्तं "त्वगेलासहित सर्वं कटुतिक्तमरीचकी। लिह्यात् क्षौद्रेण संयुक्तमल्पमल्पं पुनः पुनः" इति॥ ८॥

विट्चूर्णमधुसंयुक्तो रसो दाड़िमसम्भवः ।
असाध्यामपि संहन्यादरुचिं वक्त्रधारितः ॥ ९ ॥

यमानीषाड़वः—यमानीतिन्तिड़ीकञ्च नागरञ्चाम्लवेतसम् ।
दाड़िमं वदरञ्चाम्लं कार्षिकाण्युपकल्पयेत् ॥
धान्यसौवर्चलाजाजीवराङ्गञ्चार्द्धकार्षिकम् ।
पिप्पलीनां शतञ्चैकं द्वे शते मरिचस्य च ॥
शर्करायाश्च चत्वारि पलान्येकत्र चूर्णयेत् ।
जिह्वाविशोधनं हृद्यं तच्चूर्णं भक्तरोचनम् ॥
हृत्पीड़ापार्श्वशूलघ्नं विबन्धानाहनाशनम् ।
कासश्वासहरं ग्राहि ग्रहण्यर्शोविकारनुत् ॥ १० ॥

कलहंसः—

अष्टादश शिग्रुफलानि दश मरिचानि विंशतिश्च पिप्पल्यः ।
आर्द्रकपलं गुड़पलं प्रस्थत्रयमारनालस्य ॥
एतद्धिङ्‌गुलवणयुतं खजाहतं सुरभिगन्धाढ्यम् ।
व्यञ्जनसहस्रघाति श्रेयं कलहंसं नाम ॥ ११ ॥

इत्यरोचकचिकित्सा ।

---

विट्चूर्णेत्यादि स्पष्टम् ॥ ९ ॥

यमानी षाड़वः अम्लमिति वदरविशेषणं ; वराङ्ग गुड़त्वक् । पिप्पलीनां शतमित्याकृतिमानात । एवं मरिचस्यापि शतद्वयम् । एतच्चूर्णं मुखे धृत्वा शनैः शनैर्गलाधःकरणीयमित्युपदिशन्ति । षाड़व इति मधुराम्लयोगस्य संज्ञा, यमान्योपलक्षितः षाड़वो यमानीषाड़वः ॥ १० ॥

अष्टादशेत्यादि ।—शिग्रुफलानि शोभाञ्जनबीजानि । सुरभिगन्धाढ्यं चातुर्जातकाढ्यमित्यर्थः । स्वरवहानाड़ीशुद्धिकरत्वेन कलस्वरजनकत्वेन कलहंससंज्ञा ॥ ११ ॥

इत्यरोचकचिकित्साविवृतिः ॥

अधोभागोन्नते दोषे छर्दिः क्षिप्रं निवर्त्तते ॥ ९ ॥
गुडूचीत्रिफलारिष्टपटोलैः क्वथितं पिबेत्।
क्षौद्रयुक्तं निहन्त्याशु छर्दिं पित्ताम्लसम्भवाम् ॥ १० ॥
क्वाथः पर्पटजः पीतः सक्षौद्रश्छर्दिनाशनः ॥ ११ ॥

कफात्मिकायां वमनं प्रशस्तम्
सपिप्पलीसर्षपनिम्बतोयैः।
पिण्डीतकैः सैन्धवसंप्रयुक्तै-
श्छर्द्यां कफामाशयशोधनार्थम् ॥ १२ ॥

विडङ्गत्रिफलाविश्वचूर्णं मधुयुतं जयेत्।
विडङ्गप्लवशुण्ठीनामथवा श्लेष्मजां वमिम् ॥ १३ ॥
मजाम्रवं वा बदरस्य चूर्णं मुस्तायुतां कर्कटकस्य शृङ्गीम्।
दुरालभां वा मधुसम्प्रयुक्तां लिह्यात्कफच्छर्दिविनिग्रहार्थम् ॥१४॥

---

हरीतकीनामित्यादि स्पष्टम् ॥ ९ ॥

गुडूचीत्यादौ। – पित्ताम्लसम्भवामिति अम्लपित्तसम्भवाम् ॥ १० ॥

क्वाथेत्यादि स्पष्टम् ॥ ११ ॥

कफात्मिकायामित्यादौ।—सपिप्पलीसर्षपनिम्बतोयैरिति निम्बवल्कलस्याष्टगुणे क्वाथे पिप्पल्यादीनां प्रक्षेप इति वृन्दटिप्पणी, अन्ये तु 'तोय'शब्देनात्र उष्णोदकमुच्यते, तेन पिप्पल्यादिकल्कमुष्णोदकेन पिबेदित्याहुः, वाग्भटेऽप्युक्तं "कफजायां वमेन्निम्बकृष्णापिण्डीतसर्षपैः। युक्तेन कोष्णतोयेन" इति; तत्रानुक्तमपि वमनशोध्यत्वेन सैन्धवं बोध्यम्। पिण्डीतको मदनफलम्। कफामाशयशोधनार्थमिति कफपूर्णामाशयशोधनार्थम्, कफस्यामाशयस्य च शोधनार्थमित्यन्ये ॥ १२ ॥

विडङ्गेत्यादौ।—प्लवं कैवर्त्तमुस्तकम् ॥ १३ ॥

मजाम्रवमित्यादि।—आम्रवं जम्बुफलास्थि। बदरस्य चूर्णमिति बदरास्थिचूर्णमिति चरके पठ्यते. तन्मते मज्जबदरस्यैव चूर्णम्; अन्ये तु बदरस्य चूर्णमिति पठित्वा बदरास्थिमज्जचूर्णमित्याहुः। मुस्तायुतां कर्कटकस्य शृङ्गीमिति द्वितीयो योगः। दुरालभा वेति तृतीयो योगः। योगत्रयेऽपि मधु सम्बध्यते ॥ १४ ॥

तर्पणं वा मधुयुतं तिसृणामपि भेषजम् ।
कृतं गुडूच्या विधिवत् कषायं हिमसंज्ञितम् ॥
तिसृष्वपि भवेत् पथ्यं माध्वीकेन समायुतम् ॥ १५ ॥
द्रव्यादापोथितात् तोये प्रतप्ते निशि संस्थितात् ।
कषायो योऽभिनिर्याति स शीतः समुदाहृतः ॥
षड्भिः पलैश्चतुर्भिर्वा सलिलात् शीतफाण्टयोः ।
आप्लुतं भेषजपलं रसाख्यायां पलद्वयम् ॥ १६ ॥
श्रीफलस्य गुडूच्या वा कषायो मधुसंयुतः ।
पेयश्छर्दित्रये शीतो मूर्वा वा तण्डुलाम्बुना ॥ १७ ॥
जम्ब्वाम्रपल्लवगवेधुकधान्यसेव्य-
ह्रीबेरवारि मधुना पिबतोऽल्पमल्पम् ।
छर्दिः प्रयाति शमनं त्रिसुगन्धियुक्ता
लीढ़ा निहन्ति मधुनाथ दुरालभा वा ॥ १८ ॥

---

तर्पणेत्यादि ।—तर्पणं लाजविप्लुताः शक्तवः । तिसृणामिति पृथग्वातादि-नाम्, अन्यथा बहुवचनानुपपत्तिः । एतेन त्रिदोषवच्छर्दिहरत्वमस्योक्तं भवति, तः पृथग्वात्यादिच्छर्दिभेषजयुक्तमेव सान्निपातिकच्छर्दिभेषजं भवति, चरके तोक्तत्वात् । कृतमित्यादि ।—सुश्रुतस्य । अत्रापि पूर्ववत् व्याख्येयम् ॥ १५ ॥

हिमसञ्ज्ञितमिति शीतकषायसञ्ज्ञितं, तदर्थमेव कृष्णात्रेयपरिभाषामाह द्रव्या-यादि ।—व्यवहारस्तु प्रायेण भेषजार्द्धपलं जलपलद्वयमिति । रसाख्याया पल मिति स्वरसाभावे यत्र भेषजचूर्णमुष्णोदके प्रक्षिप्य स्वरसानुकल्पः क्रियते तस्मिन् थि कर्त्तव्ये भेषजस्य पलद्वयं दत्त्वा स्वरसानुकल्पः कार्य्यः ॥ १६ ॥

श्रीफलस्येत्यादि ।—श्रीफलो विल्वं तस्य मूलं ग्राह्यं, "विल्वमूलं मरुत्श्लेष्म-र्दिघ्न न च पित्तकृत्" इति गुणपाठात् ; एवमन्यत्रापि । गडूच्या वा कषाय इति च्याः क्वाथ एव शीतलः कार्य्यः, न तु शीतकषायः, नागार्जुनसंवादे तस्योक्तत्वात्, —"छिन्नरुहायाः क्वाथं सुशीतं यो नरः पिबेन्मधुना । छर्दिं स वातपित्त-समुत्थां निवारयति" इत्यादि ॥ १७ ॥

जम्ब्वामेत्यादि ।—गवेधुको गुन्द्रम् ; धान्यं धान्यकम्, सेव्यमुशीरम्, वारि

जातीधात्री—जात्या रसः कपित्थस्य पिप्पलीमरिचान्वितः।
क्षौद्रेण युक्तः शमयेल्लेहोऽयं छर्दिमुल्वणाम्॥ १९॥
पिष्ट्वा धात्रीफलं द्राक्षां शर्कराञ्च पलोन्मिताम्।
दत्त्वा मधुपलञ्चात्र कुडवं सलिलस्य च॥
वाससा गलितं पीतं हन्ति छर्दिं त्रिदोषजाम्॥ २०॥
एलादिचूर्णम्—एलालवङ्गगजकेशरकोलमज्ज-
लाजाप्रियङ्गुघनचन्दनपिप्पलीनाम्।
चूर्णानि माक्षिकसितासहितानि लीढ्वा
छर्दिं निहन्ति कफमारुतपित्तजाञ्च॥ २१॥
कोलामलकमज्जानौ मक्षिकाविट् सिता मधु।
सकृष्णातण्डुलो लेहश्छर्दिमाशु नियच्छति॥ २२॥
अश्वत्थवल्कलं शुष्कं दग्ध्वा निर्वापितं जले।
तत्तोयपानमात्रेण छर्दिं जयति दुस्तराम्॥ २३॥
यष्ट्याह्वं चन्दनोपेतं सम्यक् क्षीरप्रपेषितम्।
तेनैवालोड्य पातव्यं रुधिरच्छर्दिनाशनम्॥ २४॥
लाजाकपित्थमधुमागधिकोषणानाम्
क्षौद्राभयात्रिकटुधान्यकजीरकाणाम्।

---

शीतकषाय इत्यर्थः। पुनर्द्राक्षेति श्लोकानुरोधात् क्रमं त्रिसुगन्धियोगेन योगा न्तरत्वाद्वा न पौनरुक्त्यम्॥ १८॥

जात्या इत्यादि।—जाती आमलकी, कपित्थस्येति कपित्थफलस्य। एष एवायं योगः॥ १९॥

पिष्ट्वेत्यादि।—इदन्तु अग्न्याद्यपेक्षया पेयम्, शेषं त्याज्यम्॥ २०॥

एलेत्यादि स्पष्टम्॥ २१॥

कोलेत्यादि।—कोलं बदरं तदस्थिमज्जा ग्राह्या। कृष्णातण्डुलः पिप्पली तण्डुलः॥ २२॥

अश्वत्थेत्यादि स्पष्टम्॥ २३॥

यष्ट्याह्वमित्यादौ।—तेन इति क्षीरेण॥ २४॥

पथ्यामृतामरिचमाक्षिकपिप्पलीनाम्
लेहास्त्रयः सकलवम्यरुचिप्रशान्त्यै ॥ २५ ॥

पद्मकाद्यं घृतम्—

पद्मकामृतनिम्बानां धान्यचन्दनयोः पचेत् ।
कल्के क्वाथे च हविषः प्रस्थं छर्दिनिवारणम् ॥
तृष्णारुचिप्रशमनं दाहज्वरहरं परम् ॥ २६ ॥

इति छर्दिचिकित्सा ॥

---

## अथ तृष्णाचिकित्सा ।

तृष्णायां पवनोत्थायां सगुडं दधि शस्यते ।
रसाश्च बृंहणाः शीता गुडूच्या रस एव च ॥ १ ॥
पञ्चाङ्गकाः पञ्चगणा य उक्तास्तेष्वम्बु सिद्धं प्रथमे गणे वा ।

लाजेत्यादौ ।—कपित्थस्य फलम्, ऊषण मरिचम्, जीरकोऽजाजी ॥ २५ ॥
पद्मकघृते क्वाथ, कल्कश्च पद्मकादिपञ्चकस्य ॥ २६ ॥

इति छर्दिचिकित्साविवृतिः ।

---

छर्दास्तृष्णोपद्रवत्वाच्छर्दनन्तरं तृष्णाचिकित्सामाह, तृष्णायामित्यादि ।—वाग्भटस्य । सगुडं दधीति गुडं प्रक्षेप्यम् । पञ्चाङ्गका इत्यादि ।—सुश्रुतस्य । पञ्च अङ्गानि येषाम् एवम्भूता ये पञ्चगणाः स्वल्पवृहत्तृणवल्लीकण्टकीसंज्ञकानि पञ्च पञ्चमूलानि सुश्रुतोक्तानि तेषु । अम्बु सिद्धमिति अम्बु क्वाथोऽर्द्धशृतं वा । एते च पञ्च योगाः, प्रत्येकं क्वाथविधानात् । प्रथमो गणो विदारीगन्धादिः सांश्रुतः । अल्पश इति स्तोकं स्तोकम्, अन्ये तु अल्पश इति तृष्णाविशेषणं व्याख्याय अल्पशस्तृष्णायां शमनम्, महत्यां वमनमित्याहुः । तृष्णोपरोधं न कदापि कुर्य्यादिति अतोऽल्पाल्पजलदानात् तृष्णाया उपरोधं दुःखं कदापि न कुर्य्यात्; किंवा किमर्थं पुनरिदमल्पाल्पं जलं दीयते इत्याह तृष्णेत्यादि, यस्मात् तृष्णाया उपरोधे सति प्राणत्यागः

पिबेत् सुखोष्णं मनुजोऽल्पशो वा तृष्णोपरोधं न कदापि कुर्य्यात् ॥ २ ॥

पित्तोत्थितां पित्तहरैर्विपक्कम्
निहन्ति तोयं पय एव वापि ॥ ३ ॥
काश्मर्य्यशर्करायुक्तं चन्दनोशीरपद्मकम् ।
द्राक्षामधुकसंयुक्तं पित्ततर्षे जलं पिबेत् ॥ ४ ॥
पित्तजायान्तु तृष्णायां पक्कोडुम्बरजो रसः ।
तत्क्काथो वा हिमस्तद्वच्छारिवादिगणाम्बु वा ॥ ५ ॥
स्याज्जीवनीयमिद्धं क्षीरघृतं वा पित्तजे तर्षे ॥ ६ ॥
तद्वद्द्राक्षाचन्दनखर्जूरोशीरमधुयुक्तं तोयम् ॥ ७ ॥
सशारिवादौ तृणपञ्चमूले तथोत्पलादौ मधुरे गणे वा ।

---

स्यात् अतः पुरुषः कदापि तृष्णोपरोधं न कुर्य्यादित्यर्थः । डल्वनस्तु "पिबन् सुखोष्णं मनुजोऽचिरेण तृषो विमुच्येत हि वातजायाः" इति पठति । कश्चित्तु 'पिबेत् सुखोष्णं मनुजोऽल्पशस्तु जलौघादुग्धस्य तथैव पानमिति ॥ १ । २ ॥

पित्तोत्थितामित्यादि ।—सुश्रुतस्य । पित्तहरैरिति काकोल्यादिभिः । डल्वनस्तु "पित्तघ्नवर्गैस्तु कृतः कषायः सशर्करः क्षौद्रयुतः सुशीतः । पीतस्तृषां पित्तकृतां निहन्ति क्षीरं शृतं वाप्यथ जीवनीयैः" इति पठति, व्याचष्टे च पित्तघ्नवर्गैरित्युत्पलादिभिः काकोल्यादिभिश्चेति ॥ ३ ॥

काश्मर्य्यादिमधुकान्त एको योगः । शीतकषायोऽयम् । अन्ये तु एषां कल्की जलेन पेय इत्याहुः ॥ ४ ॥

पित्तजायामित्यादि ।—वाग्भटस्य । पक्कोडुम्बरज इत्यपपाठः सुश्रुतवचनात् । हिम इति शीतकषायः । तद्वदिति हिम इत्यर्थः ; शारिवादिगणस्य वाग्भटोक्तः । स्याज्जीवनीयेत्यादि ।—चरकस्य । क्षीरघृतमिति क्षीरोत्थं घृतम् । वा पित्तजे तर्षे इति वातजे चेत्यर्थः ; न तु संसर्गजे, तेषामसूत्रितत्वात्, किंवा असूत्रितानामपि द्वन्द्वजानां गुल्मानामभिधाने यो न्यायः स एवात्राप्यनुसरणीय इति ॥ ५ ॥ ६ ॥

तद्वदित्यादौ ।—तोयं शीतकषायमित्याहुः ; चक्रस्तु तद्वदित्यत्र पैत्ते इति पठति, व्याचष्टे च पैत्ते इत्यत्र तर्षे इति सम्बन्ध इति । सशारिवेत्यादि ।—सुश्रुतस्य ।

कुर्य्यात् कषायांश्च तथैव युक्तान् मधूकपुष्पादिषु चापरेषु ॥८॥
विल्वाढ़कीधातकिपञ्चकोलदर्भेषु सिद्धं कफजां निहन्ति ॥ ९ ॥
हितं भवेच्छर्दनमेव चात्र तप्तेन निम्बप्रसवोदकेन ॥ १० ॥
सजीरकाण्यार्द्रकशृङ्गवेरसौवर्चलान्यर्द्धजलप्लुतानि ।
मद्यानि हृद्यानि च गन्धवन्ति पीतानि सद्यः शमयन्ति तृष्णाम्
॥ ११ ॥
क्षतोत्थितां रुग्विनिवारणेन जयेद्रसानामसृजश्च पानैः ॥ १२ ॥

---

सप्तमी षष्ठ्यर्थे, तेन शारिवादिगणचतुष्टयस्य कषायं कुर्य्यादित्यर्थः । मधुरो गणः काकोल्यादिः ; मधुरो गण इत्यत्र प्रथमो गण इति डल्वनः पठित्वा विदारीगन्धादिगण इति व्याचष्टे, तन्न प्रामाणिकं, बहुभिरव्याख्यातत्वात् । अनेन गणचतुष्टयेन चत्वारः कषायाः कार्य्या इति चत्वार एव योगाः । तथैव युक्तानिति शीतकषायविधिना कृतान्, सुश्रुते कषायप्रस्तावे अस्य वचनस्य पठितत्वात् ; डल्वनस्तु तथैव युक्तानित्यत्र यथेरितान् वेति, पूर्वोक्तविधानेन एतेन जलं दत्त्वा प्रवाते निशि वासनं कुर्य्यात् । मधूकपुष्पादिषु चापरेष्विति एषाञ्च शीतकषायं कुर्य्यादित्यर्थः । मधूकपुष्पादीनि तु मधूकश्रीभाञ्जनकोविदारप्रियङ्गुपुष्पाणि चत्वारि रक्तपित्तघ्नत्वे नेह पठितानि ; किंवा आदिशब्दः प्रकारवाची, तेन मधूकपुष्पद्राक्षाकाश्मर्य्यखर्जूराणीति चत्वारि ॥ ७ ॥ ८ ॥

विल्वाढकीत्यादि ।—विल्वस्य मूलम् ; आढकी तूवरी । सिद्धमित्यतः परं जलमिति शेषः ; जलमिति षडङ्गविधानेनेति चक्रः, अन्ये तु क्वाथमाहुः । अत्र सुश्रुतटीकाकृतो धातकीपञ्चकोलस्थाने धान्यकपञ्चमूलमिति पठन्ति, पञ्चमूलं स्वल्पमित्याहुः, सर्वासु तृष्णासु पित्तसम्भवत्वेन पञ्चकोलमनुचितमित्याहुः । दर्भ उलुकः । निम्बप्रसवोदकेनेति निम्बत्वगङ्कवक्वाथेनेति चक्रः ; निम्बपुष्पक्वाथेनेत्यरुणः ; निम्बपल्लवक्वाथेनेति जेज्जड़ः, युक्तञ्चैतत् तन्त्रान्तरसंवादात् । आर्द्रकशृङ्गवेरसौवर्चलानीत्यत्र आदित्वात् । आर्द्रकशृङ्गवेरम् आर्द्रकमेव । जीरकादिकञ्च सौरभकटुत्वमात्रकारकं देयम् ॥ ९—११ ॥

क्षतोत्थितामित्यादि ।—सार्द्धश्लोकः सुश्रुतस्य । रुग्विनिवारणेनेति व्रणवेदनानिर्वापणेन कारणोच्छेदात् तत्कार्य्यरूपा क्षतजा तृष्णा शाम्यतीत्यर्थः । रसानामिति मांसरसानाम् । असृजश्च पानैरिति एणादिरक्तस्य सद्यस्कस्य पानैरित्यर्थः,

क्षयोत्थितां क्षीरजलं निहन्यान्मांसोदकं वाथ मधूदकं वा।
गुर्वन्नजामुल्लिखनैर्जयेत्तु क्षयादृते सर्वकृताश्च तृष्णाम्॥ १३॥
लाजोदकं मधुयुतं शीतं गुड़विमर्दितम्।
काश्मर्य्यशर्करायुक्तं पिबेत् तृष्णार्दितो नरः॥ १४॥
अतिरूक्षदुर्बलानां तर्षं शमयेन्नृणामिहाशु पयः।
छागो वा घृतभृष्टः शीतो मधुरो रसो हृद्यः॥ १५॥
आम्रजम्बुकषायं वा पिबेन्माक्षिकसंयुतम्।

---

एतस्मात्यर्थशोणितस्रुतौ सत्यां ज्ञेयम्। क्षयोत्थितामित्यादौ। क्षीरजलमिति क्षीरमिश्रितं जलमिति, क्षीरजलमित्यत्र क्षीरघृतमिति डल्लनः पठति, व्याचष्टे च क्षीरोत्थं घृतं क्षीरसहितं वा घृतमिति। मांसोदकमिति मांसरस एव, अन्ये तु माषोदकमिति पठित्वा माषयूषमिति व्याचक्षते। मधूदकं वेति मधुमिश्रितमुदकमित्यर्थः। उदकञ्चात्र ऐन्द्रं, तदनुकारि भूयिष्ठमुदकं वा चरकसंवादात्। न च विरोधः, अतुल्योपयोगात्; उक्तं हि सुश्रुते मध्वम्बुनी मधुसर्पिषी मानतस्तुल्ये नाश्नीयादिति। ननु क्षयजायां बृंहणमेवोचितं मधूदकन्तु रूक्षणमिति तत् कथमत्र प्रयुक्तमिति? नैवं; क्षयजापि दोषत्रयेण जन्यते, यदुक्तं "रसक्षयाद् या क्षयसम्भवा सा तां सन्निपातादिति केचिदाहुः" इति। तत्र यद्यपि कफपित्तं वा अधिक तदा मधूदकं देयम्। डल्लनस्तु मधूदकमित्यत्र मधुकोदकमेवेति पठित्वा व्याचष्टे यष्टिमधुजलमिति; तन्न युक्तं, चरकसंवादात्। उल्लिखनैरिति वमनैः। न केवलं गुर्वन्नजामेव वमनैर्जयेत्, किन्तर्हि, अन्यामपीत्याह क्षयादृते इत्यादि। क्षयोत्पन्नापि सर्वदोषारब्धा, तस्यां क्षीणधातुत्वात् वमनं न कार्य्यम्। सर्वकृतामिति सर्वदोषकृतामामजामिति कार्त्तिकः, अन्ये तु क्षयादृते सर्वकृतास्तु तृष्णा इति पठन्ति, क्षयजां विहाय अन्याः सर्वास्तृष्णा वातपित्तकफामगुर्वन्नैः कृततृष्णा वमनैर्जयेदिति व्याख्यायनन्ति। अस्मिन् पक्षे गुर्वन्नजायाः पृथगभिधानं विशेषार्थम्॥ १२॥ १३॥

लाजोदकमित्यादि।—लाजचूर्णभावितमुदकं शीतकषायो वा। काश्मर्य्यं गाम्भारीफलम्॥ १४॥

अतिरूक्षेत्यादि।—मधुरगणसाधितेनात्र सम्यङ्मधुरता ज्ञेया॥ १५॥

छर्दिं सर्वां प्रणुदति तृष्णाञ्चैवापकर्षति ॥ १६ ॥
वटशुङ्गसितालोध्रदाड़िमं मधुकं मधु ।
पिबेत् तण्डुलतोयेन च्छर्दितृष्णानिवारणम् ॥ १७ ॥
गोस्तनेक्षुरसः क्षीरयष्टीमधुमधूत्पलैः ।
नियतं नस्यतः पानैस्तृष्णा शाम्यति दारुणा ॥ १८ ॥
क्षीरेक्षुरसमाध्वीकैः क्षौद्रशीधुगुड़ोदकैः ।
वृक्षाम्लाम्लैश्च गण्डूषास्तालुशोषनिवारणाः ॥ १९ ॥
तालुशोषे पिबेत् सर्पिर्घृतमण्डमथापि वा ॥ २० ॥
मूर्च्छाच्छर्दितृषादाहस्त्रीमद्यभृशकर्शिताः ।
पिबेयुः शीतलं वारि रक्तपित्ते मदात्यये ॥ २१ ॥
धान्याम्लमास्यवैरस्यमलदौर्गन्ध्यनाशनम् ।
तदेवालवणं पीतं मुखशोषहरं परम् ॥ २२ ॥

---

आम्रजम्बुकषायं वेति आम्रजम्ब्वोः फलास्थि उच्यते ; पत्रक्वाथोऽपि युज्यते, "जम्ब्वाम्रपल्लवशृत क्षौद्रं दत्त्वा सुशीतलम्" इति पठितत्वात ॥ १६ ॥

वटेत्यादौ शुङ्गादीना चूर्णम् ॥ १७ ॥

गोस्तनेत्यादि ।—गोस्तना द्राक्षा । एभि. प्रत्येकं नस्यम् । माहेश्वरे तु द्राक्षादित्रय द्राक्षायष्टिमधुनीलोत्पल कल्कीकृत्य प्रक्षिप्य मधु च प्रक्षिप्य सर्वमालोड्य पेयमिति । तथा वक्ष्यमाणक्षीरादिभिः प्रत्येकं गण्डूषाः, बहुवचननिर्देशात् । यद्यपि तालुशोषे घृत निषिद्ध , यदुक्त "तृष्णाच्छर्दिपरीताश्च गर्भिण्यस्तालुशोषिण । न पिबेयुर्घृतम्" इति,, तथापि चरकसंवादादत्र बलवती तृष्णान्वयुक्तं घृतपानं बोध्यम्, अतो विशिष्टविधित्वान्न विरोध', यथा बलवांश्च तालुशोषेऽपि पिबेद्घृत तृष्यमनमभ्यस्येति, किंवा वातोत्थावस्थायामेतद् घृतपान बोध्यम् । तालुशोषस्य तृष्णाप्रकार एव, तेनेह सन्ननमस्याभिधानम् ॥ १८ ॥ १९ ॥

घृतमण्डमिति घृतस्योपरिभाग', अतएव घृतस्योपरि स्यानो भाग इति कासचिकित्सिते चक्रपाण्युक्त' । श्रीकण्ठस्तु घृतस्योपरि छिन्नभागः घृतमण्डमित्याहुः । मूर्च्छेत्यादि स्पष्टम् ॥ २० ॥ २१ ॥

धान्याम्लमित्यादि ।– धान्याम्ल काञ्जिकम् ॥ २२ ॥

वैशद्यं जनयत्यास्ये सन्दधाति मुखव्रणान् ।
दाहतृष्णाप्रशमनं मधुगण्डूषधारणम् ॥ २३ ॥
कोलदाड़िमवृक्षाम्लचुक्रीकाचुक्रिकारसः ।
पञ्चाम्लको मुखालेपः सद्यस्तृष्णां नियच्छति ॥ २४ ॥
वारि शीतं मधुयुतमाकण्ठाद्वा पिपासितम् ।
पाययेद्वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥ २५ ॥
वटशुङ्गामयक्षौद्रलाजनीलोत्पलैर्दृढ़ा ।
गुडिका वदनन्यस्ता चिप्रं तृष्णां नियच्छति ॥ २६ ॥
ओदनं रक्तशालीनां शीतं माक्षिकसंयुतम् ।
भोजयेत् तेन शाम्येत्तु छर्दिस्तृष्णा चिरोत्थिता ॥ २७ ॥
पूर्वामयातुरः सन् दीनस्तृष्णार्दितो जलं याचन् ।
न लभेत चेदाश्वेव मरणमाप्नोति दीर्घरोगं वा ॥
तृषितो मोहमायाति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्वास्ववस्थासु न क्वचिद्वारि वार्य्यते ॥ २८ ॥

इति तृष्णाचिकित्सा ।

सन्दधाति मुखे व्रणानिति रोपयतीत्यर्थः ॥ २३ ॥

कोलेत्यादौ ।– चुक्रीका चाङ्गेरी ; चुक्रिकेति चुकाइ इति ख्याता । मुखालेप इति मुखकुहरे लेपः, कपोलादौ लेप इति तु निश्चल. ॥ २४ ॥

वारि शीतमित्यादि ।—पित्ततृष्णायामयं योगः । आकण्ठतोयपानादनु किञ्चित् मधुपानमित्युपदिशन्ति वृद्धाः ॥ २५ ॥

वटशुङ्गेत्यादि ।—वटशुङ्गो वटप्ररोहः ; आमयः कुष्ठम् । मधु तु यावता कठिना गुड़िका भवति तावन्मात्रं देयम् । ओदनं रक्तशालीनां शीतमिति सद्यस्क-पानीयभक्तम् ॥ २६ । २७ ॥

प्रसङ्गात् तृष्णायां जलस्याप्रदाने दोषमाह पूर्वामयेत्यादि ।—पूर्वामयातुरः सन् ज्वररक्तपित्तादिरोगक्लिष्टः सन् । दीन इति तृष्णापीड़ितत्वेनैव क्लान्तमनाः । कथं म्रियत इत्याह तृषित इत्यादि ॥ २८ ॥

इति तृष्णाचिकित्सा-विवृतिः ।

## अथ मूर्च्छाचिकित्सा ।

सेकावगाहौ मणयः सहाराः शीताः प्रदेहा व्यजनानिलश्च ।
शीतानि पानानि च गन्धवन्ति सर्वासु मूर्च्छास्वनिवारितानि ॥ १ ॥

सिद्धानि वर्गे मधुरे पयांसि सदाडिमा जाङ्गलजा रसाश्च ।
तथा यवा लोहितशालयश्च मूर्च्छासु शस्ताश्च सतीलमुद्गाः ॥२॥

यथादोषं कषायाणि ज्वरघ्नानि प्रयोजयेत् ।
रक्तजायान्तु मूर्च्छायां हितः शीतक्रियाविधिः ॥ ३ ॥
मद्यजायां वमेन्मद्यं निद्रां सेवेत् यथासुखम् ।
विषजायां विषघ्नानि भेषजानि प्रयोजयेत् ॥ ४ ॥
कोलमज्जोषणोशीरकेशरं शीतवारिणा ।
पीतं मूर्च्छां जयेत् लीढ्वा कृष्णां वा मधुसंयुताम् ॥ ५ ॥
महौषधामृताक्षुद्रापौष्करग्रन्थिकोद्भवम् ।

---

तृष्णायां मोहो भवतीत्यनन्तरं मोहचिकित्सामाह, सेकेत्यादि।—सुश्रुतस्य। मणयो मुक्तास्फटिकप्रभृतयः ते च सहाराः हारारोपिता इत्यर्थः। पानानि च गन्धवन्तीति कर्पूरादियोगात् सुरभीणि पानीयानीत्यर्थः। सर्वासु मूर्च्छास्वनिवारितानीत्यनेन वातकफकृतायां मूर्च्छायामपि हेतुप्रत्यनीकचिकित्साकरणं वारणाहेता, एते शीतविधयो व्याधिप्रत्यनीकतया पित्तानुबन्धाच्च न वारणीया इति दर्शयति ॥ १ ॥

वर्गे मधुर इति काकोल्यादिः। सदाडिमा इति दाडिमाम्लसहिता इत्यर्थः। सतीलो वर्त्तुलकलाय' ॥ २ ॥

यथादोष कषायाणि ज्वरघ्नानि प्रयोजयेदिति वातादिमूर्च्छासु यथाक्रमं वातादिकषायाणि यानि तानि प्रयोजयेदित्यर्थः। रक्तजायामिति रक्तदर्शनजायाम् ॥ ३ ॥

मद्यजायामिति मद्यसेवनजायाम् ॥ ४ ॥

कोलमज्जादौ।—कृष्णा मरिचम् ॥ ५ ॥

पिबेत् कणायुतं क्वाथं मूर्च्छा येषु मदेषु च ॥ ६ ॥
शतावरीबलामूलद्राक्षासिद्धं पयः पिबेत् ।
ससितं भ्रमनाशाय बीजं वाट्यालकस्य वा ॥ ७ ॥
पिबेद्दुरालभाक्वाथं सघृतं भ्रमशान्तये ।
त्रिफलायाः प्रयोगो वा प्रयोगः पयसोऽपि वा ॥ ८ ॥
रसायनानां कौम्भस्य सर्पिषो वा प्रशस्यते ॥ ९ ॥
मधुना हन्त्युपयुक्ता त्रिफला रात्रौ गुड़ार्द्रकं प्रातः ।
सप्ताहात् पथ्यभोजो मदमूर्च्छाकासकामलोन्मादान् ॥१०॥
अञ्जनान्यवपीड़ाश्च धूमाः प्रधमानि च ।
सूचीभिस्तोदनं शस्तं दाहः पोड़ा नखान्तरे ॥ ११ ॥
लुञ्चनं केशरोम्णाञ्च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च हितास्तस्यावबोधने ॥ १२ ॥

इति मूर्च्छाचिकित्सा ।

---

महौषधेत्यादौ ।—क्षुद्रा कण्टकारी , ग्रन्थिकं पिप्पलीमूलम् । भ्रमः घूर्तिश्चं चौरचक्रवद्भ्रान्तिश्च । प्रयोगोऽभ्यासः ॥ ६—८ ॥

कौम्भं सर्पिर्दशवर्षात्मकम् ; अन्ये तु "स्थितं वर्षशत श्रेष्ठं कौम्भं सर्पिरुच्यते" ॥ ९ । १० ॥

अञ्जनानीति तीक्ष्णान्यञ्जनानि अपस्मारोक्तानि । अवपीडाः नासिकायां निर्गच्छा शिरसा अवपीड्य ये दीयन्ते । धूमाः वैरेचनधूमाः । प्रधमनं चूर्णनस्यम् । सूचीभिरित्यादौ—पीडा नखान्तर इति नखमांसयोर्मध्ये पीडनम् ॥ ११ ॥

आत्मगुप्ता शूकशिम्बी ॥ १२ ॥

इति मूर्च्छाचिकित्सा-विवृतिः ।

## अथ मदात्ययचिकित्सा।

मन्थः खर्जूरमृद्वीकावृक्षाम्लाम्लीकदाडिमैः।
परूषकैः सामलकैर्युक्तो मद्यविकारनुत्॥ १॥
सतीलमुद्गमिश्रान् वा दाडिमामलकान्वितान्।
द्राक्षामलकखर्जूरपरूषकरसेन वा।
कल्पयेत् तर्पणान् यूषान् रसांश्च विविधात्मकान्॥ २॥
मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम्।
जीर्णमद्याय दातव्यं वातपानात्ययापहम्॥ ३॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः।
पित्तपानात्यये योज्याः सर्वतश्च क्रिया हिमाः॥ ४॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम्।
दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः॥ ५॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्।
आभिः क्रियाभिर्मिश्राभिः शान्तिं याति मदात्ययः॥
न चेन्मद्यक्रमं मुक्त्वा क्षीरमस्य प्रयोजयेत्॥ ६॥

---

मूर्च्छावन्मदात्ययस्यापि मद्यजन्यत्वात् मूर्च्छानन्तरं मदात्ययचिकित्सामाह। मद एवात्ययकारको मदात्ययः; किंवा मदशब्देनेह मदहेतुतया मद्यमुच्यते, तेन कृतोऽत्ययो मदात्ययः। मन्थ इत्यादि।—द्रवेणालोडितशक्तवो मन्थाः, द्रवश्चेह खर्जूरादीनां ग्राह्यः। अम्लीका तिन्तिडीफलम्। छन्दोऽनुरोधाद्ध्रस्वः। सतीलेति सतीलो वर्त्तुलकलायः। सतीलमुद्गमिश्रं वेति पाठे जागरसस्य विशेषणं चरके हि एतद्वचनात् पूर्वं जाङ्गलरसमित्युक्तम्॥ १॥

मद्यमित्यादि।—सौवर्चलव्योषन्तु लवणकटुत्वमात्रकारकं देयम्। किञ्चिज्जलमष्टभागिकमित्याहुः॥ २॥

मुद्गयूष इत्यादि।—स्वादुरित्यनेन संस्कारार्थं कटुद्रव्योपयोगोऽत्र न कार्य्य इति दर्शयति॥ ३—६॥

लङ्घनाद्यैः कफे क्षीणे जातदौर्बल्यलाघवे।
ओजस्तुल्यगुणं क्षीरं विपरीतञ्च मद्यतः॥ ७॥
क्षीरप्रयोगं मद्यं वा क्रमेणाल्पाल्पमाचरेत्॥ ८॥

पुनर्नवाद्यं घृतम्—

पयः पुनर्नवाक्वाथयष्टीकल्कप्रसाधितम्।
घृतं पुष्टिकरं पानान्मद्यपानहतौजसः॥ ९॥

अष्टाङ्गलवणम्—

सौवर्चलमजाज्यश्च वृक्षाम्लं साम्लवेतसम्।
त्वगेलामरिचार्द्धांशं शर्कराभागयोजितम्॥
हितं लवणमष्टाङ्गमग्निसन्दीपनं परम्।
मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम्॥ १०॥
चव्यं सौवर्चलं हिङ्गु पूरकं विश्वदीप्यकम्।
चूर्णं मद्येन दातव्यं पानात्ययरुजापहम्॥ ११॥

जलाप्लुतश्चन्दनरूषिताङ्गः
स्रग्वी सभक्तां पिशितोपदंशाम्।

---

यस्यामवस्थायां क्षीरप्रयोगः कर्त्तव्यस्तामाह लङ्घनाद्यैरिति, आद्यशब्दात् शोधनादीनां ग्रहणम्॥ ७॥

क्षीरप्रयोगमित्यादि।—एतद्वचनात् पूर्वं पयसा च हृते रोगे बले जाते निवर्त्तयेदिति वचनमान्त, तेनात्र क्षीरप्रयोगमित्यत्र, पूर्वोक्तेन निवर्त्तयेदित्यनेन सम्बन्धात् क्षीरप्रयोगं क्रमेण निवर्त्तयेत्; मद्यञ्च क्रमेणाल्पाल्पमाचरेदित्यर्थः॥ ८॥

पयः पुनर्नवाक्वाथेत्यादौ।— क्षीरं घृतसमम्, क्वाथस्त्रिगुणश्चतुर्गुणो वेत्याहुः॥९॥

सौवर्चलेत्यादि।—अत्र सौवर्चलादीनां चतुर्णां समभागता; त्वगेलामरिचानामेकभागापेक्षया प्रत्येकमर्द्धभागिकत्वम्; शर्कराभागोऽपि सौवर्चलाद्येकतमद्रव्यसमः॥ १०॥

चव्यमित्यादौ।—पूरकं बीजपूरस्य फलत्वगिति निश्चलः। दीप्यकं यमानी॥११॥
मद्यं येन प्रकारेण विकारं न जनयेत् तदाह जलेत्यादि।—सुश्रुतस्य। चन्दनेन

पिबन् सुरां नैव लभेत रोगान्
मनोमतिघ्नञ्च मदं न याति ॥ १२ ॥
द्राक्षाकपित्थफलदाड़िमपानकं यत्
तत् पानविभ्रमहरं मधुशर्कराढ्यम् ॥ १३ ॥
पथ्याक्वाथेन संसिद्धं घृतं धात्रीरसेन वा।
सर्पिः कल्याणकं वापि मदमूर्च्छाहरं पिबेत् ॥ १४ ॥
सच्छर्दिमूर्च्छातिसारं मदं पूगफलोद्भवम्।
मद्यः प्रशमयेत् पीतमात्रं वारि शीतलम् ॥ १५ ॥
वन्यकरीषघ्राणाज्जलपानाल्लवणभक्षणाद्दापि।
शाम्यति पूगफलमदश्चूर्णरुजा शर्कराकवलात् ॥ १६ ॥
शङ्खचूर्णरजोघ्राणात् स्वल्पं मदमपोहति ॥ १७ ॥
कुष्माण्डकरसः सगुडः शमयति मदमाशु मदनकोद्रवजम् ॥१८॥
धीस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ १९ ॥

इति मदात्ययचिकित्सा।

---

र्पित लिप्तमङ्गं यस्य। पिशित मांसम् उपदंशो भक्ष्यो यस्यां सा तथा। मनोमतिघ्नमिति विशेषणात् द्वितीयादिमदं न प्राप्नोति, प्रथमन्तु मनोऽनुपघातकं लभत एवेत्यर्थः ॥ १२ ॥

द्राक्षेत्यादि।—सुश्रुतस्य। द्राक्षादिभिः पानकं मदशास्त्रानुसारेण कार्य्यम् ॥१३॥

पथ्येत्यादि। घृतद्वयमकल्कम्। अत्रैव मदत्वसामान्यात् पृथक् पृथक् चिकित्सामाह सच्छर्दीत्यादि। वन्येत्यादि।—वन जल तद्भवो वन्यः ताद्य इत्यर्थं इति केचित, करीष इति शुष्कगोमयः, अन्ये तु वन्यकरीषं वनभवकरीषमाहुः। एते च वन्यकरीषादयः पृथक् प्रयोक्तव्याः। चूर्णरुजेति अतिमात्रचूर्णभक्षणे यो रसनादिदाहः। एतच्च सम्पूर्णश्लोकानुरोधान्लिखितम्। स्वल्पं मदं पूगभक्षणजमेव। कुष्माण्डकेत्यादि।—मदनं तृणधान्यविशेषः मयनघास इति ख्यातः। धोस्तूरं धुस्तूरफलभक्षणजम् ॥ १४—१९ ॥

इति मदात्ययचिकित्सा विवृतिः ॥

## अथ दाहचिकित्सा।

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्वमिष्यते ॥ १ ॥
शतधौतघृताभ्यक्तं दिह्याद्वा यवशक्तुभिः।
कोलामलकयुक्तैर्वा धान्याम्लैरपि बुद्धिमान् ॥ २ ॥
छादयेत् तस्य सर्वाङ्गमारनालार्द्रवाससा।
लामज्जेनाथ शुक्तेन चन्दनेनानुलेपयेत् ॥ ३ ॥
चन्दनाम्बुकणास्यन्दितालवृन्तोपवीजितः ॥ ४ ॥
सुप्याद्दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥ ५ ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने।
शस्यते शिशिरं तोयं तृष्णादाहप्रशान्तये ॥ ६ ॥
क्षीरैः क्षीरिकषायैश्च सुशीतैश्चन्दनान्वितैः।
अन्तर्दाहं प्रशमयेदेतैरन्यैश्च शीतलैः ॥ ७ ॥

कुशाद्यं तैलं घृतञ्च —

कुशादिशालपर्णीभिर्जीवकाद्येन साधितम्।
तैलं घृतं वा दाहघ्नं वातपित्तविनाशनम् ॥ ८ ॥

---

मदात्ययवद्दाहस्यापि मद्यपानजन्यत्वात् मदात्ययाधिकार एव दाहचिकित्सा। यदित्यादि।—कोलेत्यादि द्वितीयो योगः ; अत्रापि दिह्यादिति योज्यम्। लामज्जं सुशीरं ; शुक्तं सन्धानविशेषः ; तालवृन्तं तालपत्रनिर्मितव्यजनम् ॥ १—६ ॥

क्षीरिकषायो, वटोडुम्बरादिक्वाथः। क्षीरादिकञ्चैतत् पानपरिषेकादौ योज्यम् ॥ ७ ॥

कुशादीत्यादि।—कुशादिपञ्चमूलं तृणपञ्चमूलं, तच्च सुश्रुतोक्तं कुशकाशनलदर्भकाण्डेक्षुमूलरूपम्। अत्र शालपर्णीशब्देन विदारीगन्धादिगणस्य ग्रहणमिति वृन्दटिप्पनी ; अन्ये तु शालपर्ण्यादिपञ्चमूलस्य ग्रहणमित्याहुः। निश्चलस्त्वादिशब्दाभावात् शालपर्णीमात्रस्यैव ग्रहणमित्याह। जीवकाद्येनेति जीवकाद्यष्टवर्गेण, जीवकाद्यष्टवर्गश्च जीवकर्षभकमेदामहामेदाकाकोलीक्षीरकाकोलीऋद्धिवृद्धय

फलिनी लोध्रसेव्याम्बु हेमपत्रं कुटन्नटम्।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम्॥ ९॥
ह्रीवेरपद्मकोशीरचन्दनक्षोदवारिणा।
सम्पूर्णामवगाहेत द्रोणीं दाहार्दितो नरः॥ १०॥

इति दाहचिकित्सा।

---

## अथोन्मादचिकित्सा।

उन्मादे वातिके पूर्वं स्नेहपानं विरेचनम्।
पित्तजे कफजे वान्तिः परो वस्त्यादिकः क्रमः॥ १॥
यच्चोपदेक्ष्यते किञ्चिदपस्मारचिकित्सिते।

---

एवं सर्वत्र सुश्रुतयोगे जीवनीयाष्टकम्। चरकयोगे पुनरेव ऋद्धिवृद्धिरहितमाषपर्णी-मुद्गपर्णी जीवन्ती मधुकसहितं जीवनीयदशकं ज्ञेयम्। अत्र कुशादिशालपर्णीभिः क्वाथः, जीवकाद्येन कल्कः। अन्ये तु "कल्कक्वाथावनिर्देशे गणात् तस्मात् समावपेत्" इति वचनात् सर्वैरेव कल्कक्वाथावित्याहुः॥ ८॥

फलिनीत्यादौ।—फलिनी प्रियङ्गुः; सेव्यमुशीरम्; अम्बु वालकं; हेम नागकेशरं; पत्रं तेजःपत्रं; कुटन्नटं कैवर्त्तमुस्तकं, कालीयकं कालीया इति ख्यातं, पीतकाष्ठं, गन्धद्रव्यविशेषः; श्वेतचन्दनमिति कश्चित् कालीयकक्वाथस्य पेषणार्थमिति वदन्ति॥ ९॥

ह्रीवेरेत्यादौ।—क्षोदं चूर्णम्। एषां चूर्णानि शीतलजलेन मिश्रयित्वा अवगाहनं कार्य्यम्॥ १०॥

इति दाहचिकित्सा विवृतिः॥

---

यद्यपि मदात्ययस्य उन्मादसदृशत्वेन तथा पूर्वोक्तरीत्या च मदात्ययानन्तरमुन्माददाहावेव वक्तुमुचितौ, तथापि सूचिकटाहन्यायेन दाहमभिधाय उन्मादचिकित्सितमुच्यते उन्मादे इत्यादि।—परो वस्त्यादिकक्रम इति पश्चात् स्नेहवस्ति-निरूहणशिरोविरेचनात्मकः क्रमः कार्य्यः। चरकेऽप्युक्तं "निरूहणं स्नेहवस्तिः

उन्मादे तच्च कर्त्तव्यं सामान्याद्दोषदूष्ययोः ॥ २ ॥
ब्राह्मीकुष्माण्डीषड्ग्रन्थाशङ्खपुष्पिकास्वरसाः ।
उन्मादहृतो दृष्टाः पृथगेते कुष्ठमधुमिश्राः ॥ ३ ॥
दशमूलाम्बु सघृतं युक्तं मांसरसेन वा ।
ससिद्धार्थकचूर्णं वा पुराणं बैककं घृतम् ॥ ४ ॥
उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् ।
लाक्षारसनिभं शीतं प्रपुराणमतः परम् ॥ ५ ॥
श्वेतोन्मत्तोत्तरदिङ्मूलसिद्धस्तु पायसः ।
गुड़ाज्यसंयुतो हन्ति सर्वोन्मादांस्तु दोषजान् ॥ ६ ॥
उन्मादे समधुः पेयः शुद्धो वा तालशाखजः ।
रसो नस्येऽभ्यञ्जने च सार्षपं तैलमिष्यते ॥ ७ ॥
अपक्वचटकी चौरपीतोन्मादविनाशिनी ।
बद्धं सार्षपतैलाक्तमुत्तानञ्चातपे न्यसेत् ॥ ८ ॥

---

शिरसश्च विरेचनम। ततः कुर्य्याद यथादोषं तेषां भूयस्त्वमाचरेत" इति सामान्याद्धेतुदूष्ययोरिति, उन्मादापस्मारयोर्हेतुर्मन उपघातादिः दूष्यञ्च हृदयसमान-मित्यर्थः। सामान्याद्दोषदूष्ययोरिति केचित् पठन्ति ॥ १ ॥ २ ॥

ब्राह्मीत्यादयश्चत्वारो योगाः। कुष्माण्डीफलमत्र पुराणं ग्राह्यमित्याहुः ॥३॥४॥

पुराणघृतलक्षणञ्चाह उग्रगन्धमित्यादि। –चरकस्य। चरकटीकाकृतस्तु केचित् इमं श्लोकमनार्षं वदन्ति, केचिदेकवर्षातीतं घृतं पुराणमिति ब्रुवते तन्त्रान्तर-संवादात् ॥ ५ ॥

श्वेतेत्यादि।—श्वेतोन्मत्तः श्वेतधुस्तूरकस्य उत्तरदिशि स्थितं मूलं ग्राह्यम्। महेश्वरस्तु उत्तरदिशि स्थित धवलधुस्तूरमूल पिष्टा पल १, क्षुद्रतण्डुल पल ४, दुग्ध-शराव ४, पायसं साध्यं, तदनुरूपे गुडघृते दत्त्वा खादयेदित्याह ॥ ६ ॥

उन्माद इत्यादि।—शुद्ध इति केवलः। तालशाखज इति छान्दसत्वाद्दूस्वः। रस इति छेदः, तेन कोमलतालशाखाभवो रसः मधुप्रक्षेपेण, शुद्धो वा मधुना विनापि ॥ ७ ॥

सिद्धार्थको हिङ्गु वचा करञ्जौ देवदारु च।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रिकम्॥
समांशानि प्रियङ्गुश्च शिरीषो रजनीद्वयम्।
वस्तमूत्रेण पिष्टोऽयमगदः पानमञ्जनम्॥
नस्यमालेपनञ्चैव स्नानमुद्वर्त्तनं तथा।
अपस्मारविषोन्मादकृत्यालक्ष्मीज्वरापहः॥
भूतेभ्यश्च भयं हन्ति राजद्वारे च शस्यते।
सर्पिरेतेन सिद्धं वा सगोमूत्रं तदर्थकृत्॥ ९॥

त्र्यूषणाद्या वर्त्तिः—

त्र्यूषणं हिङ्गुलवणं वचा कटुकरोहिणी।
शिरीषनक्तमालानां वीजं श्वेताश्च सर्षपाः॥
गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता।
चतुर्थकमपस्मारमुन्मादञ्च नियच्छति॥ १०॥
शुद्धस्याचारविभ्रंशे तीक्ष्णं नावनमञ्जनम्।
ताड़नञ्च मनोबुद्धिस्मृतिसंवेजनं हितम्॥
तर्जनं त्रासनं दानं सान्त्वनं हर्षणं भयम्।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृतिं मनः॥ ११॥
कामशोकभयक्रोधहर्षेर्ष्यालोभसम्भवान्।

---

अपक्कचटकीति आमचटकीं कल्कीकृत्य। बद्धमित्यादि। एतच्च स्रोतो-विशुद्ध्यर्थमुद्वेजनार्थञ्च॥ ८॥

सिद्धार्थक इत्यादि।—अत्र करञ्जद्वयस्य त्वगग्राह्यः; श्वेता श्वेतापराजिता; कटभी लताफुटकीति ख्याता, अन्ये तु करद्द इत्याहुः; शिरीषस्य फलम्। अगद इति संयोगविषहरः; कृत्या अभिचारः, राजद्वारे च शस्यत इति वशीकरणत्वात्। एतेनेति सिद्धार्थकादीनां कल्केन॥ ९॥

त्र्यूषणमित्यादि स्पष्टम्॥ १०॥

शुद्धस्येत्यादि।—चरकस्य। शुद्धस्येति वमितस्य आचारविभ्रंशे अत्युन्मादे।

परस्परं प्रतिद्वन्द्वै रेभिरेव शमं नयेत् ॥ १२ ॥
इष्टद्रव्यविनाशात्तु मनो यस्योपहन्यते।
तस्य तत्सदृशप्राप्तैः सान्त्वाश्वासैश्च तान् जयेत् ॥१३॥
प्रदेहोत्सादनाभ्यङ्गधूमाः पानञ्च सर्पिषः।
प्रयोक्तव्यं मनोबुद्धिस्मृतिसंज्ञाप्रबोधनम् ॥
कल्याणकं महद्वापि दद्याद्वा चैतसं घृतम्।
तैलं नारायणञ्चापि महानारायणं तथा ॥ १४ ॥

पानीयकल्याणकं घृतम्—

विशाला त्रिफला कौन्ती देवदार्वेलबालुकम्।
स्थिरा नतं रजन्यौ द्वे शारिवे द्वे प्रियङ्गुका ॥
नीलोत्पलैलामञ्जिष्ठादन्तीदाडिमकेशरम्।
तालीशपत्रं बृहती मालत्याः कुसुमं नवम् ॥
विडङ्गं पृश्निपर्णी च कुष्ठं चन्दनपद्मकौ।
अष्टाविंशतिभिः कल्कैरेतैरक्षसमन्वितैः।
चतुर्गुणं जलं दत्त्वा घृतप्रस्थं विपाचयेत् ॥
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये।
वातरक्ते प्रतिश्याये तृतीयकचतुर्थके ॥
वम्यर्शोमूत्रकृच्छ्रेषु विसर्पोपहतेषु च।

---

सवेजनमुद्वेजन, तर्जनं वचसा, विस्मृतैर्हेतौरिति उन्मादहेतुभयहर्षादिविस्मारक-तया प्रभावादेव मनः प्रकृतिं स्वभावं नयन्ति। परस्परप्रतिद्वन्द्वैरिति अन्योन्यप्रत्यनीकैः। तस्य तत्सदृशप्राप्तैरिति भावे क्तः, तत्सदृशप्रापणैरित्यर्थः। सान्त्वाश्वासैरिति सान्त्व सामप्रयोगः वशीभूतकरणार्थं उपायविशेषः, आश्वासः सन्तोषवचनम्। उत्सादन चूर्णघर्षणम्। नारायणतैलं महानारायणतैलञ्च वातव्याधौ वक्ष्यति ॥ ११—१४ ॥

विशालेत्यादि।—विशाला मीर नफर्कटी ; कौन्ती रेणुका ; एलबालुकं स्वनाम ख्यातं सुगन्धिद्रव्यं ; स्थिरा शालपर्णी ; नतं तगरपादुका, तदभावे शियली

कण्डूपाण्ड्वामयोन्मादे विषमेहगरेषु च ॥
भूतोपहतचित्तानां गद्गदानामरेतसाम् ।
शस्तं स्त्रीणाञ्च वन्ध्यानामायुर्वर्णबलप्रदम् ॥
अलक्ष्मीपापरक्षोघ्नं सर्वग्रहविनाशनम् ।
कल्याणकमिदं सर्पिः श्रेष्ठं पुंसवनेषु च ॥ १५ ॥

क्षीरकल्याणकं घृतम्—

द्विजलं सचतुःक्षीरं क्षीरकल्याणकन्त्विदम् ।
पानीयकल्याणकक्षीरकल्याणकौ प्रयोगौ ॥ १६ ॥

महाकल्याणकं घृतम्—

एभ्य एव स्थिरादीनि जले पक्त्वैकविंशतिम् ।
रसे तस्मिन् पचेत् सर्पिर्गृष्टिक्षीरं चतुर्गुणम् ॥
वीराद्विमाषकाकोलीस्वयंगुप्तर्षभर्द्धिभिः ।

---

शोधर , केशर नागकेशरं , मालती जाती, तन्दा कुसुम, नवमिति कुसुमविशेषणम् । अष्टाविंशतित्वं कल्कानां पाठादेव सिद्धं, किमर्थमुच्यते अष्टाविंशतिभिरिति ? अत्र यद्यपि त्रिफलाया. प्रत्येकमेव भागो गृह्यते उत्सर्गसिद्धत्वात्, तथापि त्रिफलाया प्रत्येकभागग्रहणदार्ढ्यार्थम अष्टाविंशतिभिरित्युक्तम । यद्यपि त्रिफलाशब्देन द्राक्षाकाश्मर्यपरूषका उच्यन्ते तथापि हरीतक्यादित्रिफलाया एवात्र ग्रहणं प्राधान्यादेव , एवमन्यत्रापि । पुंसवनेष्विति पुत्रकारकयोगेषु ॥ १५ ॥

तदेव घृतं यदा जलस्याष्टौ शरावान् क्षीरस्य षोडश शरावान् दत्त्वा पच्यते तदा क्षीरकल्याणकं भवति ॥ १६ ॥

एभ्य एवेति कल्याणकोक्तविशालादिभ्य । स्थिरादीनीत्युक्ते विदारीगन्धादेः पञ्चमूलस्यापि ग्रहणं स्यादत आह एकविंशतिमिति, तद्गुणसंविज्ञानबहुव्रीहिशङ्कानिरासार्थं वा एकविंशतिमित्युक्तम् । गृष्टिरेकवारप्रसूता धेनुः । अत्र चतुर्गुणक्षीरस्य निर्दिष्टत्वादुत्सर्गसिद्धो द्रव एव देयः, तेनानिर्दिष्टमानक्वाथोऽत्र स्नेहसम एवेति पञ्चगुणः पाकः ; युक्तश्चैतत्, पञ्चप्रसृतं यवं स्युरित्यादिपरिभाषार्थेनास्यार्थस्य समानन्यायत्वादिति केचित् । अन्ये तु क्षीरेणैवात्र चतुर्गुणे प्राप्तेऽयं कषायः 'एकेनापि चातुर्गुण्यम्" इत्यादिपरिभाषाया अविषयत्वेन "स्नेहात् तोयं चतुर्गुणम्'

मेदया च समैः कल्कैस्तत् स्यात् कल्याणकं महत् ॥
बृंहणीयं विशेषेण सन्निपातहरं परम् ॥ १७ ॥

चैतसं घृतम्—

पञ्चमूल्यावकाश्मर्य्यौ रास्नैरण्डत्रिवृद्बला ।
मूर्वा शतावरी चेति क्वाथैर्द्विपलिकैरिमैः ॥
कल्याणकस्य चाङ्गेन तद्घृतं चैतसं स्मृतम् ।
सर्वचेतोविकाराणां शमनं परमं मतम् ॥
घृतप्रस्थोऽत्र पक्तव्यः क्वाथो द्रोणाम्भसा घृतात् ।
चतुर्गुणोऽत्र सम्पाद्यः कल्कः कल्याणकैरितः ॥ १८ ॥

महापैशाचिकं घृतम्—

जटिला पूतना केशी चारटी मर्कटी वचा ।
त्रायमाणा जया वीरा चोरकः कटुरोहिणी ॥
वयःस्था शूकरी छत्रा सातिच्छत्रा पलङ्कषा ।
महापुरुषदन्ता वयःस्था नाकुलीद्वयम् ॥
कटम्भरा वृश्चिकाली स्थिरा चैव च तैर्घृतम् ।
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम् ॥

---

इति द्रवचातुर्गुण्यपरिभाषया क्षीरमानसाहचर्य्याद्वा चतुर्गुणो ज्ञेय इति वदन्ति। वीरा पृश्निपर्णी, क्षीरविदारीत्यन्ये। द्विमाषेत्यनेन राजमाष-चित्रमाषयोर्ग्रहणमिति केचित्; अन्ये तु मुद्गपर्णीमाषपर्ण्योर्ग्रहणमित्याहुः। अपरे तु द्विशब्दस्य काकोलीत्यनेन सम्बन्धात् क्षीरकाकोल्या अपि ग्रहणमित्याहुः, तन्न, वाग्भटसंवादविरोधात्; अन्ये तु वीरार्द्रमाषेति पाठान्तरम्, आर्द्रमाषोऽशुष्कमाष इति व्याचक्षते। वीरादीन्यपरिमितग्रहीतानीत्येके; वीरादीनां प्रत्येकमेकपलमिति महेश्वरः॥ १७॥

पञ्चमूल्याविति दशमूली गाम्भारीरहिता। द्विपलिकैरिति एषां प्रत्येकं द्विपलेन। कल्याणकस्य चाङ्गेनेति पानीयकल्याणकोक्तकल्केन यथोक्तमानेनेत्यर्थः, अन्ये तु अनोक्तमानं परित्यज्य घृतात् पादिकं मानं गृह्णन्ति। यद्यपि "द्रव्यमापी-

महापैशाचिकं नाम घृतमेतद्यथामृतम्।
मेधाबुद्धिस्मृतिकरं बालानाञ्चाङ्गवर्द्धनम्॥ १९॥

हिङ्ग्वाद्यं घृतम्—

हिङ्गुसौवर्च्चलव्योषैर्द्विपलांशैर्घृताढ़कम्।
चतुर्गुणे गवां मूत्रे सिद्धमुन्मादनाशनम्॥ २०॥

लशुनाद्यं घृतम्—

लशुनस्याविनष्टस्य तुलार्द्धं निस्तुषीकृतम्।
तदर्द्धं दशमूल्यास्तु द्व्याढ़केऽपां विपाचयेत्॥
पादशेषे घृतप्रस्थं लशुनस्य रसं तथा।
कोलमूलकवृक्षाम्लमातुलुङ्गार्द्रकै रसैः॥

---

...थितं क्वाथ्यं दत्त्वा षोड़शिकं जलम्। पादावशिष्टं कर्त्तव्यमेव क्वाथविधि: स्मृत:।" इति कृष्णात्रेयपरिभाषया त्रिंशत्पले क्वाथ्ये षष्टिः शरावा भवन्ति जलस्य, तथापि ...ायस्य घृताच्चातुर्गुण्यार्थं द्रोणाम्भमिति चक्रपाणिकृतम्॥ १८॥

महापैशाचिके जटिला मांसी; पूतना हरीतकी; केशी भूतकेशी, चारटी ...भारु, पद्ममृणालमित्यन्ये, ब्रह्मयष्टीत्यपरे, मर्कटी शूकशिम्बी; जया जयन्ती; ...रा चोरकाकोली, पृश्निपर्णीत्यपरे; चोरकश्चोरपुष्पी; वयःस्था ब्राह्मी, गुडूची ...न्ये, अपरे तु निर्गुण्डीत्याहुः; शूकरी वाराहिका, तदभावे चर्मकारालुकः, ...या मधुरिका; अतिच्छत्रा शतपुष्पा; पलङ्कषा गुग्गुलुः; महापुरुषदन्ती शतावरी, ...य:स्था मुक्तानना, ब्राह्मीत्यन्ये; नाकुलीदय रास्नादयं रास्ना गन्धरास्ना च; कटम्भरा ...टभी प्रसारणी वा; वृश्चिकाली वृश्चिकपत्री, विछाटीति ख्याता; स्थिरा शाल-...र्णी। स्वल्पपैशाचिकस्याभावात् महच्छब्दोऽयं महागुणकारकत्वादित्याहुः, अन्ये जटिला स्थिराम्बु भूतकेशीत्यादिना स्वल्पपैशाचिकस्यापि तन्त्रान्तरे पठितत्वात् ...दपेक्षयास्य महामहत्त्वमाहुः॥ १९॥

हिङ्ग्वित्यादौ।—व्योषस्य प्रत्येकं द्विपलांशता॥ २०॥

लशुनस्येत्यादौ।—अविनष्टस्येति विशुद्धस्य; तुलार्द्धं पञ्चाशत् पलानि; तदर्द्धं ...मूल्या इति मिलित्वा दशमूलस्य पञ्चविंशतिः पलानि; पादशेष द्व्याढके; लशु... रसं तथेति प्रस्थमेव। दाडिमाम्बु दाडिमरसः। तदर्द्धिकैरित्यत्र तच्छब्देन

दाड़िमाम्बुसुरामस्तुकाञ्जिकाम्लै स्तदर्द्धिकैः।
साधयेत् त्रिफलादारुलवणव्योषदीप्यकैः।
यमानीचव्यहिङ्ग्वम्लवेतसैश्च पलार्द्धिकैः।
सिद्धमेतत् पिबच्छूलगुल्मार्शोजठरापहम्॥
ब्रध्नपाण्ड्वामयप्लीहयोनिदोषक्रिमिज्वरान्।
वातश्लेष्मामयांश्चान्यानुन्मादांश्चापकर्षति॥ २१॥
सर्पिःपानादिरागन्तोर्मन्त्रादिश्चेष्यते विधिः॥
पूजाबल्युपहारेष्टिहोममन्त्राञ्जनादिभिः।
जयेदागन्तुमुन्मादं यथाविधि शुचिर्भिषक्॥ २२॥
कृष्णामरिचसिन्धूत्थमधुगोपित्तनिर्मितम्।
अञ्जनं सर्वभूतोत्थमहोन्मादविनाशनम्॥ २३॥
दार्वीमधुभ्यां पुष्यायां कृतञ्च गुड़िकाञ्जनम्।
मरिचं वातपे मासं सपित्तं हितमञ्जनम्।
वैकृतं पश्यतः कार्य्यं दोषभूतहतस्मृतेः॥ २४॥

---

प्राधान्यात प्रत्यासत्त्या च घृतपरिमाणात् कौलादिरसैः प्रत्येकमर्द्धप्रस्थैरित्यर्थ अन्ये तु तदर्द्धिकैरित्यत्र तच्छब्देन पादावशिष्टकषायः परामिष्यते, तेन लशुन रसादीना दशानामेव शरावार्द्धिकत्वेन प्रत्येकं प्रस्थमानमित्याहुः॥ २१॥

आगन्तून्मादचिकित्सामाह सर्पिरित्यादि।—सर्पिरिह भूतहरं चैतसादि पूजेत्यादौ बलिः पूजोपकरणम्, उपहार उपढौकनम्। किंवा पूजाबल्योपहार उपढौकनमेव। अञ्जनादिभिरिति आदिशब्दात् स्वस्त्ययनादिकं बोध्यम, यदा "भूतानामधिपं देवमीशानं जगतः प्रभुम्। पूजयन् प्रयतो नित्यं नुदत्युन्माद भयम्" इति॥ २२॥

कृष्णेत्यादौ।—गोपित्तं गोरोचना॥ २३॥

दार्वीत्यादि स्पष्टम्। मरिचमित्यादि।—मरिचं गोरोचनया आतपे मासं भावितमञ्जनं कर्त्तव्यम्। दोषभूतहतस्मृतेरिति दोषेण भूतेन वा हृता स्मृति र्यस्येत्यर्थः॥ २४॥

निम्बपत्रवचाहिङ्गुसर्पनिर्मोकसर्षपैः।
डाकिन्यादिहरो धूपो भूतोन्मादविनाशनः ॥ २५ ॥
कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतकै-
स्त्वग्वांशीवृषदंशविट्तुषवचाकेशाहिनिर्मोककैः।
गोशृङ्गद्विपदन्तहिङ्गुमरिचैस्तुल्यैस्तु धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेशज्वरघ्नः स्मृतः ॥ २६ ॥
ब्रह्मराक्षसजिन्नस्यं पक्वेन्द्रीफलमूत्रजम्।
साज्यं भूतहरं नस्यं श्वेताज्येष्ठाम्बुनिर्मितम् ॥ २७ ॥
देवर्षिपितृगन्धर्वैरुन्मत्तस्य च बुद्धिमान्।
वर्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥ २८ ॥
प्रसादश्चेन्द्रियार्थानां बुद्ध्यात्ममनसां तथा।
धातूनां प्रकृतिस्थत्वं विगतोन्मादलक्षणम् ॥ २९ ॥

इत्युन्मादचिकित्सा।

---

निम्बे त्यादि स्पष्टम् ॥ २५ ॥

कार्पासेत्यादि।—कार्पासास्थि कार्पासबीजम्; निर्माल्यं शिवनिर्माल्यम्, पिण्डीतकं मदनफलम्; त्वग्वांशीति त्वगक्षीरम्, वांशी वंशलोचना; अन्ये तु त्वग्वांशी वंशस्य त्वगित्याहुः। वृषदंशो बिड़ालः, तस्य विट् पुरीषम्, केशो मृतकेशो, बाल इत्यपरे ॥ २६ ॥

ब्रह्मे त्यादि।—पक्वेन्द्रीफलं परिणतगौरक्षककर्कटीफलं गोमूत्रेण सह योज्यं नस्यं विधेयम्। साज्यमित्यादौ श्वेता श्वेतापराजिता; ज्येष्ठाम्बु तण्डुलाम्बु ॥ २७ ॥

देवेत्यादौ।—क्रूरमिति ताडनबन्धनादिकम्। एतच्च परिवर्जनं वैद्यातुरोपघातपरिहारार्थम्; उक्तञ्च "वैद्यातुरो विनिघ्नन्ति एवं क्रुद्धा महौजसः" इति ॥ २८। २९ ॥

इत्युन्मादचिकित्साविवृतिः।

## अथापस्मारचिकित्सा।

वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः।
श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥ १॥
सर्वतः सुविशुद्धस्य सम्यगाश्वसितस्य च।
अपस्मारविमोक्षार्थं योगान् संशमनान् शृणु॥ २॥
मनोह्वा तार्क्ष्यजञ्चैव शकृत् पारावतस्य च।
अञ्जनं हन्त्यपस्मारमुन्मादञ्च विशेषतः॥ ३॥
यष्टिहिङ्गुवचावक्रशिरीषलशुनामयैः।
साजामूत्रैरपस्मारे सोन्मादे नावनाञ्जने॥ ४॥
पुष्योद्धृतं शुनः पित्तमपस्मारघ्नमञ्जनम्।
तदेव सर्पिषा युक्तं धूपनं परमं स्मृतम्॥ ५॥
नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः।
तुण्डैः पक्षैः पुरीषैश्च धूपनं कारयेद्भिषक्॥ ६॥
कायस्थान् शारदान् मुद्गान् मुस्तोशीरयवांस्तथा।
सव्योषान् वस्तमूत्रेण पिष्ट्वा वर्त्तीः प्रकल्पयेत्॥

---

तुल्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सितमुच्यते, वातिकमित्यादि।—वमनप्रायैरिति वमनप्रधानैः॥ १॥

सर्वत इत्यूर्द्ध्वमधश्च शुद्धस्य। आश्वासितस्येति संशोधनानन्तर संसर्जनक्रमेण सञ्जातबलस्य॥ २॥

मनोह्वा मनःशिला; तार्क्ष्यजं रसाञ्जनम्॥ ३॥

यष्टीत्यादौ।—वक्रं तगरम्; शिरीषं शिरीषस्य फलम्; आमयं कुष्ठम्॥ ४॥

पुष्येत्यादि।—पुष्यानक्षत्रे यदृच्छया मृतकुक्कुरस्य पित्तम्, ग्राह्यमित्याहुः; उलूकः पेचकः; कीटः पश्चिमदेशजो वृश्चिकः। एषां तुण्डादिकं यथासम्भव ग्राह्यम्॥ ५। ६॥

कायस्थानित्यादि।—कायस्था निर्गुण्डी। शारदानिति मुद्गविशेषणं ज्यैष्ठमासोद्भवमुद्गनिरासार्थम्। वर्त्तीरित्यञ्जनवर्त्तीः। विषपीत इति पीतविषे; गरः

अपस्मारे तथोन्मादे सर्पदष्टे गरार्दिते।
विषपीते जलमृते चैताः स्युरमृतोपमाः ॥ ७ ॥
अपेतराक्षसीकुष्ठपूतनाकेशिचोरकैः ।
उत्सादनं मूत्रपिष्टैर्मूत्रैरेवावसेचनम् ॥ ८ ॥
जतुकाशकृता तद्वद्दग्धैर्वा वस्तरोमभिः।
अपस्मारहरो लेपो मूत्रसिद्धार्थशिग्रुभिः ॥ ९ ॥
यः खादेत् क्षीरभक्ताशी माक्षिकेण वचारजः।
अपस्मारं महाघोरं सुचिरोत्थं जयेद् ध्रुवम् ॥ १० ॥
उद्बन्धितनरग्रीवा पाशं दग्ध्वा कृता मसी।
शीताम्बुना समं पीता हन्त्यपस्मारमुद्धतम् ॥ ११ ॥
प्रयोज्यं तैललशुनं पयसा वा शतावरी।
ब्राह्मीरसश्च मधुना सर्वापस्मारभेषजम् ॥ १२ ॥
निर्दह्य निर्द्रवां कृत्वा काकिकामरनालिकाम्।
तामम्लसाधितां खादन्नपस्मारमुदस्यति ॥ १३ ॥

---

संयोगविषम्। जलमृत इति जलपानेन मृतप्राये ; सर्वथा मृते हि भेषजं विफल-मिति। जलमृतलक्षणं यथा "विष्टब्धपायुमूत्राक्षमाध्मातोदरमेहनम्। विद्याज्जल-मृत जन्तुं शीतपादकराननम्" इति ॥ ७ ॥

अपेतराक्षसीत्यादि।—अपेतराक्षसी श्वेततुलसी, तस्याः स्वरस इत्यर्थः। पूतना हरीतकी, केशी भूतकेशी, चोरश्चोरपुष्पी। चरकोक्तपूर्वयोगे वस्तमूत्रसन्दर्शना-दत्रापि वस्तमूत्रमेवेत्याहुः। किंवा प्रधानकल्पतयात्र गोमूत्रमेव मूत्रशब्दवाच्यम् ॥८॥

जतुकाशकृतेति, जतुका चर्मचटकः तस्याः पुरीषेण तद्वदित्युत्सादनम्। दग्धै-रिति वस्तरोमभिरित्यनेन योज्यम्।

अपस्मारेत्यादौ मूत्रं गोमूत्रम् ॥ ९ ॥

यः खादेदित्यादौ।—माक्षिकेण मधुना ॥ १० ॥

उद्बन्धित उद्बन्धनमृतो नरः, तस्य ग्रीवापाशं ग्रीवाबन्धनरज्जुम् ॥ ११ ॥

प्रयोज्यमित्यादि योगत्रयं स्पष्टम् ॥ १२ ॥

हृत्कम्पोऽक्षिरुजा यस्य स्वेदो हस्तादिशीतता।
दशमूलीजलं तस्य कल्याणाज्यञ्च योजयेत्॥ १४॥

स्वल्पपञ्चगव्यं घृतम्—

गोशकृद्रसदध्यम्लक्षीरमूत्रैः समैर्घृतम्।
सिद्धं चतुर्थकोन्मादग्रहापस्मारनाशनम्॥ १५॥

वृहत्पञ्चगव्यं घृतम्—

द्वे पञ्चमूले त्रिफलां रजन्यौ कुटजत्वचम्।
सप्तपर्णमपामार्गं नीलिनीं कटुरोहिणीम्॥
सम्याकं फल्गुमूलञ्च पौष्करं सदुरालभम्।
द्विपलानि जलद्रोणे पक्त्वा पादावशेषिते॥
भार्गीं पाठां त्रिकटुकं त्रिवृतां निचुलानि च।
श्रेयसीमाढ़कीं मूर्वां दन्तीं भूनिम्बचित्रकौ॥
द्वे शारिवे रोहिषञ्च भूतिकं मदयन्तिकाम्।
क्षिपेत् पिष्टाक्षमात्राणि तैः प्रस्थं सर्पिषः पचेत्॥
गोशकृद्रसदध्यम्लक्षीरमूत्रैश्च तत्समैः।
पञ्चगव्यमिति ख्यातं महत् तदमृतोपमम्॥
अपस्मारे ज्वरे कासे श्वयथावुदरेषु च।

---

निर्दह्येत्यादौ।—भ्रमरनालिका भ्रमराख्यस्थूलनाडी। अम्लसाधितामिति काञ्जिकसाधिताम्॥ १३॥

हृत्कम्प इत्यादि स्पष्टम्॥ १४॥

गोशकृदित्यादौ।—दध्यम्लं परिणतदधि। समशब्दोऽत्र दध्यादिभिश्च सम्बध्यते॥ १५॥

द्वे पञ्चमूले इत्यादि।—द्वे पञ्चमूले विदारीगन्धादिके; रजन्याविति हरिद्राद्वयम्, वाग्भटेऽपि "द्विपञ्चमूलीत्रिफला द्विनिशाकुटजत्वचः" इत्युक्तम्। सप्तपर्णं सप्तपर्णस्य त्वक्; अपामार्गम् अपामार्गस्य मूलं; नीलिनीं स्वनामख्यातां, सम्याकम् आरग्वधं; फल्गु काकोडुम्बरिकाफलं, डुमुर इति लोके; पौष्करं मूलमित्यन्वयः। भार्गीं भार्गीमूलं; त्रिवृतां त्रिवृतामूलं; निचुलानि इज्जल

गुल्मार्शःपाण्डुरोगेषु कामलायां हलीमके।
अलक्ष्मीग्रहरक्षोघ्नं चतुर्थकविनाशनम्॥ १६॥

महाचैतसं घृतम्—

शणस्त्रिवृत् तथैरण्डो दशमूली शतावरी।
रास्ना मागधिका शिग्रुः क्वाथ्यं द्विपलिकं भवेत्॥
विदारी मधुकं मेदे द्वे काकोल्यौ सिता तथा।
एभिः खर्ज्जूरमृद्वीकाभीरुयुञ्जातगोक्षुरैः।
चैतसस्य घृतस्याङ्गैः पक्तव्यं घृतमुत्तमम्।
महाचैतससंज्ञन्तु सर्वापस्मारनाशनम्॥
गरोन्मादप्रतिश्यायतृतीयकचतुर्थकान्।
पापालक्ष्मी जयेदेतत् सर्वग्रहविनाशनम्॥
श्वासकासहरञ्चैव शुक्रार्त्तवविशोधनम्।
घृतमानं क्वाथविधिरिह चैतसवन्मतः॥
कल्कश्चैतसकल्कोक्तद्रव्यैः सार्द्धञ्च पादिकः।
नित्यं युञ्जातकाप्राप्तौ तालमस्तकमिष्यते॥ १७॥

---

फलानि; श्रेयसीं हस्तिपिप्पलीम्; आढकी तुवरी, तस्या बीजं; रौहिषं गन्धतृणभेदं; भूतिकं यमानीं; मदयन्तिकां वनमल्लिकाम्। अत्र पादावशिष्टकषायश्चतुर्गुणः, गोशकृदिति गोशकृद्रसादयश्च घृतसमा, तेनाष्टगुणः पाकः॥ १६॥

महाचैतसे शणस्य मूलं बीजं वा, व्यवहारस्तु बीजेनेति। मागधिका पिप्पली। क्वाथ्यं द्विपलिकं भवेदित्यन्तेन क्वाथः, क्वाथोऽपि पूर्ववत् चैतसक्वाथवत् द्रोणाम्भसा कार्य्यः। विदारीप्रभृति कल्कः। मेदे मेदे द्वे; खर्ज्जूरं खर्ज्जूरस्य फलम्; अभीरु शतावरी; युञ्जातम् औत्तरपथिकः कन्दः, तदभावे तालमस्तकम्। चैतसस्य घृतस्याङ्गैरिति पूर्वोक्तचैतसघृतकल्कैर्विशालात्रिफलादिभिः। चैतसस्येत्यादि कल्याणकस्याङ्गैरिति वक्तव्येऽतिदेशातिदेशकरणम् अत्रोक्तकल्कद्रव्येण सह पादिकार्थम्, अन्यथा कल्याणके तन्मात्रसमन्वितैरिक्तत्वादवापि अन्नमानं प्रसज्येत; अतो विशालात्रिफलत्वादिना कल्केन सह विदारीमधुकादेः कल्कस्य

कुष्माण्डकघृतम्—

कुष्माण्डकरसे सर्पिरष्टादशगुणे पचेत्।
यष्ट्याह्वकल्कं तत्पानमपस्मारविनाशनम् ॥ १८ ॥
ब्राह्मीघृतम्—ब्राह्मीरसे वचाकुष्ठशङ्खपुष्पीभिरेव च।
पुराणं मेध्यमुन्मादग्रहापस्मारनुद्घृतम् ॥ १९ ॥

पलङ्कषाद्यं तैलम्—

पलङ्कषावचापथ्या वृश्चिकाल्यर्कसर्षपैः।
जटिलापूतनाकेशीनाकुलीहिङ्गुचोरकैः ॥
लशुनातिरसाचित्राकुष्ठैर्विड्भिश्च पक्षिणाम्।
मांसाशिनां यथालाभं वस्तमूत्रे चतुर्गुणे ॥
सिद्धमभ्यञ्जने तैलमपस्मारविनाशनम् ॥ २० ॥
अभ्यङ्गः सार्षपं तैलं वस्तमूत्रे चतुर्गुणे।
सिद्धं स्याद्गोशकृन्मूत्रैः स्नानोत्सादनमेव च ॥ २१ ॥

इत्यपस्मारचिकित्सा।

---

मिलित्वा घृतात् पादिकत्वं ज्ञेयम्, अतएव वक्ष्यति कल्कश्चैतसकल्कोक्तद्रव्यैः सार्द्धं पादिकमिति ॥ १७ ॥

कुष्माण्डकघृत स्पष्टम् ॥ १८ ॥

ब्राह्मीघृते चतुर्गुणे ब्राह्मीरसे घृतपाकः ॥ १९ ॥

पलङ्कषेत्यादि।—पलङ्कषा गुग्गुलुः ; जटिला मांसी। पूतनाकेशी भूतकेशी इति केचित् ; अन्ये तु पूतना हरीतकीभेदः, केशी भूतकेशीत्याहुः ; जतुकर्णे गोलोमी पठ्यते, न तु पूतना। नाकुली महापैशाचिका व्यवहृता। अतिरसा जलयष्टिमधु, अन्ये तु ज्योतिष्मतीत्याहुः, जतुकर्णे मधुकमिति। चित्रा दन्ती। मांसाशिना पक्षिणामिति गृध्रादीनाम् ॥ २० ॥

अभ्यङ्ग इत्यादि।—अकल्कमिदं तैलम्। गोशकृता उत्सादनमुत्वर्त्तनं गोमूत्रेण स्नानमिति यथायोग्यतया बोध्यम् ॥ २१ ॥

इत्यपस्मारचिकित्साविवृतिः।

## अथ वातव्याधिचिकित्सा।

स्वाद्वम्ललवणैः स्निग्धैराहारैर्वातरोगिणः।
अभ्यङ्गस्नेहवस्त्याद्यैः सर्वानेवोपपादयेत् ॥ १ ॥
विशेषतस्तु कोष्ठस्थे वाते क्षारं पिबेन्नरः ॥ २ ॥
आमाशयस्थे शुद्धस्य यथादोषहरी क्रिया ॥ ३ ॥
आमाशयगते वाते छर्दिताय यथाक्रमम्।
देयः षड्धरणो योगः सप्तरात्रं सुखाम्बुना ॥
चित्रकेन्द्रयवाः पाठा कटुकातिविषाभया।
महाव्याधिप्रशमनो योगः षड्धरणः स्मृतः।

---

वातविशेषस्याक्षेपकादेरपस्मारवद्वेगकर्तृत्वात् तथा प्रायस्तुल्यचिकित्सितत्वाच्चापस्मारानन्तरं वातव्याधिरुच्यते। यद्यपि वातव्याधिरित्युक्ते प्रकृतौ विकृतौ वा वायाति प्रसङ्ग, तथापि व्याधिपदसामानाधिकरण्याद्विकृतौ दुःखकारी वातो व्याधिरित्यर्थो ज्ञेय। ननु वातव्याधिवत् पित्तकफविकारा अपि तृष्णाशोषतृष्णादयः किमिति पृथक्करणेन नोच्यन्ते? नैवम्, वायोर्गतिदत्त्वेन गरीयस्त्वात्, तद्विकाराणामेव तु दुःसाध्यत्वात् आश्वात्ययकरत्वात् विशिष्टचिकित्सितत्वाच्च पृथक्करणेनाभिधानं युक्तम्। कफपित्तविकाराणान्तु यथाविधित्वात् विरेचनवमनादि कफपित्तसामान्यचिकित्सोक्त्या चिकित्सोक्तेति ज्ञेया। साधारणचिकित्सामाह स्वाद्वम्लेत्यादि ॥ १ ॥

विशेषत इत्यादौ।—क्षारं यवक्षारं किंवा ग्रहण्यध्यायनिर्दिष्टं दीपनक्षारम्। आमाशयस्थ इत्यादि।—शुद्धस्य वमनविरेचनादिना शुद्धस्य ॥ २। ३ ॥

आमाशयगत इत्यादि।—सुश्रुतस्य। छर्दिताय यथाक्रममिति स्नेहस्वेदपेयादिक्रमानतिक्रमेण, वातस्यापि कफस्थानगतत्वेन। यदुक्तं "स्थानात् स्थानगतं दोषं स्थानवत् समुपाचरेत्" इति ॥ षड्धरणयोगो महाव्याधिप्रशमन इति मेदःकफावृतव्याधिः महाव्याधिः। षड्धरण इति षण्णां चित्रकादीनां प्रत्येकं धरणं पलदशमांशरूपं मानं यत्र स तथा; एतदेवाह पलदशमांशो धरणमिति। ननु पलद्रव्यव्यवस्थापि चरकसुश्रुतमतभेदेन द्विधोक्ता, तदिह चरकस्य पलस्य दशमांशो धरणम्, इत्यत आह योगोऽयमिति; अयं चित्रकेत्यादियोगः सौश्रुत इति कृत्वा तस्य सुश्रुतस्य पञ्चगुञ्जकमानेन माषेण यत् पलं भवति तस्यैव पलस्य दशमो भागः

पलदशमांशो धरणं योगोऽयं सौश्रुतस्ततस्तस्य ।
माषेण पञ्चगुञ्जकमानेन प्रत्यहं देयः ॥ ४ ॥
पक्काशयगते वाते हितं स्नेहविरेचनम् ।
वस्तयः शोधनीया याः प्राशाश्च लवणोत्तराः ॥ ५ ॥
स्नेहलवणम् । स्नुहीलवणवार्त्ताकुस्नेहांश्छन्ने घटे दहेत् ।
गोमयैः स्नेहलवणं तत्परं वातनाशनम् ॥ ६ ॥
कार्य्यो वस्तिगते चापि विधिर्वस्तिविशोधनः ॥ ७ ॥
त्वङ्मांसासृक्शिराप्राप्ते कुर्य्याच्चासृग्विमोक्षणम् ॥ ८ ॥

---

प्रत्येकं चित्रकादीनां षण्णां प्रत्यहं सप्तदिनं यावद्देय इत्यर्थः । एवञ्च पञ्चगुञ्जकमानानुसारात् पलदशमांशेन रक्तिद्वयाधिकपञ्चमाषका भवन्ति, षड्भिर्धरणैश्च मिलित्वा पञ्चरक्तिकमाषानुसारेण सरक्तिद्वयपञ्चमाषाधिककर्षद्वयं स्यात्; एतदेव व्यवह्रियमाणेन दशरक्तिकमाषेण सरक्तिद्वयमाषत्रयाधिककर्षमानं भवति तादृशानञ्च प्रत्यहमेव सप्तरात्रं यावत् देयम् । उत्सर्गतो हि कर्षश्चूर्णस्य देयो भवति, अत सरक्तिद्वयमाषकत्रयाधिककर्षग्रहणार्थं विशेषवचनमेवेति ॥ ४ ॥

वस्तयः शोधनीया या इति शोधनवस्तयः; यथा "शोधकद्रव्यनिःक्वाथास्तत्कल्कस्नेहसैन्धवैः । युक्ताः खजेन मथिता वस्तयः शोधना मताः" इति । प्राशाश्च लवणोत्तरा इति लवणप्रधाना आहाराः, शिवा लवणोत्तराः प्राशाः स्नेहलवणकल्याणलवणादयः ॥ ५ ॥

तदेव स्नेहलवणमाह स्नुहीत्यादि ।—अत्र लवणानि पञ्च, स्नेहाश्चत्वारः, छन्न इति शरावादिपिहिते लिप्तमुखे । गोमयैरिति स्नुहीपञ्चलवणवार्त्ताकुफलानि तदनु घृततैलवसामज्जभिः स्निग्धीकृत्य घटे कृत्वा मुखमालिप्य गोमयाग्निना दग्धव्यानि, अतः कोष्ठं विभज्य उपयोज्यानि ॥ ६ ॥

विधिर्वस्तिविशोधन इति मूत्राघाताश्मरीचिकित्साविधिः । त्वगित्यादि ।—अत्र त्वङ्मांसादिगतवाते रक्तमोक्षणरूपमेकमेव चिकित्सितम् आवरकरक्तव्यपगमतया बोध्यम् । अन्ये स्नेहाभ्यङ्गोपनाहांश्च मर्दनालेपनानि चेति सुश्रुतवाक्यस्य त्वङ्मांसासृक्शिराप्राप्त इत्यनेन सह सम्बन्धं विदधति । ततश्च त्वङ्मांसासृग्गतवाते स्नेहाभ्यङ्गादिकम्, रक्तगतवाते तु योग्यतया रक्तमोक्षणमेवेत्याहुः ॥ ७ । ८ ॥

स्नेहोपनाहाग्निकर्मबन्धनोन्मर्दनानि च ।
स्नायुसन्ध्यस्थिसम्प्राप्ते कुर्य्याद्वाते विचक्षणः ॥ ९ ॥
स्वेदाभ्यङ्गावगाहांश्च हृद्यञ्चान्नं त्वगाश्रिते ॥ १० ॥
शीताः प्रदेहा रक्तस्थे विरेको रक्तमोक्षणम् ॥ ११ ॥
विरेको मांसमेदःस्थे निरूहाः शमनानि च ॥ १२ ॥
बाह्याभ्यन्तरतः स्नेहैरस्थिमज्जगतं जयेत् ॥ १३ ॥
हर्षोऽन्नपानं शुक्रस्थे बलशुक्रकरं हितम् ।
विबद्धमार्गं शुक्रन्तु दृष्ट्वा दद्याद्विरेचनम् ॥ १४ ॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम् ।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पयः ॥ १५ ॥
शिरोगतेऽनिले वातशिरोरोगहरी क्रिया ॥ १६ ॥
व्यादितास्ये हनुं स्विन्नामङ्गुष्ठाभ्यां प्रपीड्य च ।
प्रदेशिनीभ्याञ्चोन्नम्य चिबुकोन्नामनं हितम् ॥ १७ ॥

---

स्नेहोपनाहेत्यादिना स्नायुसन्ध्यस्थिगतवातचिकित्सामाह ॥ ९ ॥

स्वेदाभ्यङ्गेत्यादिना रसगतानिलचिकित्सामाह । हृद्यमित्यत्र स्पष्टमिति जेज्जडः पठति, किन्त्वत्र त्वक्शब्देन त्वक्स्थत्वाद्रस उच्यते, त्वगाश्रयित्वञ्च रसस्य सर्वगत्वाद्भवति । अतएव धातुगतकुष्ठाभिधाने त्वग्गतत्वेनैव रसगतत्वमुक्तमिति कृत्वा रसगतकुष्ठलक्षणं सुश्रुतेनोक्तम् । अतो रसस्य विशेषेण हृदयाश्रितत्वात् हृद्यमेव पाठो युक्त इत्याहुः । शीताः प्रदेहा इति शीतप्रदेहादिरूपचिकित्साकथनार्थमिह लिखितम्, तेन त्वङ्मांसासृगित्यादिसुश्रुतवचनेन पूर्वोक्तेनास्य पौनरुक्त्यं नाशङ्कनीयम् ॥ १० । ११ ॥

मेदःस्थानिलचिकित्सामाह विरेक इत्यादि । मज्जगतानिलचिकित्सामाह बाह्येत्यादि ॥ १२ । १३ ॥

शुक्रस्थानिलचिकित्सामाह हर्ष इत्यादि ।— हर्ष इति मदनम. ॥ १४ ॥

गर्भ इत्यादौ ।— मधुक-काश्मर्य्यफलाभ्यां दुग्धं साध्यं, सिता तु प्रक्षेपणीया ; केचित् तु सितादिदुग्धं साध्यमित्याहुः । उत्थापने पुष्टिजनने ॥ १५ । १६ ॥

व्यादितास्य इत्यादि ।—व्यादितास्ये विवृतास्ये प्रदेशिनौ अङ्गुष्ठानन्तराङ्गुली ।

अर्दिते नवनीतेन खादेन्माषेण्डरीं नरः ।
क्षीरमांसरसैर्भुक्त्वा दशमूलीरसं पिबेत् ॥
स्नेहाभ्यङ्गशिरोवस्तिपाननस्यपरायणः ।
अर्दितं स जयेत् सर्पिः पिबेदौत्तरभक्तिकम् ॥ १८ ॥
पञ्चमूलीकृतः क्वाथो दशमूलीकृतोऽथवा ।
रूक्षः स्वेदस्तथा नस्यं मन्यास्तम्भे प्रशस्यते ॥ १९ ॥
वाताद्वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥ २० ॥

कल्याणकलेहः—

सहरिद्रा वचा कुष्ठं पिप्पली विश्वभेषजम् ।
अजाजी चाजमोदा च यष्टीमधुकसैन्धवम् ॥
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
तच्चूर्णं सर्पिषालोड्य प्रत्यहं भक्षयेन्नरः ॥
एकविंशतिरात्रेण भवेच्छ्रुतिधरो नरः ।
मेघदुन्दुभिनिर्घोषो मत्तकोकिलनिस्वनः ॥
जडगद्गदमूकत्वं लेहः कल्याणको जयेत् ॥ २१ ॥
वक्षस्त्रिकस्कन्धगतं वायुं मन्यागतं तथा ।
वमनं हन्ति नस्यञ्च कुशलेन प्रयोजितः ॥ २२ ॥

---

उपन्येत्यत्र चिबुकमिति शेषः । माषेण्डरी माषपिष्टकविकृतिः । माषेण्डरीभक्षणानन्तरं क्षीरमांसरसैरन्नं भुक्त्वा ततो दशमूलीजलं पिबेदित्यर्थः । औत्तरभक्तिकमिति भोजनानन्तरकालीयम् ॥ १७ ॥ १८ ॥

पञ्चमूलीत्यादि स्पष्टम् । वातादित्यादौ ।—वाग्धमनी वाग्वाहिनी धमनी ॥१९॥२०॥

सहरिद्रेत्यादौ ।—अजाजी कृष्णजीरकम् ; अजमोदा यमानी ; यष्टिमधुशब्देन ब्रह्मयष्टीति श्रीकण्ठदत्तो व्याचष्टे, तत्तु न व्यवहारसिद्धं वापि टीकान्तरे दृष्टमिति ॥ २१ ॥

वक्ष इत्यादि ।—मन्युस्तस्य । त्रिकमिह अंसद्वयान्तरसन्धिः, स हि श्लेष्मस्थानं तद्गत एव वाते वमनं नस्यञ्च यौगिकम् । नस्यमिह शिरोविरेचनमिति । कुशलेन प्रयोजितमिति विशेषणात् प्रतिमर्षं विना चतुर्विधमप्यत्र नस्यमित्येके ॥ २२ ॥

माषबलादि:—

माषबलाशूकशिम्बीकत्तृणरास्नाश्वगन्धोरुबूकाणाम्।
क्काथो नस्यनिपीतो रामठलवणान्वित: कोष्ण:॥
अपहरति पक्षवातं मन्यास्तम्भं सकर्णनादरुजम्।
दुर्जयमर्दितवातं सप्ताहाज्जयति चावश्यम्॥ २३॥
दशमूलीबलामाषक्काथं तैलाज्यमिश्रितम्।
सायं भुक्त्वा पिबेन्नस्यं विश्वच्यामवबाहुके॥ २४॥
मूलं बलायास्त्वथ पारिभद्रात् तथात्मगुप्तास्वरसं पिबेद्वा।
नस्यन्तु यो मांसरसेन कुर्य्यान्मासादसौ वज्रसमानबाहु:॥२५॥
माषात्मगुप्तकैरण्डवाट्यालकशृतं पिबेत्।
हिङ्गुसैन्धवसंयुक्तं पक्षाघातनिवारणम्॥ २६॥
बाहुशोषे पिबेत् सर्पिर्भुक्त्वा कल्याणकं महत्॥ २७॥
हृदि प्रकुपिते वाते चांशुमत्या: पयो हितम्॥ २८॥

---

माषबलेत्यादि।—अत्र कत्तृण गन्धतृणम्, अश्वगन्धाया मूलम्। क्काथमात्रा चात्र मुखेन पेयक्काथतुल्या, यस्तु तावन्त क्काथं नासिकया पातु न शक्नोति, तमसौ स्तोकस्त्याज्य:। रामठं हिङ्गु, तस्य रक्तिकाद्वयं सैन्धवस्य तु माषकद्वयं प्रक्षिपन्ति वृद्धा:। यस्मिन् पार्श्वे पीडा तत्पार्श्वनासापुटेन भोजनसमाप्तौ सायकाले शक्त्यनुरूपं पेयश्चायं क्काथ.॥ २३॥

दशमूलीत्यादौ।—तैलाज्यमिश्रितमिति तैलाज्यं प्रक्षेपणीयम्। भुक्त्वेति भोजनानन्तरं सायकाले शक्त्यनुरूपं नासिकया पिबेत॥ २४॥

मूलमित्यादि।—मूलं बलाया इत्येको योग:, पारिभद्रास्य मूलमिति द्वितीय:, अनयो: स्वरस: क्काथो वा। आत्मगुप्तास्वरसं पिबेदिति तृतीय.; पानमेषां नासिकया। नस्यन्तु यो मांसरसेनेति चतुर्थ। अत्र तैलसैन्धवे प्रक्षिपन्ति वृद्धा:, अन्ये सैन्धवचूर्णमात्रं प्रक्षिपन्ति। नस्यन्तु यो मासरसेनेत्यत्र तयोर्मांसरसेनेति पठित्वा विश्वच्यववाहुकयोरिति व्याख्यानयन्त्येके॥ २५॥

माषेत्यादि वचनं स्पष्टम्॥ २६॥

हरीतकी वचा रास्ना सैन्धवञ्चाम्लवेतसम्।
घृतमात्रासमायुक्तमपतानकनाशनम्॥ २८॥

रसोनपिण्डः—

पलमर्द्धपलञ्चैव रसोनस्य सुकुट्टितम्।
हिङ्गुजीरकसिन्धूत्थैः सौवर्चलकटुत्रयैः॥
चूर्णितैर्माषकोन्मानैरवचूर्ण्य विलीड़ितम्।
यथाग्नि भक्षितं प्रातारुबुक्वाथानुपानतः॥
दिने दिने प्रयोक्तव्यं मासमेकं निरन्तरम्।
वातरोगं निहन्त्याशु अर्दितं सापतन्त्रकम्॥
एकाङ्गरोगिणे चैव तथा सर्वाङ्गरोगिणे।
ऊरुस्तम्भे च गृध्रस्यां क्रिमिकोष्ठे विशेषतः।
कटीपृष्ठामयं हन्यादुदरञ्च विशेषतः॥ ३०॥
हन्ति प्राग्भोजनात् पीतं दध्यम्लं सवचोषणम्।
अपतानकमन्योऽपि वातव्याधिक्रमो हितः॥ ३१॥
वातघ्नैर्दशमूल्या च नवं कुब्जमुपाचरेत्।

---

वाङ्गशोष इत्यादौ।—महत कल्याणकम् उन्मादाधिकारोक्तम्। हदीत्यादौ।—अंशुमती शालपर्णी, तया सिद्ध पय इत्यर्थ.॥ २७॥ २८॥

हरीतकीत्यादि।—क्वाथेन चूर्णेन वायं योग। क्वाथपक्षे सैन्धवघृते प्रक्षिपेत, चूर्णपक्षे घृतकर्षद्वयेन चूर्णस्याष्टौ माषका पेया इत्यर्थः॥ २९॥

पलमर्द्धपलमित्यादि।—पलमर्द्धपल वेति सार्द्धपलम् एव वाशब्दो पूर्वयोगापेक्षया, इवार्थे वाशब्दो वा। पलमर्द्धपलञ्चैवेत्यपि पाठः। त्वगादिरहितपिष्टरसोनस्य किञ्चिदातपेन शुष्कस्य सार्द्धपलमेक, माषकाष्टकं माषकदशकं वा प्रतिदिनं सेवनीयम्। अनयैव मात्रया मासमेकं सेवनोपयुक्तं न स्यात् अतः पुनरपि रसोनपिण्ड करणीयः। न च वाच्य यावत्या मात्रया मासोपयोगो भवति तावत्येव मात्रा किमिति न दर्शितेति, यतस्तथा सति वीर्य्यहानिः स्यादित्याहुः॥ ३०॥

हन्तीत्यादौ।—सवचोषणमिति वचामरिचचूर्णसहितमित्यर्थः॥ ३१॥

...र्मांसरसैर्वापि प्रवृद्धं तं विवर्जयेत् ॥ ३२ ॥
पिप्पल्यादिरजस्तूर्णीप्रतितूल्यो: सुखाम्बुना ।
पिबेद्वा स्नेहलवणं सघृतं क्षारहिङ्गु वा ॥ ३३ ॥
आध्माने लङ्घनं पाणितापश्च फलवर्त्तय: ।
दीपनं पाचनञ्चैव वस्तिश्चाप्यत्र शोधन: ॥ ३४ ॥
प्रत्याध्माने तु वमनं लङ्घनं दीपनं तथा ॥ ३५ ॥
प्रत्यष्ठीलाष्ठीलिकयोरन्तर्विद्रधिगुल्मवत् ॥ ३६ ॥
दशमूलीबलारास्नागुडूचीविश्वभेषजम् ।
पिबेदेरण्डतैलेन गृध्रसीखञ्जपङ्गुषु ॥ ३७ ॥
शेफालिकादलै: क्वाथो मृद्वग्निपरिसाधित: ।
दुर्वारं गृध्रसीरोगं पीतमात्रं समुद्धरेत् ॥ ३८ ॥
पञ्चमूलीकषायन्तु रुबुतैलं त्रिवृद्घृतम् ।
त्रिवृत्तैलाथवा युक्तं गृध्रसीगुल्मशूलनुत् ॥ ३९ ॥
तैलं घृतं वार्द्रकमातुलुङ्गोरसं सचुक्रं सगुडं पिबेद्वा ।

---

वातघ्नैरिति भद्रदार्वादिगणै: ; दशमूली च विख्यातैव गणत्वात् ; एतै: क्वाथस्नेहोपनाहादिकं कुर्यात् । नवत्वन्तु कुब्जस्य यावत् न रुजावृद्धिरिति ॥ ३२ ॥

पिप्पल्यादिगण: सौश्रुत: । रजश्चूर्णम् । स्नेहलवणञ्च स्नुहीलवणवार्त्ताकस्नेहानित्यादिना पूर्वमुक्तम्, इदमपि सुखाम्बुनैव पिबेदिति । सघृतं क्षारहिङ्गुवेति घृतेनैव यवक्षारहिङ्गुनोश्च पानम् । घृतस्य कर्षकं, यवक्षारस्य चतुर्माषकं, हिङ्गुन: षड्रक्तिकमिति । दीपनं पाचनञ्चेति लङ्घनानन्तरं दोषशेषशमनार्थं दीपनं पाचनञ्च भेषजं देयम् ॥ ३३ ॥ ३४ ॥

प्रत्याध्माने तु वमनमिति प्रत्याध्मानस्यामाशयसमुत्थत्वात् ॥ ३५ ॥ ३६ ॥

दशमूलीत्यादि ।—दशमूल्यादीनां क्वाथे एरण्डतैलं प्रक्षेप्यम् ॥ ३७ ॥

शेफालिकेत्यादि वचनं स्पष्टम् ॥ ३८ ॥

पञ्चमूलीत्यादि ।—पञ्चमूली महती ॥ ३९ ॥

तैलं घृतं वेत्यादौ ।—आर्द्रकरसमातुलुङ्गफलरसचुक्रगुडादीनां तुल्यो भाग:,

कण्ठ्युरुपृष्ठत्रिकगुल्मशूलगृध्रस्युदावर्त्तहरः प्रदिष्टः ॥ ४० ॥

तैलमेरण्डजं वापि गोमूत्रेण पिबेन्नरः ।
मासमेकं प्रयोगोऽयं गृध्रस्युरुग्रहापहः ॥ ४१ ॥
गोमूत्रैरण्डतैलाभ्यां कृष्णा पीता सुचूर्णिता ।
दीर्घकालोत्थितां हन्ति गृध्रसीं कफवातजाम् ॥ ४२ ॥
अश्नाति यो नरः सिद्धामेरण्डतैलसाधिताम् ।
वार्त्ताकुं गृध्रसीचोग्रः पूर्वामाप्नोत्यसौ गतिम् ॥ ४३ ॥
पिष्ट्वैरण्डफलं चीरे सविश्वं वा फलं रुवोः ।
पायसो भक्षितः सिद्धो गृध्रसीकटिशूलनुत् ॥ ४४ ॥
रास्नायास्तु पलञ्चैकं कर्षान् पञ्च च गुग्गुलोः ।
सर्पिषा गुडिकां कृत्वा खादेद्वा गृध्रसीहराम् ॥ ४५ ॥
गृध्रस्यार्त्तं नरं सम्यक् पाचनाद्यैर्विशोधितम् ।

---

त्रेण घृत वा दत्त्वा पिबेदिति। पिबेदिति वाशब्दः पूर्वयोगापेक्षया, किंवा तेन मेव सचक्रगुडमित्येको योग, तथा घृतमपि सचक्रगुडमिति द्वितीय, तथा मिलिताद्र्रकरस मातुलुङ्गीरसोऽपि सचक्रगुड इति तृतीयो योग। मातुलङ्गी मधुकर्कटी ॥ ४० ॥

तैलमेरण्डजमित्यादि।—योगोऽय विरेचकत्वेनाल्पमात्रया प्रत्यहं मास यावदपयोज्य। भूरिमात्रोपयोगे तु बलहानि स्यात, तत्र गोमूत्रस्य पल किञ्चिन्यून वा, तथा एरण्डतैलमपि माषकाष्टक किञ्चिन्यून वा कोष्ठाद्यपेक्षया प्रत्यहं मास यावदपयोज्यम् ॥ ४१ ॥

गोमूत्रैरण्डतैलाभ्यामित्यादि।—गोमूत्रैरण्डतैलयोर्मिलित्वा कर्षद्वयम, पिप्पलीचूर्णस्य माषकचतुष्टयमिति व्यवहरन्ति वृद्धा ॥ ४२ ॥

अश्नातीत्यादौ।—एरण्डतैलसाधिता सम्भर्जितामित्यर्थ. ॥ ४३ ॥

पिष्टेत्यादि।—त्वग्रहितमेरण्डबीज कर्ष किञ्चित्तण्डुलान् दत्त्वा चीरेण विरेचनार्थं पायस साध्य। सविश्व वेति पूर्वयोगापेक्षया वाशब्द, अत्रापि किञ्चित्तण्डुलादीन् दत्त्वा शुण्ठ्येरण्डफलाभ्या पिष्टाभ्या कर्षाद्धं वा कर्षायुष्ठ्योरित्यादि परिभाषया पायस साध्य ॥ ४४ ॥

ज्ञात्वा नरं प्रदीप्ताग्निं वस्तिभिः समुपाचरेत् ॥ ४६ ॥
नादौ वस्तिविधिं कुर्य्याद् यावदूर्द्धं न शुध्यति।
स्नेहो निरर्थकस्तस्य भस्मन्येव हुतिर्यथा ॥ ४७॥
गृध्रस्यार्त्तस्य जङ्घायाः स्नेहस्वेदे कृते भृशम्।
पद्भ्यां निर्मर्दितायाश्च सूक्ष्ममार्गेण गृध्रसीम् ॥
अवतार्य्याङ्गुली सम्यक् कनिष्ठायां शनैः शनैः।
ज्ञात्वा समुन्नतं ग्रन्थिं कण्डरायां व्यवस्थितम्।
तं शस्त्रेण विदार्य्याशु प्रवालाङ्कुरसन्निभम्।
समुद्धृत्याग्निना दग्ध्वा लिम्पेद् यष्ट्याह्वचन्दनैः ॥
विध्येत् शिरामिन्द्रवस्तेरधस्ताच्चतुरङ्गुले।
यदि नोपशमं गच्छेद्दहेत् पादकनिष्ठिकाम् ॥ ४८ ॥
तगरस्य शिफां साद्रीं पिष्ट्वा तक्रेण यः पिबेत्।
वङ्क्षणानिलरोगार्त्तः स क्षणादेव मुच्यते ॥ ४९ ॥
दशमूलीकषायेण पिबेद् वा नागराम्भसा।
कटीशूलेषु सर्वेषु तैलमेरण्डसम्भवम् ॥ ५० ॥
विश्वच्यां खञ्जपङ्गोश्च दाहे हर्षे च पादयोः।
क्रोष्टुशीर्षे विकारे च विकारे वातकण्टके।

---

गम्भाया इत्यादि।—खादन्तु माषकाष्ठकम्, तप्तजलमनुपानम् ॥ ४५। ४६ ॥

नादौ वस्तिविधिं कुर्य्यादित्यादौ।—यावदूर्द्धं न शुध्यतीति, ऊर्द्धमित्यत्र पक्वाशयादि'ति शेषः, तेन यावद्विरेकवमनाभ्यां आमाशयौ न शुध्यतीत्यर्थः ॥ ४७ ॥

गृध्रसीत्यादि।—जङ्घायाः सकाशात् गृध्रसीं कनिष्ठायामङ्गुलौ अवतार्य्येति योजना। कण्डरा कनिष्ठाङ्गुलिसंहता स्थूलशिरा। इन्द्रवस्तिरिह गल्फजङ्घयोः मध्यदेशः ॥ ४८ ॥

तगरस्येत्यादि।—तगरं पिण्डतगरः ॥ ४९ ॥

दशमूलीत्यादि।—दशमूलीक्वाथ-नागरक्वाथौ एरण्डतैलं प्रक्षिप्य पिबेत्। नागराम्भ इति अत्यन्तसामतायां बोध्यम् ॥ ५० ॥

शिरां यथोक्तां निर्विध्य चिकित्सा वातरोगनुत् ॥ ५१ ॥
शिराव्याधः पाददाहे वातकण्टकवत् क्रिया ॥ ५२ ॥
शतधौतघृतोन्मिश्रैर्नागकेशरकण्टकैः ।
पिष्टैः प्रलेपः सेकश्च दशमूल्यम्बुनेष्यते ॥ ५३ ॥
आलिप्य नवनीतेन खेदो हस्तादिदाहहा ।
अग्नितप्तेष्टकाखण्डं काञ्जिकैः परिषिच्य तु ।
तद्वाष्पस्वेदनं कार्य्यं पादहर्षविनाशनम् ॥ ५४ ॥
दशमूलस्य निर्य्यूहो हिङ्गुपुष्करसंयुतः ।
शमयेत् परिपीतस्तु वातं झिञ्झिनिसंज्ञितम् ॥ ५५ ॥
गुग्गुलुं क्रोष्टुशीर्षे च गुडूचीत्रिफलाम्भसा ।
क्षीरेणैरण्डतैलं वा पिबेद्वा वृद्धदारकम् ॥ ५६ ॥
रक्तावसेचनं कुर्य्यादभीक्ष्णं वातकण्टके ।
पिबेदेरण्डतैलं वा दहेत् सूचीभिरेव वा ॥ ५७ ॥
कुष्ठसैन्धवयोः कल्कश्चुक्रतैलसमन्वितः ।
सुखोष्णो मर्द्दने योज्यः खल्लीमूलनिवारणः ॥
खल्ल्यां स्निग्धाम्ललवणैः स्वेदमर्दोपनाहनम् ॥ ५८ ॥

आदित्यपाकगुग्गुलुवटकः—

पृथक् पलांशा त्रिफला पिप्पली चेति चूर्णितम् ।

---

शिरां यथोक्तामिति शिराव्यधविध्यनतिक्रमेण वातकोपभयादल्पमल्पश्च रक्तं स्राव्यम् । खञ्जपङ्ग्वादौ देशी गोक्षरसेन खञ्जादिष्वपि रक्तावृतवातवेदनायां जङ्घादिसन्धिगतैव शिरा व्यध्या भवतीति भानुमती ॥ ५१—५५ ॥

गुग्गुलुमित्यादि ।—एरण्डक्वाथेन त्रिफलाक्वाथेन वा शोधयित्वा गुग्गुलुर्पात । अत एरण्डतैलेन पिष्टा गुग्गुलुः प्रक्षेप्यः । क्षीरेणेत्यादि चतुर्गुणेन दुग्धेन एरण्डतैलं पेयम्, "बहुदोषे विरेकार्थं जीर्णे क्षीरान्नभोजनम्" इत्यादि वाग्भटदर्शनात् । पिबेद्वा वृद्धदारकमिति अत्रापि क्षीरेणेति योज्यम् ॥ ५६ । ५७ ॥

खल्ल्यामित्यादौ अम्लमिति काञ्जिकम् । ५८ ।

दशमूलाम्बुना भाव्यं त्वगेलार्द्धपलान्वितम् ॥
दत्त्वा पलानि पञ्चैव गुग्गुलोर्वटकीकृतः।
एष मांसरसाभ्यासाद्वातरोगान् विशेषतः।
हन्ति सन्ध्यस्थिमज्जस्थान् वृत्रमिन्द्राशनिर्यथा ॥
भाव्यद्रव्यसमं क्वाथ्यं क्वाथोऽष्टांशस्तु तेन च।
आर्द्रं यावद्दिनं भाव्यं सप्ताहं भावनाविधिः ॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलुः—

आभाश्वगन्धा हवुषा गुडूची
शतावरी गोक्षुरवृद्धदारकम्।
रास्ना शताह्वा सशटी यमानी
सनागरा चेति समैश्च चूर्णम् ॥
तुल्यं भवेत् कौशिकमत्र मध्ये
देयं तथा सर्पिरतोऽर्द्धभागम्।
अर्द्धाक्षमात्रन्त्वथ तत् प्रयोगात्
कृत्वानुपानं सुरयाथ यूषैः ॥
मद्येन वा कोष्णजलेन वाथ
क्षीरेण वा मांसरसेन वापि ॥
कटीग्रहे गृध्रसि बाहुपृष्ठे
हनुग्रहे जानुनि पादयुग्मे।

---

पृथगित्यादौ।—त्वगेलयोर्मिलितार्द्धपलं बोध्यम्; अत्र त्रिफलादिगग्गुल्वन्तं सर्वमेकीकृत्य बोध्यम्। भाव्येत्यादि क्वाथविशेषः। तेनेति अष्टांशशेषक्वाथेनार्द्रं कृत्वा दिनैकं यावद्भाव्यम्, भावनाविधिसमाप्तिस्तु सप्ताहादिति। इयञ्च परिभाषा वाग्भटमतानुसारिणी, तेनास्या अमूलकत्वं नाशङ्कनीयम्। वृन्दस्तु "त्रिफलादिगुणं-चायमालोड्य आतपे स्थितः। दशमूलाम्बुना शोध्यः सप्तवारञ्च गुग्गुलुः" इत्युक्तवान्, तत् पुनरनार्षमिति निश्चयः॥ ५८ ॥

त्रयोदशाङ्गगुग्गुलौ आभमिति स्वनामख्यातं वणिजद्रव्यम्। हवुषा स्वनाम-

सन्धिस्थिते चास्थिगते च वाते
मज्जास्थिते स्नायुगते च कोष्ठे ॥
रोगान् जयेद्वातकफानुविद्धान्
वातेरिताम् हृद्ग्रहयोनिदोषान् ।
भग्नास्थिविद्धेषु च खञ्जवाते
त्रयोदशाङ्गं प्रवदन्ति तज्ज्ञाः ॥ ६० ॥

जित्वावरकमग्रे तु वाते वातहरं हितम् ॥ ६१ ॥
अन्नावृते तदुल्लेखो दीपनं पाचनं लघु ॥ ६२ ॥
सुप्तिवाते त्वसृङ्मोक्षं कारयेद्बहुशो बुधः ।
दिह्याच्च लवणागारधूमैस्तैलविमर्दितैः ॥ ६३ ॥
सर्पिस्तैलवसामज्जपानाभ्यञ्जनवस्तयः ।
स्वेदाः स्निग्धा निवातञ्च स्थानं प्रावरणानि च ॥
रसाः पयांसि भोज्यानि स्वाद्वम्ललवणानि च ।
बृंहणं यत्तु तत् सर्वं कर्त्तव्यं वातरोगिणाम् ॥ ६४ ॥
पटोलफलकैर्यूषो वृष्यो वातहरो लघुः ।
वात्यालककृतो यूषः परं वातविनाशनः ॥ ६५ ॥
बलायाः पञ्चमूलस्य दशमूलस्य वा रसे ।

---

ख्याता । समैरिति समैर्भागैरुपलक्षितम् । तुल्य भवेत कौशिकमिति समुदित सर्वचूर्णसमो गुग्गुलुरित्यर्थः । अतोऽर्द्धभागमिति कौशिकार्द्धभागम । भिषजस्तु यावता घृतेन गुग्गुलो पेषण भवति तावदेव घृत गृह्णन्ति । सुराद्यनुपानभेदो दोषभेदापेक्षया ॥ ६० ॥

सञ्चेपादावृतवातचिकित्सामाह जित्वेति । आवरकमिति वायोरावरको यो दोषस्तम् । तदुल्लेख इति अन्नस्य वमनम् ॥ ६१—६२ ॥

सर्पिरित्यादि क्रियासत्रं चरकस्य ॥ ६४ ॥

पटोलफलकैरित्यादौ, तथा वात्यालककृतो यूष इत्यादौ ।—यूषयोर्नित्वाम्लत्वं द्वयोरपि बोध्या., अन्ये तु केवलयोरेव पटोलफलवात्यालकयोर्यूषावित्याहुः. ॥६५॥

अजाशीर्षाम्बुजानूपक्रव्यादपिशितैः पृथक्॥
साधयित्वा रसान् स्निग्धान् दध्यम्लव्योषसंस्कृतान्।
भोजयेद्वातरोगार्त्तं तैर्व्यक्तलवणैर्नरम्॥ ६६॥
पञ्चमूलीबलासिद्धं क्षीरं वातामये हितम्॥ ६७॥
वाजिगन्धा बलास्तिस्रो दशमूली महौषधम्।
द्वे श्वदंष्ट्रे राम्ना च गणो मारुतनाशनः॥ ६८॥
कोलं कुलत्थं सुरदारु राम्ना माषातसी तैलफलानि कुष्ठम्।
वचाशताह्वे यवचूर्णमम्लान्युष्णानि वातामयिनां प्रदेहः॥६९॥
आनूपवेशवारोष्णप्रदेहो वातनाशनः॥
निरस्थि पिशितं पिष्टं स्विन्नं गुडघृतान्वितम्।
कृष्णामरिचसंयुक्तं वेशवार इति स्मृतः॥ ७०॥

---

बलाया इत्यादि।—बलादिभिस्त्रिभिः साधनद्रव्यैरजाशीर्षादयश्च चत्वारः पृथक् साध्याः, तेन द्वादश रसा भवन्ति। बलादिभिरर्द्धशतं कृत्वा तेन मांसरसः करणीय इत्याहुः। अन्ये तु प्रास्थिकेऽम्भसि कर्षमानं बलामूलमनुरूपमजाशीर्ष-मांसञ्च प्रक्षिप्य पाचनीयम्, परिशिष्टे पलचतुष्टये सति वस्त्रेण स्रावयित्वा परि-भर्जनीयम्, तदनु सैन्धवाम्लदधित्रिकटून्यनुरूपाणि दत्त्वा संस्कार्य्यम्। एवं स्वल्पपञ्च-मूलेन च साधनम्। अजाशीर्षवत् कूर्मकर्कटाद्यम्बुजानां मांसेन, तथा महिष-वराहादीनामानूपानां मांसेन, तथा क्रव्यादानां मांसेन रससाधनं कुर्य्यादिति॥६६॥

पञ्चमूलीत्यादि।—स्वल्पा पञ्चमूली॥ ६७॥

वाजिगन्धेत्यादौ।—बलास्तिस्र इति बला, अतिबला, नागबला चेति ख्याताः। अत्र बला पीतपुष्पा, अतिबला श्वेतपुष्पा, नागबला गोरक्षतण्डुला। श्वदंष्ट्राद्वयं श्वेतरक्तपुष्पभेदात्। गणत्वादनेन सर्वाः क्वाथादिकल्पनाः कार्य्याः॥ ६८॥

कोलमित्यादि।—कोलं बदरफलम्; अतसी तिसीति भाषा; तैलफलं तैल-विशिष्टफलम्। एतानि समभागचूर्णानि काञ्जिकेन पिष्ट्वा तप्तीकृत्य लेपो देयः॥६९॥

आनूपवेशवार इति वराहादिमांसकृतः। तस्य पारिभाषिकीं संज्ञामाह निरस्थीत्याह॥ ७०॥

शाल्वणस्वेदः—

काकोल्यादिः सवातघ्नः सर्वाम्लद्रव्यसंयुतः ।
सानूपमांसः सुस्विन्नः सर्वस्नेहसमाहृतः ।
सुखोष्णः स्पष्टलवणः शाल्वणः परिकीर्त्तितः ॥
तेनोपनाहं कुर्वीत सर्वदा वातरोगिणाम् ॥
वातघ्नो भद्रदार्वादिः काकोल्यादिस्तु सौश्रुतः ।
मांसेनात्रौषधं तुल्यं यावताम्लेन चाम्लता ।
पटुः स्यात् स्वेदनार्थञ्च काञ्जिकाद्यम्लमिष्यते ।
चतुःस्नेहोऽत्र तावान् स्यात् सुस्विन्नत्वं यतो भवेत् ॥
समस्तं वर्गमर्द्धं वा यथालाभमथापि वा ।
प्रयुञ्जीतेति वचनं सर्वत्र गणकर्मणि ॥ ७१ ॥

---

शाल्वणस्वेदमाह काकोल्यादिरित्यादि ।—काकोल्यादिरिति काकोल्यादि गणः । वातघ्न इति भद्रदार्वादिगणस्य संज्ञा । सवाम्लद्रव्यं काञ्जिक-सुरा-सौवीर तुषोदकादि । सानूपमांस इति, आनूपाश्च शूकरादयः । सर्वस्नेहाः सर्पिस्तैल वसामज्जानः । उपनाह इति उष्णबहुलप्रलेपः । उक्तमेव शाल्वणस्वेदं विवृणोति वातघ्न इत्यादि । सौश्रुत इति विशेषणेन सुश्रुतोक्तकाकोल्यादिगणो ग्राह्यः, न पुनरष्टवर्गसंज्ञित इति । तत्र सौश्रुते तु काकोल्यादिर्यथा "काकोल्यौ मधुकामेदे जीवकर्षभकौ सहे । ऋद्धिर्वृद्धिस्तुगाक्षीरा पुण्डरीकं सपद्मकम् । जीवन्ती सामृता शृङ्गी क्षीरीका चेति कर्वचित् । काकोल्यादिरयं पित्तशोणितानिलनाशनः" इति । भद्रदार्वादिर्यथा "भद्रदारु निशे भार्गी वरुणो मेषशृङ्गिका । जटाभिण्टी चार्त्तगलो वरागोक्षुरतण्डुलाः । अर्को श्वदंष्ट्रा गणिका धुस्तूरश्चाश्मभेदकः । वरी स्थिरा पाटलारुक् वर्षाभूर्वसुको यवः । भद्रदार्वादिरित्येष गणो वातविनाशनः" इति । मांसेनात्रौषधं तुल्यमिति काकोल्यादि-भद्रदार्वादिगणद्वयमौषधं मांसेन तुल्यं ग्राह्यम्, यथालाभपक्षेऽपि मांसं तुल्यं देयम्, तेन वातापहम् । वृन्दस्त्वाह "अम्लादिभिश्च संस्काप्य काकोल्यादिरयं विभः" इति । अस्यार्थः—अम्लादिभिः अम्लं स्नेहलवणरसैः संस्कारः कार्य्यः । संस्कारत्वादेव वयं तावन्मात्रं देयं यावदम्लस्निग्ध लवणत्वमात्रं स्यादित्यर्थः । काकोल्यादिस्तथा भद्रदार्वादिस्तथानूपमांसम् एतत्त्रयन्तु

अश्वगन्धाद्यं घृतम्—

अश्वगन्धाकषाये च कल्के क्षीरचतुर्गुणम्।
घृतं पक्वन्तु वातघ्नं वृष्यं मांसविवर्द्धनम्॥ ७२॥

दशमूलाद्यं घृतम्—

दशमूलस्य निर्य्यूहे जीवनीयैः पलोन्मितैः।
क्षीरेण च घृतं पक्वं तर्पणं पवनार्त्तिजित्॥
क्वाथोऽत्र त्रिगुणः सर्पिःप्रस्थः साध्यः पयःसमः॥ ७३॥

छागलाद्यं घृतम्—

आजं चर्मविनिर्मुक्तं त्यक्तशृङ्गखुरादिकम्।
पञ्चमूलीद्वयञ्चैव जलद्रोणे विपाचयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
जीवनीयैः सयष्ट्याह्वैः क्षीरञ्चैव शतावरीम्॥

---

स्कार्य्यम्। संस्कार्य्यत्वादस्य प्राधान्यम्, तेन त्रयमेव संस्कार्य्यत्वात् प्रत्येकं तुल्यभागमिति। यावताम्लेन चाम्लत पट्वी स्यादिति पटुशब्दात् ङीप् प्रत्ययः स्यादिति व्यक्त. स्यादिति। काञ्जिकादिशब्दात् सुरासौवीरतुषोदकधान्याम्लदधिमस्त्वम्लकाञ्जिकादीना ग्रहणम्॥ ७१॥

अश्वगन्धाघृते चतुर्गुणक्षीरसाहचर्य्यादश्वगन्धाक्वाथोऽपि चतुर्गुण.। कल्कोऽप्यश्वगन्धाया एव॥ ७२॥

दशमूलघृते दशमूलक्वाथोऽपि त्रिगुणः, क्षीरन्तु स्नेहसममिति चक्रः। जेज्झड़मते तु स्नेहाच्चतुर्गुणः क्वाथः क्षीरं स्नेहसममिति। अस्मिन्नर्थे परिभाषा "एकादिद्रवैर्द्रव्यैः कुर्य्यात् स्नेहचतुर्गुणम्। क्षीरं स्नेहसमं दद्याच्चतुर्भिश्च चतुर्गुणम्" इति। अस्यार्थः—यत्रैको द्रवः तत्र तेनैव चातुर्गुण्यम्, यत्र तु द्वौ वा तत्र द्वाभ्याम्, यत्र त्रयस्तत्र त्रिभिरिति चातुर्गुण्यं मिलित्वा, क्षीरन्तु स्नेहसमम्, चतुर्भिरपि मिलित्वैव चातुर्गुण्यम्, एवं सर्वत्र व्याख्येयम्। जीवनीयैरित्यत्र जीवनीयदशकम्, अनुक्तसंख्यत्वादनेनैव कल्क.॥ ७३॥

आजं चर्मविनिर्मुक्तमित्यादि।—चर्मादिहीनं तरुणच्छागमांसं द्वाविंशत्पलमानं गृहीत्वा, दशमूलञ्च द्वाविंशत्पलमानं जलद्रोणे पक्तव्यमित्याह वृन्दः। चक्रस्तु

छागलाद्यमिदं नाम्ना सर्ववातविकारनुत् ॥
अर्दिते कर्णशूले च बाधिर्य्ये मूकमिन्मिने ।
जड़गद्गदपङ्गूनां खञ्जे गृध्रसिकुब्जयोः ।
अपतानेऽपतन्त्रे च सर्पिरेतत् प्रशस्यते ॥
द्रोणे द्रव्यतुलाप्युत्या स्याच्छागदशमूलयोः ।
पृथक् तुलार्द्धं यष्ट्याह्वद्वयं देयं द्विधोक्षितः ॥ ७४ ॥

एलादितैलम्—एलामुरासरलशैलजदारुकौन्ती-
चण्डाशटीनलदचम्पकहेमपुष्पम् ।
स्थौणेयगन्धरसपूतिदलामृणाल-
श्रीवासकुन्दुरुनखाम्बुवराङ्गकुष्ठम् ॥
कालीयकं जलदकर्कटचन्दनश्री-
जात्याः फलं सविकसं सहकुङ्कुमञ्च ।

---

अजाश्वखुरादिकमिति ग्रहणयोग्यतादर्शनार्थम्, न पुनराकृतिमानग्रहणार्थञ्च ; अत पञ्चाशत्पलानि मांसस्य दशमूलस्य च, अतएव वक्ष्यति द्रोण इति ; एवं मयूरादिषु घृतेष्वपि । वृद्धवैद्यव्यवहारस्त्वाकृतिमानेन । केचित्तु शतवर्य्याः कल्कमाहुः रसस्यानुक्तेः, तदयुक्तम्, यतः कल्कद्रव्यमध्ये नोक्तः ; अतः क्षीरसाहचर्य्येण रसो ग्राह्यः । क्षीर-शतावरीरसौ प्रत्येकं स्नेहसमौ । यष्ट्याह्वद्वयं देय द्विधोक्षित इति स्थलजजलजभेदेन यष्टिमधुद्वयं ग्राह्यमित्यर्थः । वृन्दस्तु "घृते तैले च योगे च यद्द्रव्यं पुनरुच्यते । तज्ज्ञातव्यमिहाचार्य्येण भागतो द्विगुणेन च" इति वचनात् यष्टिमधुनो भागद्वयं ग्राह्यमित्याह । व्यवहारस्तु वृन्दोक्तमतेनैव ॥ ७४ ॥

एलेत्यादि ।—कौन्ती रेणुकम्, चण्डा चोरपुष्पी ; नलदं मांसी ; हेमपुष्पं नागकेशरपुष्पम् ; स्थौणेयं ग्रन्थिपर्णम् ; गन्धरसः स्वनामख्यात ; पूतिः खट्टाशी, दल तेजपत्रम्, अमृणालम् उशीरम् ; श्रीवासो नवनीतखोटिः, कुन्दुरुः कुन्दुरुखोटिः ; नख नखी, अम्बु बालकम् ; वराङ्ग गुडत्वक् ; कर्कटः समुद्रकर्कटक ; चन्दनश्रीः श्वेतचन्दनम्, अन्ये तु श्रीः काष्ठखोटिरित्याहुः ; जात्याः फल जातिफलम्, सविकसमिति विकसा मञ्जिष्ठा ; सहा पिड़िङ्गपुष्पं (पिड़िङ्ग इति

पृक्कातुरुष्कलघु लाभतया विनीय
तैलं बलाक्वथनदुग्धयुतञ्च दध्ना।
सार्द्धं पचेत्तु हितमेतदुदाहरन्ति
वातामयेषु बलवर्णवयःप्रकारि ॥ ७५ ॥

बलाश्वैरीयतैले—

बलानिःक्वाथकल्काभ्यां तैलं पक्वं पयोऽन्वितम्।
सर्व्ववातविकारघ्नमेवं श्वैरीयसाधितम् ॥ ७६ ॥

महाबलातैलम्—

बलामूलकषायस्य दशमूलीकृतस्य च।
यवकोलकुलत्थानां क्वाथस्य पयसा तथा ॥
अष्टावष्टौ शुभा भागास्तैलादेकस्तदेकतः।

---

भाषा), तुरुष्कः सिह्लकः; लघु अगुरु। लाभतयेति यथालाभं द्रव्यं मानञ्च ग्राह्यम्, लभ्यत इति लाभः, कर्मणि घञ्, नेह भावप्रत्ययः। विनीय कल्कीकृत्य। तैलमुत्सर्गेत प्रस्थपरिमितम्, बलाक्वथनं बलाक्वाथः, तस्य च प्रस्थद्वयम्, दुग्धं दधि च प्रत्येकं स्नेहसमम्; एवं मिलित्वा चतुर्गुणः पाकः। अन्ये तु क्वाथश्चतुर्गुणः, दधि दुग्धं प्रत्येकं स्नेहसममित्याहुः। व्यवहारः पुनरनेनैव। इदमेव तैलम् अन्ये पाकभेदेन पठन्ति, यथा,—तिलतैल श: ४, उपचार्थं तिलतैल पल ४, पाकार्थं दधि श: ४, दुग्ध श: ४, कल्कार्थं मञ्जिष्ठा कर्ष १२, इति प्रथमः पाकः। क्वाथार्थं वारियाला मूल पल ३२, पानीय श: ३२, शेष श ८, कल्कार्थं रेणुका चोरहुल गन्धरस गुडत्वक् शठी तेजपत्र उशीर कुड सुधा पृक्का सरल शैलज बला ष्पर प्रत्येकं कर्ष १, इति द्वितीयः पाकः। तृतीयपाके तु कल्कार्थं एलाचि मुरा चम्पककलिका आढकी नागेश्वर गाठियाला खट्टाशी नवनीतखोटी कुन्दुरु नखी श्वेतचन्दनशोधितसमुद्रकर्कट कालीयक जातीफल कङ्कुम सिह्लक अगुरु मांसी कुड एतत् सर्वं चूर्णीकृत्य गन्धोदकेन तैलसमेन तृतीयः पाकः ॥ ७५ ॥

बलातैले बलाक्वाथस्त्रिगुणः, क्षीरन्तु स्नेहसमम्। अन्ये तु बलाक्वाथश्चतुर्गुणः, दुग्धन्तु घृतसममित्याहुः। एवं श्वैरीयतैलम् ॥ ७६ ॥

बलामूलकषायस्येत्यादि।—सुश्रुतस्य। अत्र दशमूलस्य मिलित्वैव क्वाथः, यव-

पचेदावाप्य मधुरं गणं सैन्धवसंयुतम् ॥
तथागुरु सर्जरसं सरलं देवदारु च ।
मञ्जिष्ठां चन्दनं कुष्ठमेलां कालानुशारिवाम् ॥
मांसीं शैलेयकं पत्रं तगरं शारिवां वचाम् ।
शतावरीमश्वगन्धां शतपुष्पां पुनर्नवाम् ॥
तत् साधुसिद्धं सौवर्णे राजते मृण्मयेऽपि वा ।
प्रक्षिप्य कलसे सम्यक् सुनिगुप्तं निधापयेत् ॥
बलातैलमिदं नाम्ना सर्ववातविकारनुत् ।
यथाबलमतो मात्रां सूतिकायै प्रदापयेत् ।
या च गर्भार्थिनी नारी क्षीणशुक्रश्च यः पुमान् ॥
क्षीणवाते मर्म्महतेऽभिहते मथितेऽपि वा ।
भग्ने श्रमाभिपन्ने च सर्वथैवोपयोजयेत् ॥
सर्वानाक्षेपकादींश्च वातव्याधीन् व्यपोहति ।
हिक्काकासमधीमन्थं गुल्मश्वासं सुदारुणम् ॥
षण्मासानुपयुज्यैतदन्त्रवृद्धिमपोहति ।
प्रत्यग्रधातुः पुरुषो भवेच्च स्थिरयौवनः ॥
एतद्धि राज्ञा कर्त्तव्यं राजमात्राश्च ये नराः ।
सुखिनः सुकुमाराश्च धनिनश्चैव ये नराः ॥ ७७ ॥

विष्णुतैलम्—

शालपर्णी पृश्निपर्णी बला च बहुपुत्रिका ।
एरण्डस्य च मूलानि बृहत्योः पूतिकस्य ॥

---

कोलकुलत्थानाञ्च मिलित्वा चपरक्काथश्च, एवं बलाक्वाथेन सह त्रयः क्वाथास्तथा पय श्चेति द्रवचतुष्टयम् । एषां चतुर्णां द्रवाणां प्रत्येकं तैलप्रस्थापेक्षयाष्टगुणो भागः, एवञ्च मिलित्वा तैलात् द्वात्रिंशद् गुणो द्रवो भवति । तैलञ्च मानविशेषानिर्देशात प्रस्थपरिमितमेव ग्राह्यम् । एकत इति एकीकृत्य । आवाप्य मधुरं गणमिति काकोल्यादिगणं कल्कीकृत्य । सैन्धवसंयुतमिति सैन्धवमगुर्वादि च कल्कीकृत्य

गवेधुकस्य मूलानि तथा सहचरस्य च।
एषान्तु पलिकैः कल्कैस्तैलप्रस्थं विपाचयेत्॥
आजं वा यदि वा गव्यं क्षीरं दद्याच्चतुर्गुणम्।
अस्य तैलस्य पक्वस्य शृणु वीर्य्यमतः परम्॥
अश्वानां वातभग्नानां कुञ्जराणां तथा नृणाम्।
तैलमेतत् प्रयोक्तव्यं सर्वव्याधिनिवारणम्॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढो भवेत्।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम्।
कामलापाण्डुरोगघ्नं शर्कराश्मरीनाशनम्॥
क्षीणेन्द्रिया नष्टशुक्रा जरया जर्जरीकृताः।
येषाञ्चैव क्षयो व्याधिरन्त्रवृद्धिश्च दारुणा॥
अर्दितं गलगण्डञ्च वातशोणितमेव च।
स्त्रियो या न प्रसूयन्ते तासाञ्चैव प्रयोजयेत्॥
एतदङ्ग वरं तैलं विष्णुना परिकीर्त्तितम्॥ ७८॥

नारायणतैलम्—

बिल्वाग्निमन्थः श्योणाकः पाटलः पारिभद्रकः।
प्रसारण्यश्वगन्धा च बृहती कण्टकारिका॥
बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा।

---

पक्तव्यम्। कालानुशारिवा तगरपादिका, तदभावे श्रियलौकीपण्ड। तगरं पिण्डतगरमूलं, शारिवा श्यामलता, पुनर्नवान्तः कल्कः। सुनिगुप्तमिति वातातपादिपरिहारेण सुष्ठु रचितम्। तैलमिदं सुश्रुते मूढगर्भे पठितं, तेन सूतिकायै प्रदापयेदिति विशेषेणोक्तम्। अन्त्रवृद्धिमपोहतीति अप्राप्तफलकोषामन्त्रवृद्धिं व्यपोहतीति, प्राप्तफलकोषयोः पुनरसाध्यत्वात्। राजमाषा इति राज्ञ इव माषा परिच्छदो येषां ते तथा॥ ७७॥ ७८॥

नारायणतैले पारिभद्रकः पालितामादार इति प्रसिद्धः; प्रसारणी गन्धभादा

एषां दशपलान् भागांश्चतुर्द्रोणेऽम्भसः पचेत् ॥
पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत्।
शतपुष्पा देवदारु मांसी शैलेयकं वचा ॥
चन्दनं तगरं कुष्ठमेला पर्णीचतुष्टयम्।
रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवम् ॥
एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत्।
शतावरीरसञ्चैव तैलतुल्यं प्रदापयेत् ॥
आजं वा यदि वा गव्यं क्षीरं दत्त्वा चतुर्गुणम्।
पाने वस्तौ तथाभ्यङ्गे भोज्ये चैव प्रशस्यते ॥
अश्वो वा वातसंभग्नो गजो वा यदि वा नरः।
पङ्गुलः पीठसर्पी च तैलेनानेन सिध्यति ॥
अधोभागे च ये वाताः शिरोमध्यगताश्च ये।
दन्तशूले हनुस्तम्भे मन्यास्तम्भे गलग्रहे ॥
यस्य शुष्यति चैकाङ्गं गतिर्यस्य च विह्वला।
क्षीणेन्द्रिया नष्टशुक्रा ज्वरक्षीणाश्च ये नराः ॥
वधिरा लल्लजिह्वाश्च मन्दमेधस एव च।
अल्पप्रजा च या नारी या च गर्भं न विन्दति ॥
वातार्त्तौ वृषणौ येषामन्त्रवृद्धिश्च दारुणा।
एतत् तैलवरं तेषां नाम्ना नारायणं स्मृतम् ॥
तगरं नतमत्र स्यादभावे शीतली जटा ॥ ७९ ॥

---

लिया इति ख्याता : अतिबला गोरक्षतण्डुला ; तगरं तगरपादिका, तदभावे शिव लौकोपडः, पिण्डतगरमूलमित्यन्ये। आज वा यदि वा गव्यमिति यद्यपि गव्याज पयसोः प्रायो गुणसाम्यं, तथा च गोक्षीरेण पक्वं तैलमित्यनभिष्यन्दि त्रिदोषहरञ्च भवतीति प्रत्येतव्यम् , अन्ये त्वाहुः क्षीरान्तरनिवृत्त्यर्थं विशेषख्यापकमिति। नारायणसंज्ञा चास्य विष्णुनिर्मितत्वात्, शतावरीरससाधितत्वाद्वा ॥ ७९ ॥

महानारायणतैलम्—

शतावरी चांशुमती पृश्निपर्णी शटी बला ।
एरण्डस्य च मूलानि वृहत्योः पूतिकस्य च ॥
गवेधुकस्य मूलानि तथा सहचरस्य च ।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
पादावशेषे पूते च गर्भश्चैनं समावपेत् ।
पुनर्नवा वचा दारु शताह्वा चन्दनागुरु ॥
शैलेयं तगरं कुष्ठमेला मांसी स्थिरा बला ।
अश्वाह्वा सैन्धवं रास्ना पलार्द्धानि च पेषयेत् ॥
गव्याजपयसोः प्रस्थौ द्वौ द्वावत्र प्रदापयेत् ।
शतावरीरसप्रस्थं तैलप्रस्थं विपाचयेत् ॥
अस्य तैलस्य सिद्धस्य शृणु वीर्य्यमतः परम् ।
अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ।
तैलमेतत् प्रदातव्यं सर्ववातनिवारणम् ॥
आयुष्मांश्च नरः पीत्वा निश्चयेन दृढ़ो भवेत् ।
गर्भमश्वतरी विन्द्यात् किं पुनर्मानुषी तथा ॥
हृच्छूलं पार्श्वशूलञ्च तथैवार्द्धावभेदकम् ।
अपचीं गण्डमालाञ्च वातरक्तं हनुग्रहम् ।
कामलां पाण्डुरोगञ्च अश्मरीञ्चापि नाशयेत् ॥
तैलमेतद्भगवता विष्णुना परिकीर्त्तितम् ।
नारायणमिति ख्यातं वातान्तकरणं परम् ॥ ८० ॥

---

महानारायणतैले अंशुमती शालपर्णी, पूतिकस्य नाटाकरञ्ज इति ख्यातस्य मूलं ग्राह्यं ; गवेधुकं गोरक्षतण्डुला ; सहचरी झिण्टी ; शताह्वा शुल्फा इति ख्याता, चन्दनं रक्तचन्दन, शैलेयं शैलजं ; तगरं तगरपादिका ; स्थिरा शालपर्णी, अश्वाह्वा अश्वगन्धा । एषां कल्कानां प्रत्येकं पलार्द्धम् । प्रस्थौ द्वौ द्वाविति पृथग् द्वौ द्वौ प्रस्थौ ॥ ८० ॥

### अश्वगन्धातैलम्—

शतं पक्काश्वगन्धाया जलद्रोणेऽंशशेषितम् ।
विस्राव्य विपचेत् तैलं क्षीरं दत्त्वा चतुर्गुणम् ।
कल्कैर्मृणालशालूक-विसकिञ्जल्कमालती- ।
पुष्पैर्ह्रीवेरमधुक-शारिवापद्मकेशरैः ॥
मेदापुनर्नवाद्राक्षामञ्जिष्ठाबृहतीद्वयैः ।
एलैलबालुत्रिफला-मुस्तचन्दनपद्मकैः ॥
पक्वं रक्ताश्रयं वातं रक्तपित्तमसृग्दरम् ।
हन्यात् पुष्टिबलं कुर्य्यात् कृशानां मांसवर्द्धनम् ॥
रेतोयोनिविकारघ्नं व्रणदोषापकर्षणम् ।
षण्ढानपि वृषान् कुर्य्यात् पानाभ्यङ्गानुवासनैः ॥ ८१ ॥

### मूलकाद्यं तैलम्—

मूलकस्वरसं तैलं क्षीरदध्यम्लकाञ्जिकम् ।
तुल्यं विपाचयेत् कल्कैर्बलाचित्रकसैन्धवैः ॥
पिप्पल्यतिविषारास्ना-चविकागुरुचित्रकैः ।
भल्लातकवचाकुष्ठ-श्वदंष्ट्राविश्वभेषजैः ॥
पुष्कराह्वशटीविल्व-शताह्वानतदारुभिः ।
तत् सिद्धं पीतमत्युग्रान् हन्ति वातात्मकान् गदान् ॥ ८२ ॥

---

अश्वगन्धातैले अंशशेषितमिति पादशेषितम् । मृणालं स्थूलमृणालं, विसन्तु स्वल्पमृणालं, विसशब्देन मृणालनिर्गतः प्रतानः, किञ्जल्कं पद्मवराटः, पद्मकेशरस्य उक्तत्वात्, अन्ये तु उत्पलकिञ्जल्कमित्याहुः । मेदास्थाने सहेति पाठं सहा महासहा माषपर्णी ॥ ८१ ॥

मूलकेत्यादि ।—चरकस्य । मूलकस्वरसादीनि चत्वारि द्रवाणि तैलसमानि। बलाचित्रकसैन्धवैरित्यत्र बलाशिग्रुकसैन्धवैरित्येव पाठश्चरकेषु दृश्यते, अन्ये तु उभयत्र चित्रकदर्शनात् एकत्र चित्रकशब्देनैरण्डमूलं व्याचक्षते, तत्तु टीकाकृद्भिर्न व्याख्यातमिति ॥ ८२ ॥

रसोनतैलम्—

रसोनकल्कस्वरसेन पक्वं तैलं पिबेद् यस्त्वनिलामयार्त्तः।
तस्याशु नश्यन्ति च वातरोगा ग्रन्था विशाला इव दुर्गृहीताः ॥८३॥

केतक्याद्यं तैलम्—

केतकिनागबलातिबलानां यद्बहुलेन रसेन विपक्वम्।
तैलमनल्पतुषोदकसिद्धं मारुतमस्थिगतं विनिहन्ति ॥
अनल्पवचनात् तत्र तुल्ये क्वाथतुषोदके।
अकल्कोऽपि भवेत् स्नेहो यः साध्यः केवले द्रवे ॥ ८४ ॥

सैन्धवाद्यं तैलम्—

द्वे पले सैन्धवात् पञ्च शुण्ठ्या ग्रन्थिक-चित्रकात्।
द्वे द्वे भल्लातकास्थीनि विंशतिर्द्वे तथाढके ॥
आरनालात् पचेत् प्रस्थं तैलमेतैरपत्यदम्।
गृध्रस्यूरुग्रहार्शोऽर्त्तिं सर्ववातविकारनुत् ॥ ८५ ॥

स्वल्पमाषतैलम्—

तैलं सङ्कुचितेऽभ्यङ्गो माषसैन्धवसाधितम्।
बाहुशीर्षगते नस्यं पानञ्चौत्तरभक्तिकम् ॥

---

रसोनकल्कस्वरसेन पक्वमिति रसोनक्वाथकल्काभ्यामित्यर्थः। अत्र स्वरस एव चतुर्गुणः, अन्ये तु स्वरसः स्नेहसमः, तोयं त्रिगुणमिति। तथा वातरोगाः नश्यन्ति यथा विशाला दुर्गृहीताः अनधिगतवाक्यार्थाः असंस्कृता वा ग्रन्थाः शास्त्राणि ॥ ८३ ॥

केतकीत्यादि।—वाग्भटस्य। केतक्यादीनामतिबलान्तानां मिलितानां क्वाथः। बहलेनेति घनेन; बहुलेनेति वचनात् अष्टभागावशिष्टत्वं क्वाथस्य, स च चतुर्गुणः। अनल्पेति वचनात् काञ्जिकमपि चतुर्गुणमिति चक्रः; अतोऽष्टगुणः पाक इत्यर्थः ॥ ८४ ॥

सैन्धवाद्ये भल्लातकास्थीनि विंशतिरित्याकृतिगणनात् ॥ ८५ ॥

स्वल्पमाषतैले माषसैन्धवसाधितमिति माषकस्य क्वाथः, सैन्धवस्य तु कल्क इति

क्काथोऽत्र माषनिष्क्वाथ: सैन्धवं कल्कमेव च ॥ ८६ ॥

(१) माषतैलम्—

माषात्मगुप्तातिविषोरुबूकरास्नाशताह्वालवणै: प्रपिष्टै: ।
चतुर्गुणे माषबलाकषाये तैलं कृतं हन्ति च पक्षवातम् ॥८७॥

(२) माषतैलम्—माषप्रस्थं समावाप्य पचेत् सम्यग्जलाढ़के ।
पादशेषे रसे तस्मिन् क्षीरं दत्त्वा चतुर्गुणम् ॥
प्रस्थञ्च तिलतैलस्य कल्कं दत्त्वाक्षसम्मितम् ।
जीवनीयानि यान्यष्टौ शतपुष्पां ससैन्धवाम् ।
रास्नात्मगुप्तामधुकं बलाव्योषं त्रिकण्टकम् ॥
पक्षाघातेऽर्दिते वाते कर्णशूले सुदारुणे ।
मन्दश्रुतौ चाश्रवणे तिमिरे च त्रिदोषजे ॥
हस्तकम्पे शिर:कम्पे विश्वच्यामवबाहुके ।
शस्तं कलायखञ्जे च पानाभ्यञ्जनवस्तिभि: ॥
माषतैलमिदं श्रेष्ठमूर्द्ध्वजत्रुगदापहम् ॥ ८८ ॥

(३) माषतैलम्—माषातसीयवकुरण्टककण्टकारी
गोकण्टटुण्टकजटाकपिकच्छुतोयै: ।
कार्पासकास्थिशणबीजकुलत्थकोल-
क्काथेन वस्तपिशितस्य रसेन चापि ॥

---

चक्र: । अन्ये तु केवलसैन्धवस्य कुत्रापि कल्कादर्शनान्माषसैन्धवयो: कल्क ; अनुक्त-द्रवत्वाज्जलं चतुर्गुणमित्याहु: ॥ ८६ ॥

माषात्मगुप्तेत्यादौ अतिविषा मूर्वेति निश्चल:, यष्टिमध्वित्यन्ये । माषबलयोश्च मिलित्वा चतुर्गुण: क्काथ: ॥ ८७ ॥

माषप्रस्थमित्यादौ ।—जीवनीयानि यान्यष्टाविति अष्टवर्ग: ॥ ८८ ॥

माषातसीत्यादौ ।—अतसी वर्त्तुलकलाय:, कश्चिदतिविषेत्याह ; कुरुण्टकी झिण्टी ; गोकण्टकी गोक्षुर: ; टुण्टुकजटा श्योनाकमूलं ; कपिकच्छु: शूक-

शुण्ठ्या समागधिकया शतपुष्पया च
सैरण्डमूलसपुनर्नवया सरण्या।
रास्नाबलामृतलताकटुकैर्विपक्कम्
माषाख्यमेतदवबाहुहरञ्च तैलम्॥
अर्द्धाङ्गशोषमपतानकमाढ्यवात-
माक्षेपकं सभुजकम्पशिरःप्रकम्पम्।
नस्येन वस्तिविधिना परिषेचनेन
हन्यात् कटीजघनजानुरुजश्च सर्वाः॥ ८९॥

महामाषतैलम्—

माषस्यार्द्धाढ़कं दत्त्वा तुलार्द्धं दशमूलतः।
पलानि छागमांसस्य त्रिंशद्द्रोणेऽम्भसः पचेत्॥
पूतशीते कषाये च चतुर्थांशावतारिते।
प्रस्थञ्च तिलतैलस्य पयो दत्त्वा चतुर्गुणम्॥
आत्मगुप्तोरुबूकश्च शताह्वा लवणत्रयम्।
जीवनीयानि मञ्जिष्ठा चव्यचित्रककट्फलम्॥
सव्योषं पिप्पलीमूलं रास्ना मधुकसैन्धवम्।
देवदार्वमृता कुष्ठं वाजिगन्धा वचा शटी।
एतरक्षसमैः कल्कैः साधयेन्मृदुनाग्निना॥
पक्षाघातार्दिते वाते वाधिर्य्ये हनुसंग्रहे।
कर्णनादे शिरःशूले तिमिरे च त्रिदोषजे॥

---

ण्ठी। माषादिकपिकच्छुन्तैकः क्वाथ, कार्पासास्थिप्रभृतिना कौलान्तेनापरः, ...थः कौलञ्च शुष्कवदरम्। तथा वस्त्रपिशितस्य छागमांसस्य क्वाथस्तृतीय.। एवं ...भिद्र्वैर्मिलित्वा चातुर्गुण्यम्, "एकादिचिद्रवद्रव्यै कुर्य्यात् स्नेह चतुर्गुणम्" इति ...नात। सरणी प्रसारणी, अमृतलता गुडूची, कटुकं मरिच न तु लता ...स्तूरी॥ ८९॥

माषस्यार्द्धाढकमित्यादि।—अर्द्धाढकं द्वात्रिंशत् पलानि। अत्रापि पूर्ववत् यष्टि-

पाणिपादशिरोग्रीवाभ्रमणे मन्दचंक्रमे ।
कलायखञ्जे पाङ्गुल्ये गृध्रस्यामवबाहुके ॥
पाने वस्तौ तथाभ्यङ्गे नस्यकर्णाक्षिपूरणे ।
तैलमेतत् प्रशंसन्ति सर्ववातरुजापहम् ॥ ८० ॥

त्रिशतीयप्रसारणीतैलम्—

समूलपत्रशाखाञ्च जातसारां प्रसारणीम् ।
कुट्टयित्वा पलशतं दशमूलशतं तथा ।
अश्वगन्धापलशतं कटाहे समधिक्षिपेत् ।
वारिद्रोणे पृथक् पक्का पादशेषावतारितम् ।
कषायाः सममात्रास्तु तैलपात्रं प्रदापयेत् ॥
दध्नस्तथाढ़कं दत्त्वा द्विगुणञ्चापि काञ्जिकम् ।
चतुर्गुणेन पयसा जीवनीयैः पलोन्मितैः ॥
शृङ्गवेरपलान् पञ्च त्रिंशद्भल्लातकानि च ॥
द्वे पले पिप्पलीमूलाच्चित्रकस्य पलद्वयम् ॥
यवक्षारपले द्वे च मधुकस्य पलद्वयम् ।
प्रसारणीपले द्वे च सैन्धवस्य पलद्वयम् ॥
सौवर्चलपले द्वे च मञ्जिष्ठायाः पलद्वयम् ।
सर्वाण्येतानि संस्कृत्य शनैर्मृद्वग्निना पचेत् ॥
एतदभ्यञ्जने श्रेष्ठं वस्तिकर्मनिरूहणे ।
पाने नस्ये च दातव्यं न क्वचित् प्रतिहन्यते ॥
अशीतिं वातजान् रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिं श्लैष्मिकांश्चैव सर्वानेतान् व्यपोहति ॥
गृध्रसीमस्थिभङ्गञ्च मन्दाग्नित्वमरोचकम् ।
अपस्मारमथोन्मादं विभ्रमं मन्दगामिताम् ॥

---

मधुकस्य भागद्वयम् । लवणत्रयमिति सौवर्चलं विड सैन्धवञ्च, पुनः सैन्धवमिति

त्वग्गताश्चैव ये वाताः शिरासन्धिगताश्च ये।
जानुसन्धिगताश्चैव पादपृष्ठगतास्तथा॥
भग्नो वाताश्च सम्भग्नो गजो वा यदि वा नरः।
प्रसारयति यस्माद्धि तस्मादेषा प्रसारणी॥
इन्द्रियाणां प्रजननी वृद्धानाञ्च रसायनी।
एतेनाभ्यक्तवृष्णीनां कृतं पुंसवनं महत्॥
प्रसारणीतैलमिदं बलवर्णाग्निवर्द्धनम्।
अपनयति वलीपलितमुत्पाटयति पक्षाघातम्।
वातस्तम्भं सर्वाङ्गगतं वातगुल्मञ्च नाशयति।
एतदुपसेव्यमानः प्रसन्नवर्णेन्द्रियो भवति॥ ९१॥

बृहन्माषतैलम्—

माषक्वाथे बलाक्वाथे रास्नाया दशमूलजे।
यवकोलकुलत्थानां छागमांसभवे पृथक्॥
प्रस्थे तैलस्य च प्रस्थं क्षीरं दत्त्वा चतुर्गुणम्।
रास्नात्मगुप्तासिन्धूत्थ-शताह्वैरण्डमुस्तकैः।
जीवनीयैर्बलाव्योषैः पचेदत्तममैर्बुधः।
हस्तकम्पे शिरःकम्पे बाहुशोषेऽवबाहुके।
बाधिर्य्ये कर्णशूले च कर्णनादे च दारुणे।
विश्वच्यामर्दिते कुब्जे गृध्रस्यामपतानके।
वस्त्यभ्यञ्जनपानेषु नावनेषु च दापयेत्।
माषतैलमिदं श्रेष्ठमूर्द्धजत्रुगदापहम्।

---

वचनात् सैन्धवस्यापि भागद्वयम्। जीवनीयानि इति जीवनीयदशकम्। पाणिपाद-शिरोग्रीवाभ्रमणा इति पाणिपादादिकम्प इत्यर्थः॥ ९०॥ ९१॥

सप्तप्रस्थमाषतैले क्वाथस्य प्रस्थस्याप्यत्वान्माषादीनां प्रत्येकं प्रस्थो ग्राह्यः। मिलितदशमूलप्रस्थः; तथा यवकोलकुलत्थानां मिलित्वैव प्रस्थः। सर्वत्रैव चतु-

क्वाथे प्रस्थाः षड़ेवात्र विभक्तव्यस्त्वनेन भाविताः ॥ ९२ ॥

महामाषतैलम्—

द्विपञ्चमूलीं निःक्वाथ्य तैलात् षोड़शभिर्गुणैः।
माषाढ़कं साधयित्वा तं निर्य्यूहं चतुर्गुणम् ॥
ग्राहयित्वा तु विपचेत् तैलप्रस्थं पयःसमम्।
कल्कार्थञ्च समावाप्य भिषग्द्रव्याणि बुद्धिमान् ॥
अश्वगन्धां शटीं दारु बलां रास्नां प्रसारणीम्।
कुष्ठं परूषकं भार्गीं द्वे विदार्य्यौ पुनर्नवाम् ॥
मातुलुङ्गफलाजाज्यौ रामठं शतपुष्पिकाम्।
शतावरीं गोक्षुरकं पिप्पलीमूलचित्रकम् ॥
जीवनीयगणं सर्वं संहृत्यैव ससैन्धवम्।
तत् साधु सिद्धं विज्ञाय माषतैलमिदं महत्।
वस्त्यभ्यञ्जनपानेषु नावने च प्रयोजयेत् ॥
पक्षाघाते हनुस्तम्भे अर्द्दिते सापतन्त्रके।
अवबाहुकविश्वच्योः खञ्जपङ्गुलयोरपि।

---

गुणं जलं देयम्, चतुर्भागोऽवशेष्यः। अतएवाह क्वाथप्रस्थाः षड़ेवेत्यादि। जीवनीयैरिति जीवनीयदशकैः ॥ ९२ ॥

द्विपञ्चमूलीमित्यादि। अत्र माषस्य क्वाथस्याढकमानत्वमुक्तम्, तस्माद्दशमूलस्यापि क्वाथस्याढक ज्ञेयम्। तैलात् षोडशभिर्गुणैरिति तैलप्रस्थापेक्षया षोड़शगुणजलैरित्यर्थः, प्रस्थः षोड़शगुणः सन् द्रोणः भवति, तेन जलद्रोणेनेत्यर्थः। माषाढकञ्च तैलात् षोड़शगुणैर्जलैः साधयित्वेति योज्यम्। तं दशमूलक्वाथं तथा माषक्वाथञ्च तैलाच्चतुर्गुणं यथा स्यात् तथा ग्राहयित्वा तैलप्रस्थं विपचेदिति योज्यम्। पयःसममिति दुग्धं तुल्यं तेन नवगुणः पाक इति चक्रः। अतएव वक्ष्यति दशमूलाढकं द्रोण इत्यादि। अन्ये तु द्विपञ्चमूलीं माषाढकञ्चैकीकृत्य जलद्रोणमात्रेण साधयेदित्याहुः। तन्मते पञ्चगुणः पाकः। अपरे तु दशमूलकषायेण तैलात् षोडशगुणेन माषाढकं साधयित्वा तेन पादावशेषेण तैलप्रस्थपाक इत्याहुः। अत्र पक्षे मिलितदशमूलपल २५६, जलशराव २५६, शेषशराव ६४; किन्तु अत्र

हनुमन्याग्रहे चैव अधिमन्थे च वातिके ॥
शुक्रक्षये कर्णनादे कर्णशूले च दारुणे।
कलायखञ्जशमने भैषज्यमिदमादिशेत् ॥
दशमूलाढकं द्रोणे निःक्वाथ्य पादिको भवेत्।
क्वाथश्चतुर्गुणस्तैलान्माषक्वाथेऽप्ययं विधिः॥ ८३ ॥

मज्जस्नेहः—

ग्राम्यानूपौदकानान्तु भित्त्वास्थीनि पचेज्जले।
तं स्नेहं दशमूलस्य कषायेण पुनः पचेत् ॥
जीवकर्षभकास्फोता विदारीकपिकच्छुभिः।
वातघ्नैर्जीवनीयैश्च कल्कैर्द्विक्षीरभागिकम् ॥
तत् सिद्धं लावनाभ्यङ्गात् तथा पानानुवासनात्।
शिरापर्वास्थिकोष्ठस्थं प्रणुदत्याशु मारुतम् ॥
ये स्युः प्रक्षीणमज्जानः क्षीणशुक्रौजसश्च ये।
बलपुष्टिकरं तेषामेतत् स्यादमृतोपमम् ॥ ८४ ॥

चतुःस्नेहः—

प्रस्थः स्यात् त्रिफलायास्तु कुलत्थकुडवद्वयम्।
कृष्णगन्धात्वगाढक्योः पृथक् पञ्चपलं भवेत् ॥
रास्नाचित्रकयोर्द्वे द्वे दशमूलं पलोन्मितम्।

---

पक्षौ हस्तैर्नाद्रियते कुत्रापि एवंविधकल्पनाया अदृष्टत्वात्। द्वे विदार्य्यौ विदारीकन्द क्षीरविदारी च; मातुलुङ्गफल मातुलुङ्गस्य फलम्। जीवनीयगणमिति जीवनीयदशकम् ॥ ८३ ॥

ग्राम्यानूपौदकानामित्यादौ।—द्विगुणक्षीरसाहचर्य्याद्दशमूलीक्वाथोऽपि द्विगुण एव ग्राह्यः; अन्ये तु चतुर्गुणमित्याहुः। वातघ्नैरिति मधुरलवणस्कन्धाद्युक्तै र्वातहरद्रव्यैः भद्रदार्वादिगणैः। जीवकर्षभकयोः पुनः पाठो भागद्वयग्रहणार्थः। आस्फोता हाफरमालीति ख्याता ॥ ८४ ॥

प्रस्थः स्यादित्यादि।—अत्र त्रिफलाया मिलिता प्रस्थः, कृष्णगन्धा शोभाञ्जनम्

अलद्रोणे पचेत् पादशेषं प्रस्थोन्मितं पृथक् ॥
सुरारनालदध्यम्लसौवीरकतुषोदकम् ।
कोलदाड़िमवृक्षाम्लरसं तैलं घृतं वसाम् ॥
मज्जानञ्च पयश्चैव जीवनीयपलानि षट् ।
कल्कं दत्त्वा महास्नेहं सम्यगेनं विपाचयेत् ॥
शिरामज्जास्थिगे वाते सर्वाङ्गैकाङ्गरोगिषु ।
वेपनाक्षेपशूलेषु तमभ्यङ्गे प्रदापयेत् ॥ ८५ ॥

कुब्जप्रसारणीतैलम्—

प्रसारणीशतं क्षुण्णं पचेत् तोयार्मणे शुभे ।
पादशेषे समं तैलं दधि दद्यात् सकाञ्जिकम् ॥
द्विगुणञ्च पयो दत्त्वा कल्कान् द्विपलिकांस्तथा ।
चित्रकं पिप्पलीमूलं मधुकं सैन्धवं वचाम् ॥
शतपुष्पां देवदारु रास्नां वारणपिप्पलीम् ।
प्रसारण्याश्च मूलानि मांसीं भल्लातकानि च ।
पचेन्मृद्वग्निना तैलं सर्ववातविकारनुत् ॥
अशीतिं नरनारीणां वातरोगान् व्यपोहति ।
कुब्जस्तिमितपङ्गुत्वं गृध्रसीं खुड़कार्दितम् ।
हनुपृष्ठशिरोग्रीवास्तम्भं वापि नियच्छति ॥ ८६ ॥

---

अस्थास्त्वक् मूलत्वक् । अन्ये तु कृशागन्धा शमीत्याहुः; तन्न, जतूकर्णे "त्रिफलाप्रस्थः कुलत्थाढ़ं शिग्रुत्वगाढकौ" इत्यादि पाठात् । दशमूलं पर्लोन्मितमिति प्रत्येकम् । प्रस्थोन्मितं पृथगिति सुरादीनां पयोऽन्तानां प्रत्येकं प्रस्थमित्यर्थः । जीवनीयपलानि षडिति मिलित्वा । महास्नेह इति चतुःस्नेहस्य संज्ञा ॥ ८५ ॥

कुब्जप्रसारणीतैले सममिति पादावशिष्टक्वाथसमम्, आढकमित्यर्थः । दधि दद्यात् सकाञ्जिकमिति दधिकाञ्जिके तैलसमे । तेन तैलदधिकाञ्जिकानां प्रत्येकमाढ़कम्; द्विगुणञ्च पय इति आढ़कद्वयमित्यर्थः । अन्ये तु सकाञ्जिकमिति

### त्रिशतीयप्रसारणीतैलम्—

प्रसारण्यास्तुलामश्वगन्धाया दशमूलतः ।
तुलां तुलां पृथग्वारिद्रोणे पादावशेषिते ॥
तैलाढ़कं चतुःक्षीरं दधितुल्यं द्विकाञ्जिकम् ।
द्विपलैर्ग्रन्थिकक्षारप्रसारण्यक्षसैन्धवैः ।
समञ्जिष्ठाग्नियष्ट्याह्वैः पलिकैर्जीवनीयकैः ।
शुण्ठ्याः पञ्चपलं दत्त्वा त्रिंशद्भल्लातकानि च ।
पचेद्धस्त्यादिना वातं हन्ति सन्धिशिरास्थिगम् ॥
पुंस्त्वोत्साहस्मृतिप्रज्ञा-वलवर्णाग्निसिद्धये ।
प्रसारणीयं त्रिशती अत्र सौवर्चलन्त्विह ॥ ८७ ॥

### सप्तशतिकं प्रसारणीतैलम्—

समूलपत्रामुत्पाट्य शरत्काले प्रसारणीम् ।
शतं ग्राह्यं सहचरात् शतावर्य्याः शतं तथा ॥
बलात्मगुप्ताश्वगन्धा-केतकीनां शतं शतम् ।
पचेच्चतुर्गुणे तोये द्रवैस्तैलाढ़कं भिषक् ॥
मस्तु मांसरसं चुक्रं पयश्चाढ़कमाढ़कम् ।
दध्याढ़कसमायुक्तं पाचयेन्मृदुनाग्निना ॥
द्रव्याणान्तु प्रदातव्या मात्रा चार्द्धपलोन्मिता ।

---

पर्य्याविशेषण कृत्वा काञ्जिकस्यापि द्वैगुण्यमिच्छन्ति, व्यवहारस्तु पूर्ववदेव । खुडको ग्रन्थिवात, अन्ये तु वातकण्टक इत्याहु ॥ ८६ ॥

प्रसारण्यास्तुलामित्यादौ ।—दशमूलस्य मिलित्वा, तुला । पृथक् वारिद्रोण इति तिसृषु तुलासु प्रत्येक जलद्रोणदानमित्यर्थः । सैन्धवसान्निध्यादत्र सौवर्चल गृह्णन्ति वृद्धा । मञ्जिष्ठादीनां यष्ट्याह्वान्तानां प्रत्येक द्विपलम्, जीवनीयदशकन्तु प्रत्येक पलिकम् । त्रिंशद् भल्लातकानीत्याकृतिमानात् ॥ ८७ ॥

समूलपत्रामित्यादौ ।—शत ग्राह्यमिति प्रसारण्या इत्यर्थ । तथा शब्दात् सहचराच्च शतमित्यन्वय. । केतकी केया इति ख्याता । पचेच्चतुर्गुणे तोय इत्य

तगरं मदनं कुष्ठं केशरं मुस्तकं त्वचम् ॥
रास्ना सैन्धवपिप्पल्यौ मांसी मञ्जिष्ठयष्टिका।
तथा मेदा महामेदा जीवकर्षभकौ तथा।
शतपुष्पा व्याघ्रनखं शुण्ठीदेवाह्वमेव च।
काकोली क्षीरकाकोली वचा भल्लातकं तथा ॥
पेषयित्वा समानेतान् साधनीया प्रसारणी।
नातिपक्वं न हीनञ्च सिद्धं पूतं निधापयेत् ॥
यत्र यत्र प्रदातव्या तन्मे निगदतः शृणु।
कुब्जानामथ पङ्गूनां वामनानां तथैव च ॥
यस्य शुष्यति चैकाङ्गं ये च भग्नास्थिसन्धयः।
वातशोणितदुष्टानां वातोपहतचेतसाम् ॥
स्त्रीमद्यक्षीणशुक्राणां वाजीकरणमुत्तमम्।
वस्तौ पाने तथाभ्यङ्गे नस्ये चैव प्रदापयेत्।
प्रयुक्तं शमयत्याशु वातजान् विविधान् गदान् ॥ ९८ ॥

एकादशशतिकं प्रसारणीतैलम्—

शाखामूलदलैः प्रसारणितुलास्तिस्रः कुरुण्टात् तुले
छिन्नायाश्च तुले तुले दशमूलतो रास्नाशिरीषात् तुलाम्।

---

पलोल्लेखागतमानत्वाच्चतुर्गुणतोयस्य न द्वैगुण्यम्। अन्ये तु सम्यग् वीर्य्याधानार्थं द्वैगुण्यात् चतुर्गुणमष्टगुणं गृह्णन्ति, इदन्तु न व्यवहारसिद्धम्। द्रवैरिति प्रसारण्या दीनां केतकयन्ताना पादावशिष्टक्वाथै। चक्र गृहण्यधिकारोक्तविधिना कार्य्य मित्येके; अन्ये तु महाराजप्रसारण्या वक्ष्यमाणेन विधिनेत्याहुः। द्रव्याणामिति कल्कद्रव्याणाम्। अर्द्धपलांशिका इति अर्द्धपलमाना। तगर पूर्ववद्ग्राह्यम्, केशर नागकेशरम्, मञ्जिष्ठयष्टिका इति मञ्जिष्ठायाम्छान्दसत्वाद् ह्रस्वः, यष्टिका यष्टिमधु। व्याघ्रनखं नखी; देवाह्वं देवदारु। भल्लातकासहत्वे रक्तचन्दनं देयम् ॥ ९८ ॥

शाखामूलदलैरित्यादि।—अत्र तृतीया सहार्थे विशेषणे वा। कुरुण्ट नील-झिण्टी। रास्नाशिरीषयोर्मिलित्वा एका तुला। देवदारुकेतकयोरपि मिलित्वैव

द्विवाक्वाच्च सकेतकाद् घटशते निःक्वाथ्य कुम्भांशिके
तोये तैलघटं तुषाम्बुकलसौ दत्त्वाढ़कं मस्तुनः
शुक्ताच्छागरसादथेक्षुरसतः चीराच्च दत्त्वाढ़कम्।
मृक्काकर्कटजीवकाद्यविकसाकाकोलिकाकच्छुरा-
सूक्ष्मैलाघनसारकुन्दुसरलाकाश्मीरमांसीनखैः।
कालीयोत्पलपद्मकाह्वयनिशाकक्कोलकग्रन्थिकैः
चाम्पेयाभयचोचपूगकटुकाजातीफलाभीरुभिः॥
श्रीवासामरदारुचन्दनवचाशैलेयसिन्धूद्भवैः
तैलाम्भोदकटुम्भराङ्घ्रिनलिकाह्वस्पीरकक्षोरकैः॥
कस्तूरीदशमूलकेतकनतध्यामाश्वगन्धाम्बुभिः
कौन्तीताच्र्यजशल्लकीफललघुश्यामाशताह्वामयैः।
भल्लातत्रिफलाजकेशरमहाश्यामालवङ्गान्वितैः
सव्योषैस्त्रिपलैर्महीयसि पचेन्मन्दन पात्रेऽग्निना॥

---

तथा। घटशत इति द्रोणशत कुम्भांशिक इति द्रोणद्वयशेषे, तदुक्तं 'द्रोणद्वयन्तु शूर्पः स्यात्तद्वयं कुम्भ स एव च।' अन्ये तु कुम्भो द्रोणमित्याहुः, "नल्वणार्मणोन्मान घटकुम्भकलसा पर्य्याया" इति वृद्धवाग्भटवचनात् कुम्भशब्दोऽत्र द्रोण पर्य्याय। तेन कुम्भांशिक इत्यस्य द्रोणशेषे इत्यर्थः, किन्तु व्यवहार पूर्वस्यैव। अत्र द्रव्यजलयो बहुलत्वादेकस्मिन् पात्र क्वाथो दुष्कर, तेन द्रव्य विभज्य जल तदनुसारेण दत्त्वा क्वथनीयम। तैलघट तैलद्रोणम्। तुषाम्बुकलसाविति काञ्जिकस्य द्रोणद्वयम्। शुक्तादीनाञ्च चीरान्ताना प्रत्येकमाढ़कम्। जीवकाद्य जीवनीयदशक-मष्टवर्गो वा, काकोल्या भागद्वय जीवनीयगणेऽप्यस्या पठितत्वात, विकसा मञ्जिष्ठा, कच्छुरा शूकशिम्बी, दुरालभेत्यन्ये, घनसार कर्पूरम्, कुन्दु कुन्दुरुसञ्ज्ञकम्, सुगन्धि गन्धद्रव्यम्, कुन्दुरखोटिरिति ख्याता। सरला सरलकाष्ठम्, न तु त्रिवृता, सुगन्धिद्रव्यान्त.पाठितत्वात्; एव ग्रन्थिकमपि ग्रन्थिपर्णी, न तु पिप्पलीमूलम्, उत्पलमप्युत्पलपुष्प न तु कुष्ठम। तस्य वक्ष्यमाणत्वात्। चाम्पेय चम्पककलिका, नागकेशरो वा, अभयमुशीरम, चोच गुडत्वक्, पूग पूगफलम्, पूगवल्कलमित्यन्ये, कटुका शताकस्तूरी, अभीरु शतमूली, श्रीवासो नवनीतखोटि.,

पानाभ्यञ्जनवस्तिनस्यविधिना तन्मारुतं नाशयेत्
सर्वाङ्गैकाङ्गगतं तथावयवगं सन्ध्यस्थिमज्जाश्रितम् ।
श्लेष्मोत्थानथ पैत्तिकांश्च शमयेन्नानाविधानामयान्
धातून् बृंहयति स्थिरञ्च कुरुते पुंसां नवं यौवनम् ॥
वन्ध्यस्यापि बलं करोति सुमहद्वन्ध्यासु गर्भप्रदम्
पीत्वा तैलमिदं जरत्यपि सुतं सूतेऽमुना भूरुहाः ।
सिक्ताः शोषमुपागताश्च फलिनः स्निग्धा भवन्ति स्थिरा;
भग्नाङ्गाः सुदृढीभवन्ति मनुजा गावो हया कुञ्जराः॥९९॥

अष्टादशशतिकं प्रसारणीतैलम्—

समूलदलशाखायाः प्रसारण्याः शतत्रयम् ।
शतमेकं शतावर्य्या अश्वगन्धाशतं तथा ॥
केतकीनां शतञ्चैकं दशमूलाच्छतं शतम् ।
शतं वाट्यालकस्यापि शतं सहचरस्य च ॥
जलद्रोणशतं दत्त्वा शतभागावशेषितम् ॥
तच्छेषेण कषायेण कषायद्विगुणेन च ।
सुव्यक्तं नारनालेन दधिमण्डाढ़केन च ॥
क्षीरशुक्तं क्षुनिर्यासच्छागमांसरसाढ़कैः ।

---

चन्दनं श्वेतचन्दनम् , तैलं सिह्लकम् , कटुम्भरा प्रसारणी वृश्चिकपत्नी वा, तस्या अङ्घ्रिर्मूलम् , दृश्चीरः श्वेतपुनर्नवा ; कर्चूरकी गन्धशटी , व्याघ्र गन्धतृणम्. कौन्ती रेणुका , तार्च्यजं रसाञ्जनम् , फलं कट्फलं मदनफलं वा , लघु अगुरु , श्यामा प्रियङ्गुः ; महाश्यामा श्यामलता ; एषां प्रत्येकं त्रिपलम्, व्योषस्य मिलित्वा त्रिपलं ग्राह्यम् । अत्र कल्कभूयस्त्वादेलादितैलवदधमैर्गन्धद्रव्यैः प्रथमः पाकः, मध्यमैस्तु द्वितीयः , उत्तमैस्तु तृतीय इति । अत्र गन्धवृद्ध्यर्थं कर्पूरकस्तूरीभ्यां पत्रकल्कः कार्य्यः. पत्रकल्कलक्षणञ्चाग्रे वाच्यम् । पत्रकल्कस्य तु मानमत्र तैलानुरूपत., सुगन्धितैलान्तरोक्तमानानुसाराद्वा ज्ञेयम् ॥ ९९ ॥

समूलदलेत्यादि ।--दशमूलाच्छतं शतमिति विल्वादीनां दशानां प्रत्येकं शतमित्यर्थः ।

तैलाद् द्रोणं समायुक्तं दृढ़े पात्रे निधापयेत् ।
द्रव्याणि यानि पेष्याणि तानि वक्ष्याम्यतः परम् ।
भल्लातकं नतं शुण्ठी पिप्पली चित्रकं शटी ॥
वचा पृक्का प्रसारण्याः पिप्पल्या मूलमेव च ।
देवदारु शताह्वा च सूक्ष्मैला त्वक् च वालकम् ॥
कुङ्कुमं मदमञ्जिष्ठा तुरुष्कं नखिकागुरुः ।
कर्पूरकुन्दुरुनिशा-लवङ्गध्यामचन्दनम् ॥
कक्कोलं नलिका मुस्तं कालीयोत्पलपत्रकम् ।
शटीहरेणुशैलेय-श्रीवासञ्च सकेतकम् ॥
त्रिफलाकच्छुराभीरुसरलापद्मकेशरम् ।
प्रियङ्गुशीरनलदं जीवकाद्यं पुनर्नवा ॥
दशमूल्यश्वगन्धे च नागपुष्पं रसाञ्जनम् ।
कटुकाजातिपूगानां फलानि शल्लकीरसः ॥
भागांस्त्रिपलिकान् दत्त्वा शनैर्मृद्वग्निना पचेत् ॥
विस्तीर्णे सुदृढ़े पात्रे पाक्यैषा तु प्रमारणी ।
प्रयोगः षड्विधश्चात्र रोगार्त्तानां विधीयते ॥
अभ्यङ्गात् त्वग्गतं हन्ति पानात् कोष्ठगतं तथा ॥
पक्वाशयगते वस्तिर्निरूहः सार्वकायिके ।
भोजनात् सूक्ष्मनाड़ीस्थान् नस्यादूर्द्धगतं तथा ॥
एतद्धि वड़वाश्वानां किशोराणां यथामृतम् ।

---

वृद्धा अत्र क्वाथमध्ये रास्नादेवदारुणोरपि प्रत्येक पञ्चाशत् पलानि प्रक्षिपन्ति, अत-एव चक्रोऽपि क्वाथे तुल्यार्द्धमिति वक्ष्यति । जलन्तु यथोक्तमेव देयं नत्वधिकम् । कषायद्विगुणेनारनालेन द्रोणद्वयेनेत्यर्थः । क्षीरादीनां प्रत्येकमाढकम् । समायुक्त-मिति पदं कषायेणेत्यादिभिस्तृतीयान्तैर्योज्यम् । प्रसारण्या अपि मूलमित्यन्वयः । त्वक गुडत्वक् ; मदः कस्तूरी , तुरुष्कं सिह्लकः । गयदासस्तु अत्र तुरुष्कं नखक्षीरक-मिति पठित्वा अगुरुस्थाने क्षीरपुष्पं लिखति । उत्पलम् उत्पलपुष्पम् , ध्याम गन्ध-

एतदेव मनुष्याणां कुञ्जराणां गवामपि ॥
अनेनैव च तैलेन शुष्यमाणा महाद्रुमा: ।
सिक्ता: पुन: प्ररोहन्ति भवन्ति फलशालिन: ॥
वृद्धोऽप्यनेन तैलेन पुनश्च तरुणायते ॥
न प्रसूते च या नारी सा च पीत्वा प्रसूयते ।
अप्रजा: पुरुषो यस्तु सोऽपि पीत्वा सुतं लभेत् ॥
अशीतिं वातजान् रोगान् श्लैष्मिकान् पित्तजानपि ।
सन्निपातसमुत्थांश्च नाशयेत् चिप्रमेव तु ॥
एतेनान्धकवृष्णीनां कृतं पुंसवनं महत् ।
कृत्वा विष्णोर्बलिञ्चापि तैलमेतत् प्रयोजयेत् ॥
क्वाथे तुलार्द्धं रास्नाया: किलिमस्य च दीयते ।
भल्लातकासहत्वे तु तत्स्थाने रक्तचन्दनम् ॥
त्वक्पत्रपत्रमधुरी-कुष्ठचम्पकचोरिका: ।
ग्रन्थिकोषौ मरुवकमधिकत्वेन दीयते ॥
कर्पूरमददानञ्च शुक्तगन्धोदकक्रिया ।
द्रव्यशुद्धि: पाकविधिर्भाविप्रसारणीसम: ॥ १०० ॥

---

त्वचम्, पत्र तेजपत्रम्, शटी गन्धशटी, श्रीवास: नवनीतखोटि: । सकेतकमित्यत्र सैडगजमिति पठित्वा एडगजवीजमाह गयदास.। कच्छुरा शकशिम्बीमूलम्, सरला सरलकाष्ठम्, पद्मकेशरं पद्मकिञ्जल्क:, नलद मांसी, जीवकाद्य जीवनीयदशकम्, नागपुष्प नागकेशरपुष्पचूर्णम ; कटुका लताकस्तूरी, फलानीति कटकादिभिस्त्रिभि सम्बध्यते । शल्लकी स्वनामख्याता, रसो गन्धरस.। अत्र त्रिफलाया मिलित्वा पलत्रयम्, एव जीवनीयदशमूलयोरपि, प्रत्येकन्तु त्रिपलग्रहण कल्कस्यातिबाहुल्यम् स्यादिति । अत्रापि कल्कभूयस्त्वात् पूर्ववत् अधमै: सुगन्धिद्रव्य प्रथम: पाक:, मध्यमैस्तु द्वितीय:, उत्तमैस्तृतीय इति । अत्रापि, तृतीयपाको गन्धोदकेन केचित्तु द्वितीय: पाकोऽपि गन्धोदकेनेच्छन्ति । अत्रोपदेशादनुक्तमप्यधिक गन्धद्रव्यं देयमित्याह त्वक्पत्रेत्यादि, त्वक्पत्रं तेजपत्रम् ; पत्रन्तु तेजपत्रसदृशमेव

**महाराजप्रसारणीतैलम्—**

शतत्रयं प्रसारण्या द्वे च पीतसहाचरात्।
अश्वगन्धैरण्डबला वरी रास्ना पुनर्नवा॥
केतकी दशमूलञ्च पृथक् त्वक् पारिभद्रतः।
प्रत्येकमेषान्तु तुला तुलार्द्धं किलिमात् तथा॥
तुलार्द्धं स्याच्छिरीषाच्च लाक्षायाः पञ्चविंशतिः।
पलानि लोध्राच्च तथा सर्वमेकत्र साधयेत्॥
जलपञ्चाढ़कशते सपादे तत्र शेषयेत्।
द्रोणद्वयं काञ्जिकञ्च षड़्विंशत्याढ़कोन्मितम्॥
क्षीरदध्नोः पृथक् प्रस्थान् दश मस्त्वाढ़कं तथा।
इक्षु रसाढ़कौ चैव छागमांसतुलात्रये॥

---

सुगन्धिपत्रम्, ग्रन्थिर्ग्रन्थिपर्णम्, कोषी जातिकोषः। कर्पूरादिदानविधिमाह कर्पूरेत्यादि॥ १००॥

शतत्रयमित्यादि।—दशमूलं पृथक् तुलेत्यन्वयः, तेन दशमूलस्य प्रत्येकं शतपलं ग्राह्यम्। किलिम देवदारु। लोध्राच्च तथेति पञ्चविंशतिः पलानीत्यर्थः। जलपञ्चाढकशते सपादे इत्याढकशतस्य पादः पञ्चविंशत्याढकास्तेन जलस्य पञ्चविंशत्याढकाधिकं पञ्चशताढकमित्यर्थः। तत्र शेषयेद् द्रोणद्वयमिति तेषु द्रोणद्वयं स्थाप्यमित्यर्थः। यद्यपि काञ्जिकस्य षड्विंशत्याढकास्तथापि काञ्जिकद्रोणमात्रेण व्यवहारः, अन्यथा काञ्जिकस्यैव गन्धः स्यादिति अतएव चक्रो वक्ष्यति काञ्जिकं मानतो द्रोणमिति। मञ्जिष्ठाक्वाथः कुड़वोनाढकोन्मान इति पञ्चदशशरावपरिमितः। एभिर्द्रवैरिति क्वाथकाञ्जिकादिभिः सर्वैः। नागरं शुण्ठी। अत्र भल्लातकासहत्वे तु रक्तचन्दनं देयम्। अतएव वक्ष्यति भल्लातकेत्यादि। अक्षं विभीतकम्; पद्मं पद्मपुष्पम्, उत्पलं नीलोत्पलम्। दशमूलं समुदितमिति, तेन दशमूलस्य मिलित्वा पलत्रयमित्यर्थः। चक्रमर्द एडगजबीजम्। जीवनीयो गण इति जीवनीयदशकम्। पथ्याक्षधात्र्य इत्यत्र त्रिफलायाश्च प्रत्येकमेव पलत्रयं ग्राह्यम्; इह समुदितमिति पदाभावात्। द्वितीयपाकमाह देवपुष्पीत्यादि।—देवपुष्पादीनां कल्कः। देवपुष्पी देवफुली, नीली गन्धरसः। शल्लकीरसः शल्लक्या रसः; अन्ये तु

जलपञ्चचत्वारिंशत्-प्रस्थान् पक्के तु शेषयेत्।
सप्तदश रस-प्रस्थान् मञ्जिष्ठाक्काथ एव च।
कुड़वोनाढ़कोन्मानो द्रवैरेतैस्तु साधयेत्।
सुशुद्धतिलतैलस्य द्रोणं प्रस्थेन संयुतम्॥
काञ्जिकं मानतो द्रोणं शुक्तं नात्र विधीयते।
आद्य एभिर्द्रवैः पाकः कल्को भल्लातकं कणा।
नागरं मरिचञ्चैव प्रत्येकं षट्पलोन्मितम्।
भल्लातकाभहत्वे तु रक्तचन्दनमुच्यते॥
पथ्याक्षधात्राः सरलं शताह्वा कर्कटो वचा।
चोरपुष्पी शटी मुस्तद्वयं पद्मञ्च सोत्पलम्॥
पिप्पलीमूलमञ्जिष्ठा साश्वगन्धा पुनर्नवा।

---

शल्लकीरसशब्देन कुन्दुरुमाह, यदुक्तं शब्दार्णवे "कुन्दुरुस्तीक्ष्णगन्धः स्यात् भीषण शल्लकीरसः।" तन्मते भागद्वयं कुन्दुरी। बला बालकम्, चल. सिह्लक, खोटिः काष्ठखोटिः। नखीवयमिति यद्यपि पञ्चनख्यो भवन्ति, यदुक्तं "नखी पञ्चविधा ज्ञेया गन्धार्थं गन्धतत्परैः। काचिद्वदरपत्राभा तथोत्पलदलाऽपरा। काचिदश्वखुराकारा गजकर्णसमाऽपरा। वराहकर्णसङ्काशा पञ्चमी परिकीर्त्तिता" इति। तथाप्यत्राद्यासु चतसृषु मध्ये नखीत्रय ग्राह्यम्, वराहकर्णिकाया निषिद्धत्वात्, यथा—"करिकर्णं तुरगखुरं नखं पयुञ्जीत गन्धयोगेषु। धूपेषु वदरोत्पलपत्रं न वराहकर्णमुभयत्रापि।" त्वक्पत्री तेजपत्रम्, पुतिः खट्टाशी; चम्पकं चम्पक-कलिका, प्रत्येक पलत्रयमित्यन्वयः। गन्धोदके त्वक्पत्री तेजपत्रम्, पत्रन्तु सुगन्ध पत्रान्तर तेजपत्रसदृशं वाटियापत्रमिति ख्यातम्। बलामूलं वाट्यालकस्य मूलम्। कुष्ठार्द्धभाम इति कुष्ठस्य सार्द्धद्वादशपलमित्यर्थः। गन्धाम्बु-चन्दनाम्बुभ्यामिति गन्धाम्बु गन्धोदकं तच्चोक्तमेव, चन्दनाम्बु चन्दनमात्रेणार्द्धशृतम्; अन्ये तु सुपिष्ट श्रीखण्डचन्दनमिश्र वारिमात्र वदन्ति। जातीकोषफलानीति जातीकोषी रस सारः, तथा जातीफलञ्चेत्यर्थः। भद्रश्रियं श्वेतचन्दनम्; लवङ्गकस्त्री लवङ्गवल्क लम्। चन्द्रः कर्पूर वेधार्थं पत्रकल्कार्थम्। अस्य तैलस्य पत्रिका लिख्यते;—कृष्ण तिलतैल शः ६८, प्रतिशतं क्वाथार्थं—गन्धभादालिया पल १००, पीतझिण्टीमूल पल

दशमूलं समुदितं चक्रमर्दो रसाञ्जनम् ॥
गन्धतृणं हरिद्रा च जीवनीयगणस्तथा
एषां त्रिपलिकैर्भागैराद्यः पाको विधीयते ॥
देवपुष्पीबोलपत्रं शल्लकीरसशैलजे।
प्रियङ्गुशीरमधुरीमांसीदारुबलाचलम् ॥
श्रीवासो नलिकाखोटिः सूक्ष्मैला कुन्दुरुर्मुरा।
नखीवयश्च त्वक्पत्रीमपरां पूतिचम्पकम् ॥
मदनं रेणुका पृक्का मरुवञ्च पलत्रयम्।
प्रत्येकं गन्धतोयेन द्वितीयः पाक इष्यते ॥
गन्धोदकन्तु त्वक्पत्री पत्रकोशीरमुस्तकम्।
प्रत्येकं सबलामूलं पलानि पञ्चविंशतिः ॥

---

२००, अश्वगन्धा १०० पल, एरण्डमूल पल १००, वारियालामूल १०० पल, शतमूली १०० पल, रास्ना १०० पल, पुनर्नवा १०० पल, केतकीमूल १०० पल, दशमूल प्रत्येक १०० पल, पालितमादार छाल १०० पल, देवदारु ५० पल, शिरीषमूल ५० पल, लाक्षा २५ पल, लोध २५ पल, पाकार्थ शराव जल ३४३ शराव, समुदायन तु जलशराव ८४०० द्रोणमानेन तु द्रोण १३१, श १६ . सेरमानेन तु २२४००, प्रतिशत शव ५, पल १, तो ६, समुदाय शेष १२८ शराव, शुक्त ६४ शराव, दुग्ध ४० शराव, दधि ४० शराव, दधिमस्तु १६ शराव, इक्षुरस ३२शराव, छाग मास पल ३०० पल, पाकार्थ जलशराव १८० शेष ६८ शराव, मञ्जिष्ठा ६० पल, पाकार्थ जल ६० शराव, शेष श १५। कल्कार्थ—रक्तचन्दन त्रिकटु एषां चतुर्णां प्रति पल ६, हरीतकी, बहडा, आमलकी, सरल, शलुफा, समुद्रकर्कट, काँकड़ाशृङ्गी धन्य, वच, चोरहुली, शटी, नागरमुथा, कउटामुथा, पद्मपुष्प, नीलोत्पल, पिप्पलीमूल, मञ्जिष्ठा, अश्वगन्धा, पुनर्नवा, एडश्री रसाञ्जन, गन्धतृण, हरिद्रा, जीवक, ऋषभक, मेदा महामेदा, काकोली, क्षीरकाकोली, मुगानी, माषाणी, जीवन्ती, यष्टिमधु एषां प्रत्येक पल ३, दशमूल मिलित्वा पल ३, इति प्रथम पाक.। द्वितीयपाके गन्ध कल्कार्थं—देवहुली, गन्धरस, तेजपत्र, शल्लकीरस, शैलज, प्रियङ्गु, वीरणमूल, मउरी, जटामांसी, देवदारु, बलामूल सिह्लक, नवनीतखोटि, नालुका, काङ-

कुष्ठार्द्धभागोऽत्र जलप्रस्थास्तु पञ्चविंशतिः ।
अर्द्धावशिष्टाः कर्त्तव्याः पाके गन्धाम्बुकर्मणि ॥
गन्धाम्बु-चन्दनाम्बुभ्यां तृतीयः पाक इष्यते ।
कल्कोऽत्र केशरं कुष्ठं त्वक् कालीयककुङ्कुमम् ॥
भद्रश्रियं ग्रन्थिपर्णं लताकस्तूरिका तथा ।
लवङ्गागुरुकक्कोलजातीकोषफलानि च ॥
एला लवङ्गकुरुवी च प्रत्येकं त्रिपलोन्मितम् ।
कस्तूरी षट्पलं चन्द्रात् पलं सार्द्धञ्च गृह्यते ॥
वेधार्थञ्च पुनश्चन्द्रमदौ देयौ तथोन्मितौ ।
महाप्रसारणी सेयं राजभोग्या प्रकीर्त्तिता ॥
गुणान् प्रसारणीनान्तु वहत्येषा बलोत्तमान् ।
काञ्जिकं मानतो द्रोणः शुक्तेनात्र विधीयते ॥ १०१ ॥

---

खाटि, मूर्च्छला, कुन्दरु, मुरा, वदरपत्र-नखी, अश्वखुर-नखी, उत्पलपत्र-नखी, तेजपत्र, पीयारा, खट्टाशी, चम्पककलिका, मदनक, रेणुका, पिडिङ्गफुल. [illegible] तुलसी, एषां प्रत्येक पल ३। गन्धोदकार्थं—तेजपत्र, पत्रक वाटियापत्र, वीरण मूल, सुधा, वेंत्लामूल एषां प्रति पल २५, कुष्ठ पल १२ तोला ४, पाकार्थ जल १०० शराव, शेष ५० शराव। अनेन गन्धोदकेन द्वितीयः पाकः। तृतीयपाके कल्कार्थं—नागकेशर, कुड, गुडत्वक्, कलम्बक, कुङ्कुम, श्वेतचन्दन, गाठियाना, लताकस्तूरी, लवङ्ग, अगुरु, कक्कोल, रसवास, जातीफल, एलाची, लवङ्गवाकल एषां प्रत्येक ३ पल, कस्तूरी पल ६, कर्पूर तोला १२। चन्दनोदकार्थं—श्वेतचन्दन पल ५०, पाकार्थं जल शराव ५०, शेष शराव २५। अथवा सुपिष्ट चन्दनं जले गोलयित्वा चन्दनोदक कार्य्यं, द्वितीयपाकोक्तगन्धोदकं शराव २५। ततस्तृतीयपाकवेधार्थं कर्पूर तोला १२, कस्तूरी पल ६ एवं सिद्धे तैले कर्पूरादि पिष्ट्वा तच्चूर्णमल्पतैलञ्च भाजने कृत्वा मिश्रणीयं, तदनु सिद्धोष्णसकल तैलेन सम्यक् मिश्रयित्वा शरावेण पिधाय स्थापनीयमिति वेधनविधिः॥ गुणान् प्रसारणीनामिति पूर्वोक्तप्रसारणीतैलानां ये गुणास्तानेव बलोत्तमानित्यधिकत्वेन वहत्येषेत्यर्थः॥ १०१॥

शुक्तकरणम्—

अत्र शुक्तविधिर्मण्ड: प्रस्थ: पञ्चाढ़कोन्मितम्।
काञ्जिकं कुड़वौ दध्नो गुड़प्रस्थोऽम्लमूलकात्॥
पलान्यष्टौ शोधिताद्रात् पलषोड़शकं तथा।
कणाजीरकसिन्धूत्थ-हरिद्रामरिचं पृथक्॥
द्विपलं भाविते भाण्डे घृतेनाष्ट-दिनस्थितम्।
सिद्धं भवति तच्छुक्तं यदावतार्य्य गृह्यते॥
तदा देयं चतुर्जातं पृथक्कर्षत्रयोन्मितम्॥ १०२॥

गन्धद्रव्यशुद्धि:—

पञ्चपल्लवतोयेन गन्धानां चालनं तथा।
शोधनञ्चापि संस्कारो विशेषश्चात्र वक्ष्यते॥
आम्रजम्बूकपित्थानां वीजपूरकविल्वयो:।
गन्धकर्मणि सर्वत्र पत्राणि पञ्चपल्लवम्॥ १०३॥

नखीशुद्धि:—

चण्डीगोमयतोयेन यदि वा तिन्तिड़ीजलै:।

---

काञ्जिकशब्देनात्र शुक्तं ग्राह्यमित्युक्तम्, अत्र यथा कर्त्तव्यं तदाह अत्रेत्यादि।—मण्डस्य भक्तमण्डस्य प्रस्थं। कुडवौ दध्न इति द्रवद्वैगुण्याच्चत्वारिंशदयम्। गुडस्य प्रस्थ इति षोडश पलानि। अम्लमूलकं काञ्जिकाधःस्थितभक्तक्लिन्नभाग इति व्यवहरन्ति, अन्ये तु काञ्जिकस्थं मूलककन्दमाहु:। शोधिताद्रादिति त्वग्रहिताद्रकात्। भाविते भाण्डे घृतेनेति घृतेन भाविते भाण्डे इत्यन्वय:। इद सर्वं भाण्डे कृत्वा अष्टदिनं यावत् स्थितं सत् शुक्तं सिद्धं भवति। अष्टदिनान्तरं यदा तत्तु उपयुज्यते तदा चतुर्जातं दत्त्वा तैलं देयम्। अन्ये तु प्रस्थं तण्डुलतोयत इत्यादिनैव शुक्तं कुर्वन्ति॥ १०२॥

अवान्तरे गन्धद्रव्यशुद्ध्यर्थं प्रकरणमाह पञ्चपल्लवतोयेनेति॥ १०३॥

नखीशुद्धिमाह चण्डात्यादि।—चण्डी महिषी, उक्तं हि "महिषी चोच्यते चण्डी सौरभी च निगद्यते" इति। अस्या गोमयं मलमित्यर्थ:। महिषीमलं सलि-

नखं संक्वाथयेदेभिरभावे मृण्मयेन तु॥
पुनरुद्धृत्य प्रक्षाल्य भर्जयित्वा निषेचयेत्।
गुड़पथ्याम्बुना ह्येवं शुध्यते नात्र संशयः॥ १०४॥
वचाशुद्धिः—गोमूत्रे चालम्बुषके पक्त्वा पञ्चदलीदके।
पुनः सुरभितोयेन वाष्पस्वेदेन स्वेदयेत्।
गन्धोग्रा शुध्यते ह्येवं रजनी च विशेषतः॥ १०५॥

मुस्तकशुद्धिः—

मुस्तकन्तु मनाक्क्षुण्णं काञ्जिके त्रिदिनोषितम्।
पञ्चपल्लवपानीयस्विन्नमातपशोषितम्॥
गुड़ाम्बुना सिच्यमानं भर्जयेच्चूर्णयेत् ततः।
अजशोभाञ्जनजलैर्भावयेच्चेति शुध्यति॥ १०६॥

शैलजशुद्धिः—

काञ्जिके क्वथितं शैलं भृष्ट्वा पथ्यागुड़ाम्बुना।

---

स्वनालीद्य नय्या स्तत्स्वेदनं कार्य्यमित्यर्थः, किन्तु गोमयेनाप्युत्स्वेद उक्त।
"गोविट् काञ्जिकचिञ्चाम्लसुस्विन्ना" इति तिन्तिडीजलैरिति तिन्तिडीसलिलैः।
लाभे मृण्मयेनापि कृष्णमृत्तिकामिश्रितजलेनेत्यर्थः। उक्त हि "क्वाथयेत् करज
कृष्णमृत्तिकामिश्रितजलं।" समुद्रकर्कटशुद्धिप्रकारोऽप्येवं तत्रैवोक्तम् "अनेनैव प्रका
रेण शुद्धिमायाति कर्कटः" ॥ १०४॥

वचाशुद्धिमाह गोमूत्र इत्यादि।—अलम्बुषक इति अलम्बुषासहितोदके,
अलम्बुषा च मुण्डिरी। सुरभितोयं गन्धोदकम्, अनेन वाष्पस्वेद. कार्य।
गन्धोदक स्थाल्यां निक्षिप्य तदुपरि सच्छिद्रं स्थाल्यन्तरं दत्त्वा मृदा स्थालीद्वयाव
काशमालिप्य सच्छिद्रस्थालीमध्ये वचां निक्षिप्य ततः शरावेण पिधाय अधो ज्वाला
देया इति वाष्पस्वेदविधिः। गन्धोग्रा वचा। रजनी च विशेषत इत्यनेन हरिद्रा
शुद्धिमपि वचाशुद्धिविधयैव कुर्य्यादिति बोधयति॥ १०५॥

मुस्तकशुद्धिमाह मुस्तकमित्यादि।—मनाक्क्षुण्णमिति दरदलितम् किञ्चित्पेषि-
तम् अजस्य जलं मूत्रम्॥ १०६॥

सिञ्चेदेवं पुनः पुष्पैर्विविधैरधिवासयेत् ॥ १०७ ॥

खट्टाशीशुद्धिः—

यथालाभमपामार्गस्नुह्यादिक्षारलेपितम्।
वाष्पस्वेदेन संस्विद्य पूतिं निर्लोमतां नयेत् ॥
दोलापक्कं पचेत् पश्चात् पञ्चपल्लववारिणि।
खलः साधुमिवोत्पीड्य ततो निःस्नेहतां नयेत् ॥
आजशोभाञ्जनजलैर्भावयेच्च पुनः पुनः।
शिग्रुमूले च केतक्याः पुष्पपत्रपुटे च तम्।
पचेदेवं विशुद्धः सन् मृगनाभिसमो भवेत् ॥ १०८ ॥
तुरुष्कं मधुना भाव्यं काश्मीरञ्चापि सर्पिषा।
रुधिरेणायसं प्राज्ञ गोमूत्रे ग्रन्थिपर्णकम् ॥
मधूदकेन मधुरीं पत्रकं तण्डुलाम्बुना ॥ १०९ ॥
ईषत्क्षारानुगन्धा तु दग्धा याति न भस्मताम्।
पीता केतकगन्धाढ्या लघुस्निग्धा मृगोत्तमा ॥ ११० ॥
पक्वात् कर्पूरतः प्राहुरपक्कं गुणवत्तरम्।
तत्रापि स्याद्यदक्षुद्रं स्फटिकाभं तदुत्तमम्।
पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तमम् ॥ १११ ॥
भङ्गे मनागपि न चेन्निपतन्ति ततः कणाः।

शैलजशुद्धिमाह काञ्जिक इत्यादि।—शैलमिति शैलज काञ्जिके विपाच्य पञ्चपल्लवतोयेन चालनमित्युपदेशः ॥ १०७ ॥

खट्टाशीशुद्धिमाह यथालाभमित्यादि।—दोलापक्कमिति खट्टाशीगन्धक वस्त्रेण पोट्टली बद्धा पञ्चपल्लवक्काथमध्ये दोलावलम्बमानां पचेत, तत आकृष्य निष्पीड्य निःस्नेहता नयेत्, तदनु शोभाञ्जनादि क्काथे बहुधा भावयेत। तदनुपिष्टशोभाञ्जनमूलकृते पिण्डे तन्निधाय तदनु केतकीपुष्पपत्रैर्वेष्टयित्वा कुशेन बद्धा पङ्के नालिप्य पुटपाकेन पचेत्, तदनु जात्यादिकुसुमैरधिवासयदित्युपदेशः ॥ १०८ ॥

सिह्लकादिशुद्धिमाह तुरुष्कमित्यादि। तुरुष्कं सिह्लकम्। रुधिरेणेति कुङ्कु-

मृगोशृङ्गोपमं कुष्ठं चन्दनं रक्तपीतकम् ॥ ११२ ॥ ११३ ॥
काकतुण्डाकृतिः स्निग्धो गुरुश्चैवोत्तमोऽगुरुः ॥ ११४ ॥
स्निग्धाल्पकेशरन्त्वस्रं शालिजो वृत्तमांसलः ॥ ११५ ॥
मुरा पीता वरा प्रोक्ता मांसी पिङ्गजटाकृतिः ॥ ११६ ॥
रेणुका मुद्गसंस्थाना शस्तमानूपजं घनम् ॥ ११७ ॥
जातीफलं सशब्दञ्च स्निग्धं गुरु च शस्यते ॥ ११८ ॥
एला सूक्ष्मफला श्रेष्ठा प्रियङ्गुः श्यामपाण्डरा ॥ ११९ ॥
नखमश्वखुरं हस्तिकर्णञ्चैव प्रशस्यते ॥ १२० ॥
एतेषामपरेषाञ्च नवता प्रबलो गुणः ॥ १२१ ॥

महासुगन्धि-लक्ष्मीविलासतैले—

जिङ्गीचोरकदेवदारुसरलव्याघ्रीवचाचेलक-
त्वक्पत्रैः सहगन्धपत्रकशटीपथ्याचधात्रीघनैः।
एतैः शोधितसस्कृतैः पलयुगैत्याख्यातया संख्यया
तैलप्रस्थमवस्थितः स्थिरमतिः कल्कैः पचेद्गान्धिकैः ॥

मांसीमुरामदनचम्पकसुन्दरीत्वग्-
ग्रन्थ्यम्बुरुक्नखकैर्द्वि पलैः सपृक्कैः।
श्रीवासकुन्दुरुनखीनलिकामिसीनाम्
प्रत्येकतः पलमुपाज्य पुनः पचेत्तु ॥

---

मन आयसमित्यत्र भाव्यमिति सर्वत्र वाच्यम। इदानीं गन्धद्रव्याणां प्रशस्तानां लक्षणमाह इषदित्यादि।—ईषत् क्षारगन्धानुगतो मृगो मृगमदः। रक्तपीतकमिति किञ्चिद्रक्तपीतसारम। अस्रमिति कुङ्कुमम। शालिज खट्टाशी ॥१०९—१२१॥

जिङ्गीत्यादि।—जिङ्गी मञ्जिष्ठा, व्याघ्री विङ्गेति ख्यात सुगन्धि द्रव्यम, नखीत्यर्थ। चेलकत्वक गवाक्षस्य त्वक पत्र तेजपत्रम्, गन्धपत्र वाटियापत्रम। पलयुगन्तु प्रत्येकम। गान्धिकैरिति गन्धविद्भिरित्यर्थः। एते कल्कैः प्रथम पाक। द्वितीयपाकार्थं कल्कमाह मांसीत्यादि।—सुन्दरी प्रियङ्गु, त्वक् गुडत्वक्, ग्रन्थि ग्रन्थिपर्णम्, अम्बु बालकम्, रुक कुष्ठम्, नलिका नालुका, मिसि मधुरी,

एलालवङ्गचलचन्दनजातिपूति-
कङ्कोलकागुरुलताघुसृणैः पलार्द्धैः।
कस्तूरिकाचसहितामलदीप्तियुक्तैः
पक्का तु मन्दशिखिनैव महासुगन्धम्॥
पञ्चद्विकेन वार्द्धेन मदात् कर्पूरमिष्यते॥
कर्पूरमदयोरर्द्धं पत्रकल्कादिहेष्यते॥
पक्वपूतेऽप्यशेष एव सम्यक् पेषणवर्त्तितम्।
दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते॥
प्रागुक्तो शुद्धिसंस्कारो गन्धानामिह तैः पुनः।
द्विगुणैर्लक्ष्मीविलासः स्यादयं तैलसत्तमः॥
पञ्चपत्राम्बुना चाद्यो द्वितीयो गन्धवारिणा।
तृतीयोऽपि च तेनैव पाको वा धूपिताम्बुना॥
तैलयुग्ममिदं तूर्णं विकारान् वातसम्भवान्।
क्षपयेज्जनयेत पुष्टिं कान्तिं मेधां धृतिं धियम्॥ १२२॥
इति वातव्याधिचिकित्सा॥

---

गयमाहरीति लोके। एभिर्मांसीप्रभृतिभिरिष्यते द्वितीयः पाकः। तृतीयपाकार्थं कल्कमाह एलेत्यादि। चलं सिह्लकं, चन्दनं श्वेतचन्दनम्, जातिः जातिफलम्, पूतिः खट्टाशी लता लताकस्तूरी, घुसृणं कुङ्कुमम्, अक्षसहिता कर्षपरिमितेत्यर्थः, अमलदीप्तिः चन्द्रः तन्नामत्वात् कर्पूरमित्यर्थः। एभिस्तृतीयः पाकः। कर्पूरं कियन्मानं ग्राह्यमित्यत आह पञ्चेत्यादि।—मदात् निर्दिष्टकस्तूरिकाकर्षात्, पञ्चधा विभक्तात् तत्रैकौ भागौ रक्तिकाद्वयाधिकमाषत्रयं भवति, तथा मानेन कर्पूरस्य द्वौ भागौ ग्राह्यावित्यर्थः। अतः कर्पूरस्य रक्तिकाचतुष्टयाधिको माषकषट्क इति पिण्डार्थः। पक्षान्तरमाह, अर्द्धेन वेति कस्तूरीकर्षापेक्षया चार्द्धेन, तेन कर्पूरस्याष्टौ माषका इत्यर्थः। ननु पत्रकल्के कियन्मानौ कर्पूरमदौ देयावित्यत आह कर्पूरमदयोरित्यादि. इह तैलकल्के पत्रकल्कात् पत्रकल्कमानमपेक्ष्य कर्पूरमदयोरर्द्धमिह तैलं कल्कत्वेन इष्यते तेन तैलकल्करूपतया यावन्मानौ

## अथ वातरक्तचिकित्सा।

बाह्यं लेपाभ्यङ्गसेकोपानाहैर्वातशोणितम्।
विरेकास्थापनस्नेहपानैर्गम्भीरमाचरेत्॥
द्वयोर्मुञ्चेदसृक् शृङ्गसूच्यलाबु जलौकसा।
देशाद्देशं व्रजेत् स्राव्यं शिराभिः प्रच्छनेन वा।
अङ्गग्लानौ च न स्राव्यं रूक्षे वातोत्तरे च यत्॥ १॥
अमृतानागरधन्याक-कर्षत्रयेण पाचनं सिद्धम्।
जयति सरक्तं वातं सामं कुष्ठान्यशेषाणि॥ २॥

---

कर्पूरमदावुक्तौ पलकल्के तु तदपेक्षया द्विगुणौ कर्पूरमदौ देयाविति पलकल्कमानमपि भङ्ग्या कथितं भवति, तेन पलकल्के कस्तूर्याः कर्षद्वयम्, कर्पूरस्य तु अष्टरक्तिकाधिका द्वादश माषकाः, किंवा कर्ष इति। पत्रकल्कशब्दस्यार्थमाह पक्कपत्र इत्यादि। पूर्वोक्तौ गन्धानां शुद्धिसंस्कारावत्रापि कार्यौ तथा ते पूर्वोक्तमहासुगन्धितैलसाधनद्रव्यैः जिह्वादिभिर्द्विगुणैर्यदि तैलमतत् साध्यते, तदा इदमेव तैलं लक्ष्मीविलाससंज्ञकञ्च भवतीत्याह प्रागुक्ताविल्यादि पाकार्थमुभयोरपि तैलयोः क्रमात् द्रवद्रव्यमाह पल्लवाम्बु नेत्यादि।— आम्रपत्रं जम्बूपत्रं कपित्थपत्रं विल्वपत्रं वीजपूरकपत्रम्, एतत्सर्वमष्टगुणं जलं दत्त्वा चार्द्धभागावशेषं पचेत्। गन्धवारिणा गन्धोदकेन तच्चोक्तमेव। धूपिताम्बुनेति अगुर्वादिधूपितजलेनेत्यर्थः॥ १२२॥

इति वातव्याधिचिकित्साविवृतिः।

---

वातव्याधिविशेषत्वाद्वातरक्तचिकित्सामाह वाह्यमित्यादि।—वाह्यमित्युत्तानं त्वङ्मांसाश्रयमित्यर्थः। गम्भीरन्तु मेदःप्रभृतिधात्वाश्रयं तथा चोक्तं "त्वङ्मांसाश्रयमुत्तानं गम्भीरन्त्वन्तराश्रयम्" इति। द्वयोरिति उत्तानगम्भीरयोः। देशाद्देशं व्रजेदिति स्थानान्तरप्रसरणशीलम् अङ्गग्लानाविति कार्श्ये॥ १॥

अमृतेत्यादि।—प्रत्येकमेकं कर्षं गृहीत्वा कर्षत्रयमित्यर्थः॥ २॥

वत्सादन्युद्भवः क्वाथः पीतो गुग्गुलुसंयुतः।
समीरणसमायुक्तं शोणितं सम्प्रसाधयेत्॥ ३॥
वासागुडूचीचतुरङ्गुलानामेरण्डतैलेन पिबेत् कषायम्।
क्रमेण सर्वाङ्गजमप्यशेषं जयेदसृग्वातभवं विकारम्॥४॥
लीढ्वा मुण्डीतिकाचूर्णं मधुसर्पिःसमायुतम्।
छिन्नाक्वाथं पिबन् हन्ति वातरक्तं सुदुस्तरम्॥ ५॥

तिस्रोऽथवा पञ्च गुडेन पथ्या।
जग्ध्वा पिबेच्छिन्नरुहाकषायम्।
तद्वातरक्तं शमयत्युदीर्ण-
माजानुसम्भिन्नमपि ह्यवश्यम्॥ ६॥
घृतेन वातं सगुडा विबन्धम्
पित्तं सिताढ्या मधुना कफञ्च।
वातासृगुग्रं रुबुतैलमिश्रा
शुण्ठ्यामवातं शमयेद् गुडूची॥ ७॥

गुडूच्याः स्वरसं कल्कं चूर्णं वा क्वाथमेव वा।
प्रभूतकालमासेव्य मुच्यते वातशोणितात्॥ ८॥

---

वत्सादनीत्यादौ।—पीतो गुग्गुलुसंयुत इति शोधमार्थं प्रायेण गुग्गुलोः कर्षं, कर्षार्द्धं वा संशमनार्थन्तु माषकचतुष्टयमिति; एवं सर्वत्र॥ ३॥

वासेत्यादौ।—चतुरङ्गुलं शोनालुफलम्। तन्त्रान्तरसंवादादेकक्वाथ्यापेक्षया द्विगुणमेवैरण्डतैलं प्रक्षेप्यमित्याहुः॥ ४॥

लीढ्वेत्यादौ।—मुण्डीतिका मुण्डिरीति ख्याता॥ ५॥

तिस्रोऽथवेति पुरुषमपेक्ष्य चाग्निमानात् तिस्रः पञ्च वा पथ्याः पिष्टा समगुडेन खादेत्; तदनु गुडूच्याः कषायमनुपेयम्॥ ६॥

घृतेनेत्यादि।—षड् योगाः॥ ७॥

गुडूच्याः स्वरसेन क्वाथेन चूर्णेन वा॥ ८॥

दशमूलीशृतं क्षीरं सद्यःशूलनिवारणम् ।
परिषेकोऽनिलप्राये तद्वत् कोष्णेन सर्पिषा ॥ ९ ॥
पटोलकटुकाभीरुत्रिफलामृतसाधितम् ।
क्वाथं पीत्वा जयेज्जन्तुः सदाहं वातशोणितम् ॥ १० ॥
गोधूमचूर्णाजपयो घृतञ्च सच्छागदुग्धो रुवुबीजकल्कः ।
लेपे विधेयं शतधौतसर्पिः सेके पयश्चाविकमेव शस्तम् ॥ ११ ॥
लेपः पिष्टास्तिलास्तद्वद्भृष्टाः पयसि निर्वृताः ॥ १२ ॥
कटुकामृतयष्ट्याह्वशुण्ठीकल्कं समाक्षिकम् ।
गोमूत्रपीतं जयति सकफं वातशोणितम् ॥ १३ ॥
धात्रीहरिद्रामुस्तानां कषायं वा कफाधिके ।
कोकिलाक्षामृताक्वाथं पिबेत् कृष्णां कफाधिके ॥ १४ ॥
पथ्यभोजी त्रिसप्ताहान्मुच्यते वातशोणितात् ।

---

दशमूलीत्यादौ।—दशमूलीशृत क्षीर परिषेक इति योज्यम, न तु पेयम शूल वातरक्तप्रदेशे व्यथा। तद्वदिति परिषेक ॥ ९ ॥

पटोलेत्यादौ।—कटुका कटुरोहिणी, अभीरु शतावरी, अमृत गुडूची। छान्दसत्वात ह्रस्वः अय योगः पित्तोत्तर ॥ १० ॥

गोधूमेत्यादि।—गोधूमचूर्ण छागदुग्धघृताभ्या सन्धाय कोष्ण कृत्वा वातोत्तर लेप, शीत रक्तोत्तरे। वृन्दे तु अस्मिन् योगे घृत न पठ्यते, तेन घृत विभाष्यय योग। सघृतः पुनरय चरके पठ्यते, यथा—"वाते सरक्ते सघृत. प्रदेहो गोधूम चूर्ण छगलीपयश्च" इति। उभयमपि प्रमाण स्मृतिद्वैधवत ॥ ११ ॥

लेप इत्यादौ।—तिलान् दुग्धेन पिष्टा ततो भृष्टा पुनर्दुग्धे निर्वापयेदित्यर्थ। वृद्धवाग्भटसवादात, किन्तु खोलकभृष्टतिलान् दुग्ध निर्वापितान्। तेनैव दुग्धेन पिष्टा लेप इति व्यवहरन्ति वृद्धाः। तद्वदित्यनेन पूर्वोक्तयोगफलमतिदिश्यते ॥ १२ ॥

कटुकेत्यादि।—कटुका कटुरोहिणी। एषा चतुर्णां प्रत्येक द्विमाषक कल्की कृत्य चतुर्माषकेण मधुना गोमूत्रपलार्द्धेन च पेयम् ॥ १३ ॥

कफरक्तप्रशमनं कच्छूवीसर्पनाशनम् ॥
वातरक्तप्रशमनं हृद्यं गुड़घृतं स्मृतम् ॥ १५ ॥
संसर्गेषु यथोद्रिक्तं मिश्रं वा प्रतिकारयेत् ॥ १६ ॥
सर्वेषु सगुडां पथ्यां गुडूचीक्वाथमेव वा ।
पिप्पलीवर्द्धमानं वा शीलयेत् सुसमाहितः ॥ १७ ॥

गुडूचीतैलम्—

गुडूचीक्वाथकल्काभ्यां पचेत् तैलं तिलस्य च ।
पयसा च समं पक्वा भिषङ्मन्देन वह्निना ॥
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ।
त्वग्दोषं व्रणवीसर्पकण्डूदद्रुविनाशनम् ॥ १८ ॥

नवकार्षिकः—

त्रिफलानिम्बमञ्जिष्ठा वचा कटुकरोहिणी ।
वत्सादनी दारुनिशा कषायो नवकार्षिकः ॥
वातरक्तं तथा कुष्ठं पामानं रक्तमण्डलम् ।
कुष्ठं कापालिकाकुष्ठं पानादेवापकर्षति ॥
पञ्चरत्तिकमाषेण कार्योऽयं नवकार्षिकः ।
किन्त्वेवं साधिते क्वाथे योग्या मात्रात्र दीयते ॥ १९ ॥

---

कोकिलाक्षेत्यादौ।—कोकिलाक्षमूलं ग्राह्यम्। हृद्यं गुडघृतमिति आहारं विहाय गुडघृतेनैव समभागेन साहित्यं कर्त्तव्यमित्याहुः। कच्छूः दृष्फलमेतत् ॥१४।१५॥

संसर्गेष्विति। संसर्गजेषु द्वन्द्वजेषु यथोद्रिक्तमित्येकदोषोल्वणे, मिश्रमिति समकुपिते ॥ १६—१८ ॥

नवकार्षिके दारुनिशा दारुहरिद्रा। पञ्चरत्तिकमाषेण मानेन त्रिफलादीनां नव कर्षान् गृहीत्वा-षष्टगुणजलेन क्वाथः, किंवा व्यवहारिभिरेव नवकर्षैः क्वाथः कार्यः। परन्तु अत्र चायोग्यमात्रापेक्षया अधिकं यद्भवति तत् त्याज्यम्; एतदेवाह

गुडूचीघृतम्—

गुडूचीक्वाथकल्काभ्यां सपयस्कं शृतं घृतम् ।
हन्ति वातं तथा रक्तं कुष्ठं जयति दुस्तरम् ॥ २० ॥

शतावरीघृतम्—

शतावरीकल्कगर्भं रसे तस्याश्चतुर्गुणे ।
क्षीरतुल्यं घृतं पक्वं वातशोणितनाशनम् ॥ २१ ॥

अमृताद्यं घृतम्—

अमृता मधुकं द्राक्षा त्रिफला नागरं बला ।
वासारग्वधवृश्चीर-देवदारुत्रिकण्टकम् ॥
कटुका सवरी कृष्णा काश्मर्य्यस्य फलानि च ।
रास्नाक्षुरकगन्धर्व-वृद्धदारघनोत्पलैः ॥
कल्कैरेभिः समैः कृत्वा सर्पिःप्रस्थं विपाचयेत् ।
धात्रीरसं समं दत्त्वा वारित्रिगुणसंयुतम् ॥
सम्यक्सिद्धन्तु विज्ञाय भोज्ये पाने च शस्यते ।
बहुदोषान्वितं वात रक्तेन सह मूर्च्छितम् ।
उत्तानञ्चापि गम्भीरं त्रिकजङ्घोरुजानुजम् ।
क्रोष्टुशीर्षे महाशूले चामवाते सुदारुणे ॥
वातरोगोपसृष्टस्य वेदनाञ्चातिदुस्तराम् ।
मूत्रकृच्छ्रमुदावर्त्तं प्रमेहं विषमज्वरम् ॥
एतान् सर्वान् निहन्त्याशु वातपित्तकफोद्भवान् ॥
सर्वकालोपयोगेन वर्णायुर्बलवर्द्धनम् ।

---

पञ्चरक्तिकमाषेणेत्यादि । अष्टगुणजलदानार्थञ्च वृन्दम कर्षादौ तु पलं यावदित्यादि परिभाषा लिखितैव ॥ १९ ॥

गडूचीघृते क्वाथश्चतुर्गुणः, क्षीरन्तु स्नेहसममिति व्यवहरति ॥ २० ॥

एव शतावरीघृतम् ॥ २१ ॥

अश्विभ्यां निर्म्मितं श्रेष्ठं घृतमेतदनुत्तमम् ॥ २२ ॥

दशपाकबलातैलम्—

बलाकषायकल्काभ्यां तैलं क्षीरचतुर्गुणम् ।
दशपाकं भवेदेतद्वातासृग्वातपित्तजित् ॥
धन्यं पुंसवनञ्चैव नराणां शुक्रवर्द्धनम् ।
रेतोयोनिविकारघ्नमेतद्वातविकारनुत् ॥ २३ ॥

गुडूच्यादितैलम्—

गुड़ूचीक्वाथदुग्धाभ्यां तैलं द्राक्षारसेन वा ।
सिद्धं मधुककाश्मर्य्यरसैर्वा वातरक्तनुत् ॥ २४ ॥

---

अमृतेत्यादौ ।--वरी शतावरी तया सह वर्त्तमानेति सवरी । गन्धर्वं एरण्ड' इत्यन्ये नीलोत्पलम ॥ २२ ॥

दशपाकेत्यादौ न बलाक्वाथचतुर्गुण' चतुर्गुणक्षीरसाहचर्य्यात । तैलमिह यथोक्तमानेन द्रवेण कल्केन च दश वारान पक्तव्यम् वीर्य्योत्कर्षार्थम । अनेन पाकेन स्नेहस्यैऽप्यव नास्ति, क्षीरगतस्नेहेन न्यूनभागपूरणात । अयञ्च बहुपाको पदेश प्रकृतिसमसमवेतव्याध्यभिप्रायेण ज्ञेय । तेनान्यत्रापि प्रकृतिसमसम-वेतव्याधौ तैलादिष्वनुक्तोऽपि बहुधा पाको वीर्य्योत्कर्षाय युज्यत एव । विकृ-तिविषमसमवेते तु यथोद्दिष्टमेव कार्य्य संयोगशक्तेरचिन्त्यत्वात् । तस्मात विकृतिविषमसमवेते व्याधिमहिम्ना व्याधिहरमेव भेषज दीयते इति कृत्वा यथो-द्दिष्टमेव कार्य्यम् , प्रकृतिसमसमवेते तु दोषक्षयादेव व्याधिक्षय इति दोषहरमेव भेषज देयमिति, दोषप्रत्यनीकतया अनुक्तमपि क्रियत एव । न च दोषहरमेव व्याधिहरमिति वाच्यम, वातकारिणापि खदिरेण वातिककुष्ठानुपशयप्रसङ्गात , खदिर हि वातजनकमपि कुष्ठहरत्व प्रभावाद्वातिकमपि कुष्ठमुपशमयति, न तु वातम् । किञ्च यदि दोषहरमेव व्याधिहरमिति स्वीक्रियते तदा प्रतिव्याधौ बहु-प्रयोगकथनमपि मुनीना व्यर्थ स्यात । तत्तद्दोषप्रत्यनीकभेषजगणकथनेनैवान्यथा सिद्धे । तस्माद्व्याधिहरे संयोगस्य प्रधानत्वात् यथोक्तविध्यनुसरणमेव शरणम् । दोषहरे तु वीर्य्योत्कर्षार्थमुक्तोऽनुक्तो वा बहुधा पाकोऽपि दोषप्रत्यनीकतया युक्त एवेत्याहु । किञ्च बहुवित्तव्ययायाससाध्यत्वात् वैद्यैर्नायमनुगम्यते पन्था इति ॥ २३ ॥

गुडूचीत्यादि ।--गुडूचीत्यादि तैलत्रयमकल्कम् ॥ २४ ॥

खुड्डकपद्मकतैलम्—

पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् ।
स्यात् पिष्टैः सर्जमञ्जिष्ठावीराकाकोलिचन्दनैः ।
खुड्डाकपद्मकमिदं तैलं वातास्रदोषनुत् ॥ २५ ॥

नागवलातैलम्—

शुद्धां पचेन्नागबलातुलान्तु विस्राव्य तैलाढकमत्र दद्यात् ।
अजापयस्तुल्यविमिश्रितन्तु नतस्य यष्टीमधुकस्य कल्कम् ॥
पृथक् पचेत् पञ्चपलं विपक्वं तद्वातरक्तं शमयत्युदीर्णम् ।
वस्तिप्रदानादिह सप्तरात्रात् पीतं दशाहात् प्रकरोत्यरोगम् ।
तुलाद्रव्ये जलद्रोणो द्रोणे द्रव्यतुला मता ॥ २६ ॥

पिण्डतैलम्—

समधूच्छिष्टमञ्जिष्ठं ससर्जरससारिवम् ।
पिण्डतैलं तदभ्यङ्गाद्वातरक्तरुजापहम् ॥ २७ ॥

महापिण्डतैलम्—

शारिवा सर्जमञ्जिष्ठा यष्टिसिक्थैः पयोऽन्वितैः ।

---

खुड्डाकपद्मकतैले वीरा चीरकाकोली । खुड्डाकपद्मकं श्वेतपद्मम् ॥ २५ ॥

नागबलातैले नागबला गोरक्षचाकुलियेति ख्याता । अजापयस्तत्तुल्यं नत तगरपादिका ॥ २६ ॥

मधूच्छिष्टेत्यादि । —मधूच्छिष्टं मधुसिक्थकम्, सर्जरसो धूनकः ; शारिवा अनन्तमूलम् । जलञ्चात्र चतुर्गुणम् । पिण्डतैलभाषया चात्र वस्त्रादिपूतमेवैतत् तैलं कर्त्तव्यमित्याहुः । वैद्यास्तु पूत्वैव व्यवहरन्ति, किन्तु चरके समधूच्छिष्टेत्यादेः पूर्वम् "आरनालाढके तैलं पादसर्जरसं शृतम् । प्रभूते खजितं तोयं ज्वरदाहार्त्तिनुत् परम्" इत्युक्तम्, तेन आरनालाढकसाध्यतैल एव, सर्जरसस्थाने मधूच्छिष्टदानाप्रचपादपि पिण्डतैलत्वमनेनोच्यते इति चक्रः । जतूकर्णेऽप्युक्तं "काञ्जिके सर्जरसमथृतं खजितम् । बहुना जलेन दाहहितं विकसानन्तासिक्थकसर्जरसैर्युक्तं मथितं वा इति ॥ २७ ॥

तैलं पक्वं विमञ्जिष्ठैरुवीर्वा वातरक्तनुत् ॥ २८ ॥

कैशोरको गुग्गुलुः—

वरमहिषलोचनोदर-सन्निभवर्णस्य गुग्गुलोः प्रस्थम्।
प्रक्षिप्य तोयराशौ त्रिफलाञ्च यथोक्तपरिमाणाम् ॥
द्वात्रिंशच्छिन्नरुहापलानि देयानि यत्नेन।
विपचेत् तदप्रमत्तो दर्व्या सङ्घट्टयन् मुहुर्यावत् ॥
अर्द्धक्षयितं तोयं जातं ज्वलनस्य सम्पर्कात्।
अवतार्य्य वस्त्रपूतं पुनरपि सम्पादयेत् पात्रे ॥
सान्द्रीभूते तस्मिन्नवतार्य्य हिमोपलप्रख्ये।
त्रिफलाचूर्णार्द्धपलं त्रिकटोश्चूर्णं षड़क्षपरिमाणम् ॥
क्रिमिरिपुचूर्णार्द्धपलं कर्षं कर्षं त्रिवृद्दन्त्योः।
पलमेकञ्च गुडूच्या दत्त्वा संमूर्च्छ्य यत्नेन ॥
उपयुज्य चानुपानं यूषं तोयं सुगन्धि सलिलेन।
इच्छाहारविहारो भेषजमुपयुज्य सर्वकालमिदम् ॥
तनुरोधि वातशोणितमेकजमथ द्वन्द्वजं चिरोत्थञ्च।
जयति स्रुतं परिशुष्कं स्फुटितञ्चाजानुजञ्चापि ॥
व्रणकासकुष्ठगुल्मं श्वयथूदरपाण्डुमेहांश्च।

---

अपरपिण्डतैलद्वयमाह शारिवेत्यादि।—यष्टिर्यष्टिमधुकम। पयश्चतुर्गुणम् द्रव्यान्तराभावात। विमञ्जिष्ठैरित्यादि तु तृतीयं पिण्डतैलम। विमञ्जिष्ठैः मञ्जिष्ठारहितैः शारिवादिभिः कल्कैरुवीरैरण्डस्य तैलं चतुर्गुणेन पयसा सह पक्वं सत् अपरपिण्डतैलं भवतीत्यर्थः। विमञ्जिष्ठमिति पाठे क्रियाविशेषणम् ॥ २८ ॥

कैशोरगुग्गुलौ वरमहिषलोचनोदरसन्निभवर्णस्येति लोहितवर्णस्येत्यर्थः, मत्तमहिषलोचनोदरवर्णो हि लोहित एव। त्रिफलाञ्च यथोक्तपरिमाणामिति प्रत्येकं प्रस्थमानाम्। छिन्नरुहा गुडूची तस्या द्वात्रिंशत् पलानि। एवं मिलित्वा षण्णवति पलानि क्वाथ्यानि। अत्र हि द्रवद्वैगुण्यात् उत्सर्गसिद्धं जलं दीयमानं षण्णवतिशरावपरिमितं भवति। षण्णवतिशरावैश्च षड़ाढ़का भवन्ति। एतत् सर्वमभि

मन्दाग्निञ्च विबन्धं प्रमेहपीड़कांश्च नाशयत्याशु ॥
सततं निषेव्यमाणः कालवशाद्धन्ति सर्वगदान् ।
अभिभूय जरादोषं याति हि कैशोरकं रूपम् ॥
प्रत्येकं त्रिफलाप्रस्थो जलं तत्र षड़ाढ़कम् ।
गुड़वद्गुग्गुलोः पाकः सबन्धस्तु विशेषतः ॥ २८ ॥

अमृतागुग्गुलुः—

प्रस्थमेकं गुडूच्यास्तु अर्द्धप्रस्थञ्च गुग्गुलोः ।
प्रत्येकं त्रिफलायाश्च तत्प्रमाणं विनिर्द्दिशेत् ॥
सर्वमेकत्र संक्षुद्य साधयेत् त्वर्म्मणेऽम्भसि ।
पादशेषं परिस्राव्य पुनरग्नावधिश्रयेत् ॥
तावत् पचेत् कषायं तं यावत् सान्द्रत्वमागतम् ।

---

भाय वक्ष्यति प्रत्येक त्रिफलाप्रस्थ इत्यादि।—अन्ये त्वाहुः त्रिफलाञ्च यथोक्तपरिमाणामिति मिलित्वा प्रस्थमाना समुदायप्रधानत्वात्, निर्देशस्य। तेन गुग्गुलुप्रभृतीनि क्वाथ्यानि मिलित्वा चतुःषष्टिपलानि भवन्ति, तत्र चौत्सर्गसिद्ध जलं चतुःषष्टिशराव मेव, चतुःषष्टिशरावैश्च द्रोणी भवति; तेन तोयराशिशब्देनात्र द्रोण एव बोध्य इति। अत्र गुग्गुलुं पुटके बध्वा अपरैः क्वाथ्यैः सह तोयराशौ क्वथनीयः। पश्चात् गुग्गुलुं विहाय क्वाथ्यं त्यक्त्वा सिद्धे तदुष्णक्वाथे पुनस्तं गुग्गुलुं सम्मिश्र पाचनीयं यावत् घनीभवति, दर्वीप्रलेपेऽवतार्य्य त्रिफलादिचूर्णं प्रक्षिपेदिति ये तु गुग्गुलुं विहाय क्वाथं कृत्वा पश्चात् सिद्धे कदुष्णक्वाथे गुग्गुलुं गालयन्ति, तन्न युक्तं, गुग्गुलोः क्वाथ्यत्वेनोक्तत्वात्। एवं वक्ष्यमाणामृताख्यगुग्गुलावपि द्रष्टव्यम्। हिमोपलप्रख्य इति हिमशिलावत् शीते। अत्र चेत्थमेव शक्त्युत्कर्षं वचनादुन्नीयते। अन्यत्र तु कोष्णे एव चूर्णानां दानं दृश्यते। अत्र त्रिफलाचूर्णार्द्धपलं मिलित्वैव युज्यते, मानप्रधानत्वात् निर्देशस्य; प्रत्येकन्तु व्यवहरन्ति। त्रिकटीचूर्णं षड़क्षपरिमाणमिति मिलित्वा। क्रिमिरिपुर्विडङ्गः। पूर्वं तोयमित्यादौ वाशब्दो बोध्यः। कैशोरकं रूपमिति किशोरो यौवनोन्मुखोऽश्वशावकः॥ २९ ॥

अमृताख्यगुग्गुलौ तत्प्रमाणमिति प्रस्थार्द्धम्। व्योषस्यार्द्धपलमिति मृप्रत्येकं,

दन्तीव्योषविड़ङ्गानि गुडूचीत्रिफलात्वचः ॥
ततश्चार्द्धपलं पूतं गृह्णीयाञ्च प्रति प्रति।
कर्षन्तु त्रिवृतायास्तु सर्व्वमेकत्र कारयेत् ॥
तस्मिन् सुसिद्धं विज्ञाय कवोष्णे प्रक्षिपेद् बुधः।
ततश्चाग्निबलं ज्ञात्वा तस्य मात्रां प्रदापयेत् ॥
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम्।
दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम् ॥
नाड्याढ्यवातश्वयथून् सर्व्वानेतान् व्यपोहति।
अश्विभ्यां निर्म्मितः पूर्व्वममृताख्यो हि गुग्गुलुः।
अर्द्धप्रस्थं त्रिफलायाः प्रत्येकमिह गृह्यते ॥ ३० ॥

पुनर्नवागुग्गुलुः—

अमृतायाश्च द्विप्रस्थं प्रस्थमेकञ्च गुग्गुलोः।
प्रत्येकं त्रिफलाप्रस्थं वर्षाभूप्रस्थमेव च ॥
सर्व्वमेतच्च संक्षुद्य क्वाथयेन्नल्वणेऽम्भसि।
पुनः पचेत् पादशेषं यावत् सान्द्रत्वमागतम् ॥
दन्तीचित्रकमूलानां कणाविश्वफलत्रिकम्।
गुडुचीत्वग्विडङ्गानां प्रत्येकार्द्धपलोन्मितम् ॥
त्रिवृताकर्षमेकन्तु सर्व्वमेकत्र चूर्णयेत्।
सिद्धे चोष्णे क्षिपेत् तत्र अमृतागुग्गुलोः परम् ॥
यथा चाग्निबलं खादेदम्लपित्ती विशेषतः।
वातरक्तं तथा कुष्ठं गुदजान्यग्निसादनम् ॥

---

त्रिफलात्वच इति निरस्थित्रिफलायाः प्रत्येकमर्द्धपलम्। तत्प्रमाणमिति पदस्यार्थ माह अर्द्धप्रस्थं त्रिफलाया इत्यादि ॥ ३० ॥

पुनर्नवागुग्गुलौ त्वक् गुड़त्वक्। अमृतागुग्गुलोः परमित्यनन्तरं मात्रामिति शेषः. तेनपरमित्यनन्तरममृतागुग्गुलोर्मात्रां यथावह्निबलं खादेदित्यर्थः। अमृताख्य

दुष्टव्रणप्रमेहांश्च सामवातं भगन्दरम्।
नाड्याढ्यवातं श्वयथून् हन्यात् सर्वामयानयम्॥
अश्विभ्यां निर्म्मितो ह्येषोऽमृताख्यो गुग्गुलुः पुरा॥ ३१॥

योगसारामृतः—

शतावरी नागबला वृद्धदारकमुच्चटा।
पुनर्नवामृता कृष्णा वाजिगन्धा त्रिकण्टकम्॥
पृथग्दशपलान्येषां श्लक्ष्णचूर्णानि कारयेत्।
तदर्द्धशर्करायुक्तं चूर्णं सम्मर्द्दयेद् बुधः॥
स्थापयेत् सुदृढे भाण्डे मध्वर्द्धाढकसंयुतम्।
घृतप्रस्थेन चालोड्य त्रिसुगन्धिपलेन तु॥
तं खादेदिष्टचेष्टात्मा यथावह्निबलं नरः।
वातरक्तं क्षयं कुष्ठं कार्श्यं पित्तास्रसम्भवम्॥
वातपित्तकफोत्थांश्च रोगानन्यांश्च तद्विधान्।
हत्वा करोति पुरुषं बलीपलितवर्जितम्॥
योगसारामृतं नाम लक्ष्मीकान्तिविवर्द्धनम्॥ ३२॥
दिवास्वप्नाग्निसन्तापं व्यायामं मैथुनं तथा॥
कटूष्णगुर्वभिष्यन्दिलवणाम्लानि वर्जयेत्॥ ३३॥

बृहद्गुडूचीतैलम्—

तुलां पचज्जलद्रोणे गुडूच्याः पादशेषितम्।
क्षीरद्रोणञ्च ताभ्यान्तु पचेत् तैलाढकं शनैः॥
कल्कैर्मधुकमञ्जिष्ठा जीवनीयगणस्तथा।
कुष्ठैलागुरुमृद्वीका मांसी व्याघ्रीनखं नखी॥
हरेणु सारिवणी व्योषं शताह्वा भृङ्गसारिवे।

---

गुग्गुलु पुरेति अमृतानिर्मितत्वादमृताख्य.। यद्यप्यमृतायोगादमृताख्यगुग्गुलुस्तथापि पुनर्नवायोगात पुनर्नवागुग्गुलुरिति नामान्तर, पूर्वोक्तामृताख्यगुग्गुलोर्व्य नर्मदाथे वा॥ ३१॥

त्वक्पत्रै वर्चविक्रान्ता स्थिरा चामलकी तथा ॥
नतं केशरह्रीवेर-पद्मकोत्पलचन्दनैः।
सिद्धं कर्षसमैर्भागं पानाभ्यङ्गानुवासने ॥
परं वातास्रजान् हन्ति सर्वजानन्तरस्थितान्।
धन्यं पुंसवनं स्त्रीणां गर्भदं वातपित्तनुत्।
स्वेदकण्डूरुजापामा-शिरःकम्पार्दितामयान्।
हन्याद्व्रणक्षतान् दोषान् गुडूचीतैलमुत्तमम् ॥ ३४ ॥
इति वातरक्तचिकित्सा ॥

---

## अथोरुस्तम्भ-चिकित्सा।

श्लेष्मणः क्षपणं यत् स्यान्न च मारुतकोपनम्।
तत् सर्वं सर्वदा कार्य्यमूरुस्तम्भस्य भेषजम् ॥ १ ॥
न तस्य स्नेहनं कार्य्यं न वस्तिर्न विरेचनम्।
सर्वो रूक्षः क्रमः कार्य्यस्तत्रादौ कफनाशनः ॥
पश्चाद्वातविनाशाय कृत्स्नः कार्य्यः क्रियाक्रमः ॥ २ ॥
शिलाजतुं गुग्गुलुं वा पिप्पलीमथ नागरम्।

---

योगसारामृते तदर्द्धशर्करायुक्तमिति समुदितचूर्णार्द्धमाना शर्करा। त्रिसुगन्धि-शर्लनेति प्रत्येकम् ॥ ३२—३४ ॥

इति वातरक्तचिकित्साविवृतिः।

---

आवृतवातजन्यत्वसामान्याद्वातरक्तानन्तरमूरुस्तम्भचिकित्सामाह श्लेष्मण इत्यादि। —एवंविधस्य भेषजमरिष्टादि ॥ १ ॥

ऊरुस्तम्भे स्नेहनादिनिषेधमाह न तस्येत्यादि।—स्नेहनमिति पानाभ्यङ्गाभ्यां; किंवा स्नेहनमिति वस्तिकर्मविशेषणं, तेनानुवासनमित्यर्थः। विरेचनशब्देनात्र वमनमपि बोध्यम्, ऊरुस्तम्भे वमनस्यापि निषिद्धत्वात् ॥ २ ॥

ऊरुस्तम्भे पिबेन्मूत्रै र्दशमूलीरसेन वा ॥ ३ ॥
भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवाः।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणाः ॥
पिप्पलीपिप्पली-मूलभल्लातक्काथ एव वा।
कल्को वा समधु देय ऊरुस्तम्भनिवर्हणः ॥ ४ ॥
त्रिफलाचव्यकटुकं ग्रन्थिकं मधुना लिहेत्।
ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिबेत् ॥ ५ ॥
लिह्याद्वा त्रिफलाचूर्णं क्षौद्रेण कटुकायुतम्।
सुखाम्बुना पिबेद्वापि चूर्णं षड्धरणं नरः ॥ ६ ॥
पिप्पलीवर्द्धमानं वा माक्षिकेण गुड़ेन वा।
ऊरुस्तम्भे प्रशंसन्ति गण्डीरारिष्टमेव वा ॥ ७ ॥

---

शिलाजतुमित्यादि।—शिलाजतु शोधितमेवोपयोज्यम्। प्रत्येक शिलाजत्वादीना गोमूत्रेण दशमूलीक्वाथेन वा पानम् ॥ ३ ॥

भल्लातकेत्यादि। भल्लातकादिभिर्दशमूलान्तैर्मिलित्वा क्वाथ इत्यर्थः। पिप्पल्यादि।—पिप्पल्यादीना त्रयाणां क्वाथो वा देयः; पिप्पल्यादीनां कल्क इति चूर्णं मधुसहितं वा अवलेहरूपतया देय, किंवा पिप्पल्यादीनां चूर्णं पानयोग्य मधु दत्त्वा पेयम ॥ ४ ॥

त्रिफलेत्यादि।—कटुक त्रिकटुकम्। पुर मूत्रेण पिबेदिति। यद्यप्यय योग शिलाजतु गुग्गुलु वेत्यादिना पूर्वमेवोक्तस्तथापि सम्पूर्णश्लोकानुरोधात् पुनरप्यत्र लिखितः। कटुकायुतमिति त्रिकटुकयुत कटुरोहिणीयुक्तं वा। षड्धरण वातव्याधावुक्तम्। यद्यपि षड्धरण पिबेदित्येतावतैव सुखाम्बुना इति लभ्यते, उष्णोदकेनैव षड्धरणपानस्य पूर्वमुक्तत्वात, तथाप्यनन्तरोक्तक्षौद्रेण पानाशङ्कानिरासाथ मन्दुक्त भवति। पिप्पलीवर्द्धमानं वेति पिप्पलीवर्द्धमाननियमक्रमेण पिप्पली गृहीत्वा चूर्णयित्वा मधुना गुडेन वा सहोपयुञ्जीत। गण्डीरारिष्टमेवेति गण्डीरः शमठ, स तु स्थलजो ग्राह्यः तीक्ष्णत्वात्, तस्यारिष्ट सन्धानं, तत्र गण्डीरशतपल जलद्रोणेन पक्वा पादावशेषे तस्मिन् गुडतुलामवाप्य धातकीलोध्रलिप्ते कुम्भे सन्धानीयम, ईषदम्ल यदा भवति तदोपयोज्यम्। किवा अरिष्टो निम्बः। शमठ निम्बयोश्चूर्णमनन्तरोक्तेन मधुना गुड़ेन वा सहोपयोज्यम् ॥ ५—७ ॥

चव्याभयाग्निदारूणां समधुः स्यादूरुग्रहे।
कल्को दिह्येच्च मूत्राढ्यैः करञ्जफलसर्षपैः॥ ८॥
क्षौद्रसर्षपवल्मीकमृत्तिकासंयुतं भिषक्।
गाढमुत्सादनं कुर्य्यादूरुस्तम्भे सलेपनम्॥ ९॥
कफक्षयार्थं व्यायामेष्वेनं शक्येषु योजयेत्।
स्थानान्याक्रामयेत् कल्यं प्रतिस्रोतो नदीं तरेत्॥ १०॥

**अष्टकट्वरं तैलम्—**

पलाभ्यां पिप्पलीमूल-नागरादष्टकट्वरः।
तैलप्रस्थः समो दध्ना गृध्रस्यूरुग्रहापहः।
अष्टकट्वरतैलेऽस्मिं स्तैलं सार्षपमिष्यते॥ ११॥

**कुष्ठाद्यं तैलम्—**

कुष्ठश्रीवेष्टकोदीच्यं सरलं दारु केशरम्।
अजगन्धाश्वगन्धा च तैलं तैः सार्षपं पचेत्।
सक्षौद्रं मात्रया तस्मादूरुस्तम्भार्दितः पिबेत्॥ १२॥

---

चव्येत्यादि।—समधुः कल्कः पेय इति योज्यम्। दिह्येदित्यादि सर्षपैरित्यन्त एको योगः॥ ८॥

उत्सादनमुद्वर्त्तनम्। स्थानानीत्युच्चप्रदेशान्, स्थलानीतिपाठे स एवार्थः। कल्यमिति प्रातः, नीरुजमित्यन्ये॥ ९॥ १०॥

अष्टकट्वरतैले पलाभ्यामिति पिप्पलीमूलनागरादिति पिप्पलीमूलनागरयोः मिलित्वा पलद्वयं मानप्रधानत्वात् निर्देशस्य। चक्रोऽपि पिप्पल्यादिसमुदायात् पलाभ्यामित्याह। ब्रह्मटिप्पन्यामपि पिप्पलीमूलनागरयोः प्रत्येकमेकपलमित्युक्तम्; निश्चलस्तु प्रत्येकं पलद्वयम्, अन्यथा कल्कस्यात्यन्तमल्पीयस्त्वं स्यादित्याह। अष्टकट्वरमिति अष्टगुणं कट्वरं सस्नेहदधितक्रं यत्र॥ ११॥

कुष्ठेत्यादौ।—चतुर्गुणजलेन पाकः। श्रीवेष्टकः नवनीतखोटिः, अजगन्धा चेवयमानी। सक्षौद्रमिति प्रक्षेपविषया; अयञ्च स्नेहविधिरवस्थाविशेषे बोध्यः, उक्तं हि चरके "रूक्षाणां वातकोपस्तेभिषड्मामाग्नि पूर्वकः। स्नेहस्वेदकमसव

सैन्धवाद्यं हितं तैलं वर्षाभ्वमृतगुग्गुलुः ॥ १३ ॥

इतूरुस्तम्भ-चिकित्सा ॥

---

## अथामवात-चिकित्सा।

लङ्घनं स्वेदनं तिक्तं दीपनानि कटूनि च।
विरेचनं स्नेहपानं वस्तयश्चाममारुते ॥
सैन्धवाद्येनानुवास्य क्षारवस्तिः प्रशस्यते ॥ १ ॥
आमवाते पञ्चकोलसिद्धं पानान्नमिष्यते।
रूक्षः स्वेदः प्रकर्त्तव्यो वालुकापुटकैस्तथा ॥ २ ॥
शटी शुण्ठ्यभया चोग्रा देवाह्वातिविषामृता।
कषायमामवातस्य पाचनं रूक्षभोजनम् ॥ ३ ॥
शटीविश्वौषधीकल्कं वर्षाभूक्वाथसंयुतम्।

---

कार्य्यो वातामयापहः।" इति सैन्धवाद्यमित्यादौ।—सैन्धवाद्यं तैलं वातव्याधावुक्तम्, पुनर्नवागुग्गुलुरमृतागुग्गुलुश्च वातरक्ते चोक्तः ॥ १२। १३ ॥

इत्यूरुस्तम्भचिकित्सा विवृतिः ॥

---

सामवातजन्यत्व सामान्यादूरुस्तम्भानन्तरमामवात-चिकित्सामाह लङ्घनमित्यादि।—विरेचनन्तु महेश्वरपत्रिकाया विशेषेणोक्तम्, उक्तं हि—"विवृत्सैन्धवशुण्ठीनामारनालेन चूर्णितम्। पीत्वा विरेचयेज्जन्तुमामवातहरं परम्। सप्ताहञ्च त्रिवृच्चूर्णं त्रिवृत्क्वाथेन भावितम्। काञ्जिकेन तु तत् पीतं रेचनञ्चामवातिनाम्" इति। तत् सर्वमत्र बोध्यम्। स्नेहपानमिति लङ्घनादिभिरामक्षये जाते तदनन्तरं रुक्षस्य वायोः प्रशमनार्थं स्नेहपानं किम्वा स्नेहशब्देनात्र विरेचकतया एरण्डतैलं बोध्यम्। वस्तय इति शोधनवस्तयः। रूक्षः स्वेद इति रूक्षस्वेदः तन्त्रान्तरोक्तः यथा—"कार्पासास्थिकुलत्थिकातिल यवैरेरण्डमूलातसी-वर्षाभूशणबीज काञ्जिकयुतैरेकीकृतैर्वा पृथक्। स्वेदः स्यादथ कूर्परोदरशिरःस्फिक्पाणिपादाङ्गुलिग्रीवास्कन्धकटीषणो विजयते सामाः समस्ता रुजः" इति ॥ १—२ ॥

सप्तरात्रं पिबेज्जन्तुरामवातविनाशनम् ॥ ४ ॥

रास्नादशमूलकम्—

दशमूलामृतैरण्ड-रास्नानागरदारुभिः ।
क्वाथो रुबूकतैलेन सामं हन्त्यनिलं गुरुम् ॥ ५ ॥
दशमूलीकषायेण पिबेद्वा नागराम्भसा ।
कुक्षिवस्तिकटीशूले तैलमेरण्डसम्भवम् ॥ ६ ॥

रास्नापञ्चकम्—

रास्नां गुडूचीमेरण्डं देवदारु महौषधम् ।
पिबेत् सर्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥ ७ ॥

रास्नासप्तकम्—

रास्नामृतारग्वधदेवदारु त्रिकण्टकैरण्डपुनर्नवानाम् ।
क्वाथं पिबेन्नागरचूर्णमिश्रं जङ्घोरुपृष्ठत्रिकपार्श्वशूली ॥ ८ ॥

शुण्ठीगोक्षुरकक्वाथः प्रातः प्रातर्निषेवितः ।
सामवाते कटीशूले पाचनो रुक्प्रणाशनः ॥ ९ ॥
आमवाते कणायुक्तं दशमूलीजलं पिबेत् ।
खादेद्वाप्यभयाविश्वं गुडूचीं नागरेण वा ॥ १० ॥

---

शटीत्यादौ ।—उग्रा वचा ॥ ४ ॥

रास्ना दशमूलेत्यादौ रुबूकतैलेनेति शोधनार्थम् एरण्डतैलस्य कर्षः समधिको वा । शमनार्थं पुनः षड्‌ष्टौ माषका इति ॥ ५ । ६ ॥

रास्नापञ्चके पिबेदिति क्वाथरूपतया । अत्र योगे तथा वक्ष्यमाण-रास्नासप्तकेऽपि यदि विरेकश्चिकीर्षितो भवति, तदा एरण्डतैलप्रक्षेप्यमिति वदन्ति ॥ ७ । ८ ॥

शुण्ठीगोक्षुरकक्वाथ इत्यादि ।—अत्र शुण्ठ्या भागमेकम्, गोक्षुरस्य भागत्रयं गृह्णन्ति, कोष्ठभेदे कर्त्तव्ये यवक्षारमप्यत्र प्रक्षिपन्ति ॥ ९ ॥

अभयाविश्वमिति हरीतकीचूर्णं मा २, शुण्ठीचूर्णं मा २, पिष्टा खाद्यं तदनन्तरमुष्णपेयम् । गुडूचीं नागरेण वा इति क्वाथेन व्यवहारः । केचित्तु पिष्टा उष्णोदकेन भक्षयन्ति ॥ १० ॥

एरण्डतैलसंयुक्तां हरीतकीं भक्षयेन्नरो विधिवत्।
आमानिलार्तियुक्तो गृध्रसी-वृद्ध्यर्दितो नित्यम्॥ ११॥
कर्षं नागरचूर्णस्य काञ्जिकेन पिबेत् सदा।
आमवातप्रशमनं कफवातहरं परम्॥ १२॥
पञ्चकोलकचूर्णञ्च पिबेदुष्णेन वारिणा।
मन्दाग्निशूलगुल्माम-कफारोचकनाशनम्॥ १३॥
अमृतानागरगोक्षुरमुण्डितिकावरुणकैः कृतं चूर्णम्।
मस्त्वारनालपीतमामानिलनाशनं ख्यातम्॥ १४॥

वैश्वानरं चूर्णम्—

मणिमन्थस्य द्वौ भागौ यमान्यास्तद्वदेव तु।
भागास्त्रयोऽजमोदाया नागराद्भागपञ्चकम्॥
दश द्वौ च हरीतक्याः सूक्ष्मचूर्णीकृताः शुभाः।
मस्त्वारनालतक्रेण सर्पिषोष्णोदकेन वा॥
पीतं जयत्यामवातं गुल्मं हृद्वस्तिजान् गदान्।
प्लीहानं हन्ति शूलादीनानाहं गुदजानि च॥
विबन्धं जाठरान् रोगांस्तथा वै हस्तपादजान्।
वातानुलोमनमिदं चूर्णं वैश्वानरं स्मृतम्॥ १५॥

---

एरण्डेत्यादि।—हरीतकीचूर्णस्यैरण्डतैलेनावलेहः॥ ११॥

कर्षं नागरचूर्णस्येत्यादि।—शुण्ठीचूर्णलवणयुक्तस्य काञ्जिकस्य भक्तेन सहोपयोग प्रचरति॥ १२॥

पञ्चकोलेत्यादि।—समभागपञ्चकोलचूर्णं माषकाष्टकमुष्णजलेन पेयम्॥ १३॥

अमृतेत्यादौ।—वरुणः वरुणमूलम्॥ १४॥

वैश्वानरचूर्णमाह मणिमन्थस्येत्यादि।—मणिमन्थः सैन्धवम्। यमान्यास्तद्वदिति भागद्वयम्। भागास्त्रयोऽजमोदाया इति अजमोदा यमानी, तेन पञ्चभागो यमान्या एव, एके यमानीस्थाने यवक्षारं पठन्ति, केचिद्वनयमानीत्यपरस्य यमान्या भागद्व

अलम्बुषाद्यं चूर्णम्—

अलम्बुषां गोक्षुरकं गुडूचीं वृद्धदारकम्।
पिप्पलीं त्रिवृतां मुस्तं वरुणं सपुनर्नवम्॥
त्रिफलां नागरञ्चैव श्लक्ष्णचूर्णानि कारयेत्।
मस्त्वारनालतक्रेण पयोमांसरसेन वा॥
आमवातं निहन्त्याशु श्वयथुं सन्धिसंस्थितम्।
प्लीहगुल्मोदरानाह दुर्नामानि विनाशयेत्॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा।
वातरोगान् जयत्येष सन्धिमज्जगतानपि॥ १६॥

शतपुष्पाद्यं चूर्णम्—

शतपुष्पा विडङ्गञ्च सैन्धवं मरिचं समम्।
चूर्णमुष्णाम्बुना पीतमग्निसन्दीपनं परम्॥ १७॥

हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु चव्यं विडं शुण्ठी कृष्णाजाजी सपौष्करम्।
भागोत्तरमिदं चूर्णं पीतं वातामजिद्भवेत्॥ १८॥

योगराजगुग्गुलुः—

चित्रकं पिप्पलीमूलं यमानीं कारवीं तथा।

---

प्रयच्छन्ति, [अन्ये त्वत्रभेदया वनयमानीं गृह्णन्ति, किन्त्वत्र परिमार्जने यमान्यव युक्ता। दश द्वौ चेति द्वादशभाग इत्यर्थः॥ १५॥

अलम्बुषामित्यादि।– अलम्बुषा मुण्डीतिका, वृद्धदारक वृद्धदारकमूलम्; वरुण वरुणमूलम्॥ १६॥

शतपुष्पेत्यादि स्पष्टम्॥ १७॥

हिङ्गुचव्यमित्यादौ।—कृष्णा पिप्पली। अजाजी सितजीरकमिति निश्चलः, कृष्णाजाजी कृष्णजीरकमिति वृन्दटिप्पनी। भागोत्तरमिति यथोत्तर एकभागपरिवृद्धम्। पीतमिति उष्णाम्बुना॥ १८॥

विड़ङ्गान्यजमोदाच जीरकं सुरदारु च ॥
चव्यैला सैन्धवं कुष्ठं रास्नागोक्षुरधान्यकम् ।
त्रिफलामुस्तकं व्योषं त्वगुशीरं यवाग्रजम् ॥
तालीशपत्रं पत्रञ्च श्लक्ष्णचूर्णानि कारयेत् ।
यावन्त्येतानि चूर्णानि तावन्मात्रन्तु गुग्गुलुम् ॥
सम्मर्द्य सर्पिषा गाढ़ं स्निग्धे भाण्डे निधापयेत् ।
ततो मात्रां प्रयुञ्जीत यथेष्टाहारवानपि ॥
योगराज इति ख्यातो योगोऽयममृतोपमः ।
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि ॥
प्लीहगुल्मोदरानाह-दुर्नामानि विनाशयेत् ॥
अग्निञ्च कुरुते दीप्तं तेजोवृद्धिं बलं तथा ।
वातरोगान् जयत्येष सन्धिमज्जगतानपि ॥ १९ ॥

सिंहनादगुग्गुलुः—

पलत्रयं कषायस्य त्रिफलायाः सुचूर्णितम् ।
सौगन्धिकपलञ्चैकं कौशिकस्य पलं तथा ॥
कुड़वं चित्रतैलस्य सर्वमादाय यत्नतः ।
पाचयेत् पाकविद्वैद्यः पात्रे लौहमये दृढ़े ॥
हन्ति वातं तथा पित्तं श्लेष्माणं खञ्जपङ्गुताम् ।

---

योगराजगुग्गुलौ कारवी कृष्णजीरकम्, अजमोदा यमानी, अन्न परिमार्जनत्वात्, एवमन्यत्रापि। सम्मर्द्य सर्पिषा गाढमिति प्रथम तावत घृत दत्त्वा तस्मिन् गुग्गुलु पेषणीय., पश्चादन्यमल्प चूर्णं दत्त्वा पेषणीय'। सम्यक् चूर्णमिलने त स्निग्धभाण्डे निधेयः। मर्दनार्थं घृतमानञ्चात्र यावता चूर्णं मिलित भवति, अन्ये तु गुग्गुलोरर्द्धमानमित्याहु.। ततो मात्रां प्रयुञ्जीत इति, षडष्टमाषकरूपाम्। उष्णाम्बुकाञ्जिकाद्यनुपेयमित्यर्थः' ॥ १९ ॥

पलत्रयमित्यादि।—त्रिफलायाः क्वाथस्य पलत्रयं प्रत्येकम्। सुचूर्णितमिति सौगन्धिकपलमित्यनेन सम्बध्यते। सौगन्धिकमिति गन्धकम्, तच्च शोधित ग्राह्यम्।

श्वासं सुदुर्जयं हन्ति कासं पञ्चविधं तथा ॥
कुष्ठानि वातरक्तानि गुल्मशूलोदराणि च।
आमवातं जयेदेतदपि वैद्यविवर्जितम् ॥
एतदभ्यासयोगेन जरापलितनाशनम्।
सर्पिस्तैलरसोपेतमश्नीयाच्छालियष्टिकम् ॥
सिंहनाद इति ख्यातो रोगवारणदर्पहा।
वह्निवृद्धिकरः पुंसां भाषितो दण्डपाणिना ॥ २० ॥

बृहत्सिंहनादगुग्गुलुः—

पिण्डितां गुग्गुलोर्मानीं कटुतैलपलाष्टके।
प्रत्येकं त्रिफलाप्रस्थौ सार्द्धद्रोणे जले पचेत् ॥
पादशेषे च पूतञ्च पुनरग्नावधिश्रयेत्।
त्रिकटु त्रिफला मुस्तं विड़ङ्गामरदारु च ॥
गुड़ूच्यग्नित्रिवृद्दन्तीचवीशूरणमानकम्।
पारदं गन्धकञ्चैव प्रत्येकं शुक्तिसम्मितम् ॥
सहस्रकाकनफलं सिद्धे सञ्चूर्ण्य निक्षिपेत् ॥
ततो माषद्वयं जग्ध्वा पिबेत् तप्तजलादिकम् ॥ २१ ॥

अलम्बुषाद्यं चूर्णम्—

अलम्बुषागोक्षुरक-त्रिफलानागरामृताः।

---

कौशिकस्येति गुग्गुलोः। चित्रकतैलमित्येरण्डतैलम्, कुडवमित्यष्टौ पलानि, अन्ये तु तैलस्य बहुत्वेन पाको दुर्घटः स्यात् इति कृत्वा अकृतद्वैगुण्यमेवात्र कुडवं गृह्णन्ति। त्रिफला प्रत्येकं पल १, कर्ष २ ; क्वाथार्थजल शराव ४. पल ४, शेष श १, पल १ ; शोधितगन्धकचूर्ण पल १, एरण्डतैल पल ८। एरण्डतैल दर्त्वा गन्धकचूर्णेन सह गुग्गुलुः पेषणीयः ; तदनु त्रिफलारसेनालोड्य लौहपात्रे पक्तव्यम्, मनाक् तैलनिःसरणे सति सम्यक् पाको ज्ञेयः। प्रथमतो माषकद्वयं, अष्टौ माषकान् यावत् खाद्यम् ॥ २० । २१ ॥

अलम्बुषाद्यचूर्णे यथोत्तरं भागवृद्धिरिति यद् युत् परं तत्तदेकभागवर्द्धितमित्यर्थः।

यथोत्तरं भागवृद्ध्या श्यामाचूर्णञ्च तत्समम्॥
पिबेन्मस्तुसुरातक्र-काञ्जिकोष्णोदकेन वा।
पीतं जयत्यामवातं सशोथं वातशोणितम्।
त्रिकजानूरुसन्धिस्थं ज्वरारोचकनाशनम्॥
पथ्याद्यधावास्त्रिफला भागवृद्ध्यावयं क्रमः॥ २२॥
पथ्याविश्वयमानीभिस्तुल्याभिश्चूर्णितं पिबेत्।
तक्रेणोष्णोदकेनापि अथवा काञ्जिकेन वा।
आमवातं निहन्त्याशु शोथं मन्दाग्नितामपि॥ २३॥

बृहत्सैन्धवाद्यं तैलम्—

सैन्धवं त्रिफला रास्ना पिप्पली गजपिप्पली।
सर्जिका मरिचं कुष्ठं शुण्ठी सौवर्चलं विड़म्॥
यमान्यौ पुष्कराजाजी मधुकं शतपुष्पिका।
पलाद्धिकैः पचेदेतैः प्रस्थमेरण्डतैलतः॥
प्रस्थाम्बु शतपुष्पायाः प्रत्येकं मस्तुकाञ्जिके।
दद्याद् द्विगुणिते पानवस्त्यभ्यङ्गप्रयोजितम्॥
आमवातहरं श्रेष्ठं सर्ववातघ्नमग्निदम्।
कटीजानूरुसन्धिस्थे पार्श्वहृद्‌ग्रहरुग्भ्रमे।
शस्तं वातान्त्रवृद्धौ च सैन्धवाद्यमिदं महत्॥ २४॥

अजमोदाद्यवटकः—

अजमोदामरिचपिप्पलिविड़ङ्गसुरदारुचित्रकशताह्वाः।

---

श्यामा वृद्धदारकः, तत्सममिति मिलितचूर्णसमम्। त्रिफलाया येन क्रमेण भागवृद्धिं कुर्यात् तं क्रममाह पथ्याद्यधावास्र इत्यादि।—अयमेव क्रमो वृद्धवैद्यव्यवहारसिद्धो वृन्देनापि लिखितः॥ २२॥

पथ्येत्यादौ।—चूर्णितमिति भावे क्तः, तेन पथ्यादिभिः कृतं चूर्णं पिबेदित्यर्थः॥ २३। २४॥

सैन्धवपिप्पलिमूलं भागा नवकस्य पलिकाः स्युः ॥
शुण्ठी दशपलिका स्यात् पलानि तावन्ति वृद्धदारस्य।
पथ्यापञ्चपलानि सर्वमेकत्र कारयेच्चूर्णम् ॥
समगुड़वटकान् खादतचूर्णं वाप्युष्णवारिणा पिबतः।
नश्यन्त्यामानिलजाः सर्वरोगाः सुकष्टास्तु ॥
विसूचिकाप्रतितूणीहृद्रोगाश्च गृध्रसी चोग्रा।
कटिवस्तिगुदस्फुटनश्चैवास्थिजङ्घयोस्तीव्रम् ॥
श्वयथुस्तथाङ्गसन्धिषु ये चान्येऽप्यामवातसम्भूताः।
सर्वे प्रयान्ति नाशं तम इव सूर्यांशुविध्वस्तम् ॥ २५ ॥

शुण्ठीघृतम्—नागरक्वाथकल्काभ्यां घृतप्रस्थं विपाचयेत्।
चतुर्गुणेन तेनाथ केवलेनोदकेन वा ॥
वातश्लेष्मप्रशमनमग्निसन्दीपनं परम्।
नागरं घृतमित्युक्तं कव्यामशूलनाशनम् ॥ २६ ॥

गुडूचीघृतम्—अमृतायाः कषायेण कल्केन च महौषधात्।
मृद्वग्निना घृतं प्रस्थं वातरक्तहरं परम् ॥
आमवाताढ्यवातादीन् क्रिमिदुष्टव्रणानपि।
अर्शांसि गुल्मांश्च तथा नाशयत्याशु योजितम् ॥ २७ ॥

---

अजमोदाद्यवटके अजमोदा यमानी। नवकस्येति उक्ताजमोदादि नवकस्य प्रत्येकं पलिका भागा इत्यर्थः। पलानि तावन्तीति दशपलानीत्यर्थः। समगुडवटकानिति समेनैव गुड़ेन किञ्चिज्जलं दत्त्वा वह्निसम्बन्धाद् द्रवीकृतेन वटकाः कार्याः। अन्यथा वटकभावोऽस्य दुष्करः। चूर्णं वेति गुड़योगं विना ॥ २५ ॥

शुण्ठीघृते चतुर्गुणेन तेनेति नागरक्वाथेन, केवलोदकेन वेति क्वाथस्थाने चतुर्गुणं जलं दत्त्वेत्यर्थः ॥ २६ ॥

अमृताया इत्यादौ—कल्केन चेति पदं महौषधादित्यनेन सम्बध्यते। आढ्यवातेति ऊरुस्तम्भे ॥ २७ ॥

काञ्जिकषट्पलकं घृतम्—

हिङ्गु त्रिकटुकं चव्यं माणिमन्थं तथैव च ।
कल्कान् कृत्वा च पलिकान् घृतप्रस्थं विपाचयेत् ॥
आरनालाढ़कं दत्त्वा तत्सर्पिर्जठरापहम् ।
शूलं विबन्धमानाहमामवातं कटीग्रहम् ॥
नाशयेद् ग्रहणीदोषं मन्दाग्नेर्दीपनं परम् ॥ २८ ॥
पुष्ट्यर्थं पयसा साध्यं दध्ना विण्मूत्रसंग्रहे ।
दीपनार्थं मतिमता मस्तुना च प्रकीर्त्तितम् ॥ २९ ॥
शुण्ठीघृतम्—सर्पिर्नागरकल्केन सौवीरकचतुर्गुणम् ।
सिद्धमग्निकरं श्रेष्ठमामवातहरं परम् ॥ ३० ॥
रसोनपिण्डम्—रसोनस्य पलशतं तिलस्य कुड़वं तथा ।
हिङ्गु त्रिकटुकं क्षारौ द्वौ पञ्चलवणानि च ॥
शतपुष्पा तथा कुष्ठं पिप्पलीमूलचित्रकौ ।
अजमोदा यमानी च धन्याकञ्चापि बुद्धिमान् ॥
प्रत्येकन्तु पलञ्चैषां श्लक्ष्णचूर्णानि कारयेत् ।
घृतभाण्डे दृढ़े चैतत् स्थापयेद् दिनषोडशम् ॥
प्रक्षिप्य तैलमाणीच्च प्रस्थार्द्धं काञ्जिकस्य च ।
खादेत् कर्षप्रमाणन्तु तोयं मद्यं पिबेदनु ॥
आमवाते तथा वाते सर्वाङ्गैकाङ्गसंश्रिते ।

---

काञ्जिकषट्पलके त्रिकटुक प्रत्येक पलिकम । माणिमन्थ सैन्धवम् ॥ २८ ॥

पुष्ट्यर्थमित्यादि ।—उक्तमेतत काञ्जिकषट्पलक यदि पुष्ट्यर्थं क्रियते, तदा काञ्जिकस्थाने पयो दत्त्वा साध्य , विण्मूत्रसंग्रहे कार्य्यं दध्ना साध्य , दीपनार्थं यदि तदा मस्तुना साध्यमित्यर्थ ॥ २९ ॥

शुण्ठीघृत स्पष्टम् ॥ ३० ॥

रसोनपिण्डे निस्तुषो रसोनस्यापि पिष्टस्य एव तिलस्यापि । तैलस्य मानी

अपस्मारेऽनले मन्दे कासे श्वासे गरेषु च ॥
सोन्मादवातभग्ने च शूले जन्तुषु शस्यते ॥ ३१ ॥

प्रसारणीसन्धानम्—

प्रसारण्याढ़ककाथे प्रस्थो गुड़रसोनयोः।
पक्वः पञ्चोषणरजःपादः स्यादामवातहा ॥ ३२ ॥

रसोनसुरा—वल्कलायाः सुरायास्तु सुपक्वायाः शतं घटे।
ततोऽर्द्धेन रसोनन्तु संशुद्धं कुट्टितं क्षिपेत् ॥
पिप्पली पिप्पलीमूलमजाजीकुष्ठचित्रकम्।
नागरं मरिचं चव्यं चूर्णितञ्चाक्षसम्मितम् ॥
सप्ताहात् परतः पेया वातरोगामनाशिनी।
क्रिमिकुष्ठक्षयानाहगुल्मार्शःप्लीहमेहनुत्।
अग्निसन्दीपनी चैव पाण्डुरोगविनाशिनी ॥ ३३ ॥

शण्डाकी—सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले।
मण्डप्रस्थं विनिक्षिप्य स्थापयेद्दिवसत्रयम् ॥
धान्यराशौ ततो दद्यात् सञ्चूर्ण्य पलिकानि च।

नेनाष्टौ पलानि, द्रगुण्याभावात। प्रस्थार्द्धमिति षोडशपलानि मन्तुष्विति ामिषु ॥ ३१ ॥

प्रसारण्याढकमित्यादौ।—प्रसारण्याः काथे आढके षोडशशरावपरिमित इत्यर्थः। डरसोनयोश्च मिलित्वा प्रस्थ। पक्व इति कालवशात् परिणत सञ्जातरस इत्यर्थः। ालश्च सप्ताह एव वक्ष्यमाणप्रयोगदर्शनात्। पञ्चोषणरज इति मिलितपञ्चकोल णं प्रस्थमपेक्ष्य पादिक चतु पलमित्यथ.। गन्धभादाली ६४, पाकार्थं पानीय राव ६४, शेष शराव १६, गुडपल ८, रसोनपल ८; सन्धानवशात् परिणते ति प्रक्षेप. मिलितपञ्चकोलचूर्णं पल ४। प्रसारणीसन्धानमेतत् ॥ ३२।

वल्कलायाः सुराया इति वल्कलोति ख्यातायाः सुराया.। शतमिति पलशतं : घटमध्ये क्षिपेदित्यन्वय। ततोऽर्द्धेन परिमित रसोनमिति पञ्चाशत्पलमित्यर्थ.। ाद्धमिति त्वकशिरारहितम् ॥ ३३ ॥

सिद्धार्थकखलिप्रस्थमित्यादि।—सर्षपखलीं चूर्णीकृत्य जलेनाधौत्य क्वाथयित्वा

अलम्बुषा गोक्षुरकं शतपुष्पीपुनर्नवे ॥
प्रसारणी वरुणत्वक् शुण्ठी मदनमेव च ।
सम्यक् पाकन्तु विज्ञाय सिद्धा तण्डुलमिश्रिता ॥
भृष्टा सर्षपतैलेन हिङ्गुसैन्धवसंयुता ।
भक्षिता लवणोपेता जयेदामं महारुजम् ।
एकजं द्वन्द्वजं साध्यं सान्निपातिकमेव च ॥
कट्यूरुवातमानाहजानुजं त्रिकमागतम् ।
उदावर्त्तहरी पेया बलवर्णाग्निकारिणी ॥ ३४ ॥
सिध्मला—त्वगादिहीनाः संशुद्धाः प्रत्यग्राः शकुलादयः ।
श्लक्ष्णचूर्णीकृतं तेषां शीते पलशतत्रयम् ॥
शतेन कटुतैलस्य व्योषरामठधान्यकैः ।
क्रिमिघ्नदीप्यकनिशा-चविकाग्रन्थिकार्द्रकैः ॥
जीरकद्वयवृक्षीरसुरसार्जकशिग्रुकैः ।
दशमूलात्मगुप्ताभ्यां मार्कवैर्लवणैस्त्रिभिः ॥
चूर्णितैः पलिकैः सार्द्धमारनालपरिप्लुतैः ।
विन्यसेत् स्नेहपात्रे तु धान्यराशौ पुनर्न्यसेत् ॥

---

निस्तुषीकृत्य आतपे संशोष्य ग्राह्यं पल १६ मण्डशराव ४ मिश्रयित्वा धान्यराशौ दिनत्रयं स्थाप्यम् । तत इति धान्यराशेराकृष्यालम्बुषादिचूर्णं प्रत्येकं पलिकं दद्यात् । ततोऽम्लत्वेन सम्यक् पाकं सम्यक् परिणतमिति विज्ञाय स्थापनीयम् । ततः प्रत्यहं ग्राह्यं कर्ष २, तण्डुलचूर्ण पल १, पाकार्थं जल पल ८ यवागूः षड्गुणेऽम्भसीत्युक्तेः भर्जनार्थं सर्षपतैलकर्ष १, हिङ्गु रति ५, सैन्धव माषा २ ; ततः पुनरपि किञ्चिल्लवणं दत्त्वा भक्षणीयेति परिपाटी कथिता । सिद्धा तण्डुलमिश्रितेति एषा शिण्डाकी तण्डुलमिश्रिता सती सिद्धा कार्य्या पेया कार्य्येत्यर्थः । अन्ये तु पिष्टतण्डुलमिश्रणेन वटकः कार्य्य इत्याहुः । शिण्डाकीति सन्धानविशेषस्य संज्ञा तीरभुक्तिप्रसिद्धा ॥ ३४ ॥

सिध्मलायां शीत इति शीतकाले । अर्जकः सुरसस्य पर्णासभेदः । आरनाल

संप्ररावात् समुद्धृत्य पानभक्षणभोजनैः ।
सिध्यत्ययं प्रयोगश्चाप्यामे वायौ विशेषतः ॥
भग्नरुग्णाश्च गतहताः कम्पिनः पीठसर्पिणः ।
स्थपरीमग्निसादश्च शूलगुल्मोदराणि च ॥
वलीपलितखालित्यं हत्वा स्युरमलेन्द्रियाः ॥ ३५ ॥
दधिमत्स्यगुड़क्षीरपोतकीमाषपिष्टकम् ।
वर्जयेदामवातार्त्तो गुर्वभिष्यन्दकारि यत् ॥ ३६ ॥

इत्यामवातचिकित्सा ।

---

## अथ शूलचिकित्सा ।

वमनं लङ्घनं स्वेदः पाचनं फलवर्त्तयः ।
क्षारचूर्णानि गुड़िकाः शस्यन्ते शूलशान्तये ॥ १ ॥
पुंसः शूलाभिपन्नस्य स्वेद एव सुखावहः ।
पायसैः कृशरैः पिष्टैः स्निग्धैर्वापिशितोत्करैः ॥ २ ॥

---

परिप्लुतैरिति तावन्मानमारनालं यावता परिप्लवः सम्यक् भवति स्नेहपात्रमिह कटुतैलपात्रमेव यौगिकम् । भक्षणमिति चर्वणं, भोजनमन्नादिभोजनम् ॥ ३५ ॥

माषपिष्टकमिति माषकृतं पिष्टकं, किंवा माषकं पिष्टकञ्च । अभिष्यन्दकारि दोषधातुमलक्लेदकारि ॥ ३६ ॥

इत्यामवातचिकित्साविवृतिः ।

---

आमवातवत् शूलस्याप्यामजन्यत्वेन तदनन्तरं शूलचिकित्सामाह वमनमित्यादि ।—सुश्रुतस्य । वमनमुत्क्लिष्टकफे, लङ्घनमामपाचनार्थं, स्वेदः पित्तं विहाय । क्षार इति क्षारवस्तिः क्षारप्रयोगो वा । चूर्णगुड़िके इहैव वक्ष्यमाणे पुंस इत्यत्र सस्येति पाठान्तरम् । कृशरस्तिलकल्कः । पायसादिभिः पिण्डादि सम्बन्धात् स्वेदो बोध्यः । पिशितेति भेकादिमांसैः ॥ १ ॥ २ ॥

## वातशूलचिकित्सा ।

वातात्मकं हन्त्यचिरेण शूलं स्नेहेन युक्तस्तु कुलत्थयूषः ।
ससैन्धवो व्योषयुतः सलावः सहिङ्गुसौवर्चलदाडिमाढ्यः ॥३॥

बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ।
सहिङ्गु लवणं पीतं सद्यो वातरुजापहम् ॥ ४ ॥

शूली निरन्नकोष्ठोऽद्भिरुष्णाभिश्चूर्णिताः पिबेत् ।
हिङ्गुप्रतिविषाव्योषवचासौवर्चलाभयाः ॥ ५ ॥

तुम्बुरूण्यभया हिङ्गु पौष्करं लवणत्रयम् ।
पिबेद् यवाम्बुना वातशूलगुल्मापतन्त्रकी ॥ ६ ॥

श्यामा विडं शिग्रुफलानि पथ्या विडङ्गकम्पिल्लकमश्वमूत्री ।
कल्कं समं मद्ययुतञ्च पीत्वा शूलं निहन्यादनिलात्मकन्तु ॥७॥

यमानीहिङ्गुसिन्धूत्थक्षारसौवर्चलाभयाः ।
सुरामण्डेन पातव्या वातशूलनिषूदनाः ॥ ८ ॥

---

वातात्मकमित्यादि ।—यूष इति कुलत्थलावमांसयोर्मिलित्वा पलं, जलं अष्टपलं, पलचतुष्टयस्थिते विमर्द्य वस्त्रेण छानयित्वा हिङ्गुसहितेन घृतेन भर्जनीयं, तदनन्तरं सैन्धवादीनां चूर्णं मिलित्वा कर्षः प्रक्षेपः, पश्चाद्दाडिमबीजरसो योज्यः ॥ ३ ॥

बलेत्यादियोगोऽयं क्वाथविधिना । हिङ्गु लवणञ्च प्रक्षेप्यम् । लवणमत्र सौवर्चलं, वातशूलहरत्वादित्याहुः ॥ ४ ॥

निरन्नकोष्ठ इति अभुक्त इत्यर्थः । अन्ये तु अन्नम् अजीर्णान्नं तच्छून्यकोष्ठ इत्याहुः । प्रतिविषा अतिविषा ; तुम्बुरु स्वनामख्यातं , यवाम्बुनेति यवक्वाथेन । यवैरण्डाम्बुना पेयमिति तु पाठान्तरं, तेन द्वाभ्यामेव क्वाथः ॥ ५ ॥ ६ ॥

श्यामेत्यादि ।—श्यामा वृद्धदारकः ; कम्पिल्लकी गुण्डारोचनी, अश्वमूत्री शल्लकी ; क्षारो यवक्षारः ॥ ७ ॥

यमानीत्यादौ ।—सुरामण्डेनेति सुराया उपरितमस्वच्छद्रवभागेन ; एवमन्यत्रापि ॥ ८ ॥

विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम्॥ ९॥
हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः॥ १०॥
तद्वद्रुवुयवक्वाथो हिङ्गुसौवर्चलान्वितः॥ ११॥
हिङ्ग्वम्लकृष्णालवणं यमानीक्षाराभयासैन्धवतुल्यभागम्।
चूर्णं पिबेद्वारुणिमण्डमिश्रं शूले प्रवृद्धेऽनिलजे शिवाय॥१२॥

नारिकेलखण्डः—

सुपक्वनारिकेलस्य शस्यं पलचतुष्टयम्।
पिष्ट्वा घृतपले भृष्ट्वा क्षिपेत् खण्डचतुःपलम्॥
नारिकेलस्य च प्रस्थे किञ्चिच्छस्यवतो जले।
धन्याकं पिप्पलीं मुस्तं द्विजीरं वंशलोचनाम्॥
शाणमानं चतुर्जातं चूर्णं शीते क्षिपेद् बुधः।
हन्त्यम्लपित्तमरुचिं रक्तपित्तं क्षयं वमिम्॥
शूलञ्च पृष्ठशूलञ्च पित्तरुग्घ्नं रसायनम्।
विशेषाद्बलकृद्वृष्यं पुष्टिमोजस्करं स्मृतम्॥ १३॥
सौवर्चलाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्ट्वा गुड़िकानिलशूलनुत्॥ १४॥

---

विश्वमित्यादि।—एरण्डमूलस्य भागत्रय शुण्ठ्यास्त्वेको भाग इत्यर्थः॥ ९॥

हिङ्गुपुष्करेत्यादि, हिङ्गुपुष्करमूलाभ्या हिङ्गुसौवर्चलेन वेति उभयत्र सहार्थे तृतीया। तद्वदिति सद्य शूलहर इत्यर्थः॥ १०॥ ११॥

हिङ्ग्वम्लेत्यादि।—अम्लोऽम्लवेतस.; कृष्णा पिप्पली, लवणमिह सौवर्चलं विशेषत. शूलहरत्वात्। क्वचित् कृष्णामलकमिति पाठ. स च निश्चलस्यासम्मतः। निश्चलस्तु कृष्णामलकमित्यत्र कृष्णालवणमिति पठति, हारीतसंवादात्। छन्दोभङ्गोऽपि नाशङ्क्य., अनन्तत्वात् पद्यमार्गस्येति व्याचष्टे॥ १२॥ १३॥

हिङ्ग्वम्लवेतसव्योष-यमानीलवणत्रिकैः।
वीजपूररसोपेतैर्गुड़िका वातशूलनुत्॥ १५॥
वीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः॥ १६॥
विल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा।
गुड़िकां भ्रामयेदुष्णां वातशूलविनाशिनीम्॥ १७॥
तिलैश्च गुड़िकां कृत्वा भ्रामयेज्जठरोपरि।
गुड़िका शमयत्येषा शूलञ्चैवातिदुःसहम्॥ १८॥
नाभौलेपाज्जयेच्छूलं मदनः काञ्जिकान्वितः।
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत्॥ १९॥

पित्तशूलचिकित्सा—

गुड़शालिर्यवाः क्षीरं सर्पिःपानं विरेचनम्।
जाङ्गलानि च मांसानि भेषजं पित्तशूलिनाम्॥ २०॥
पैत्ते तु शूले वमनं पयोऽम्बु रसैस्तथेक्षोः सपटोलनिम्बैः।
शीतावगाहाः पुलिनाः सवाताः कांस्यादिपात्राणि जलप्लुतानि
॥ २१॥

---

सौवर्चलेत्यादौ।—चञ्चिका तिन्तिडी। द्विगुणोत्तरैरिति उत्तरोत्तरं द्विगुणैरित्यर्थः। एषा गुड़िका चतुर्माषकमिता उष्णोदकानुपानेन भक्षणीया; एवं वक्ष्यमाणा गुड़िकापि वीजपूरकेत्यादि केवल वातजे॥ १४—१६॥

विल्वमूलेत्यादि।—अम्लतुषाम्भः अम्लकाञ्जिकम्॥ १७॥

तिलैरिति पिष्टैः। गुड़िकेयं कोष्णा उदरे भ्रामयितव्या॥ १८॥

जीवन्तीमूलकल्केनापि लेपः॥ १९॥

सम्प्रति पित्तशूलचिकित्सामाह गुडेत्यादि।—गुडोऽत्र पुरातनः उपहतमलश्च ज्ञेयः, तस्य वातपित्तहरत्वेन यौगिकत्वात्। उक्तं हि सुश्रुते—"पित्तघ्नो मधुरः शुद्धो वातघ्नोऽसृक्प्रसादनः। पुराणश्चाधिकगुणः घृतः पथ्यतमो गुड़ः"॥ २०॥

पैत्ते तु शूले वमनमित्यादि।—पित्तजेऽपि वमनमामाशयस्थपित्तहरणार्थम्।

विरेचनं पित्तहरञ्च शस्तं रसाश्च शस्ताः शशलावकानाम्।
सन्तर्पणं लाजमधूपपन्नं योगाः सुशीता मधुसंप्रयुक्ताः॥ २२॥

कुर्य्यात् जरे पित्तभवेऽपि शूले
घोरे विदाहे त्वतितर्पिते च।
यवस्य पेयां मधुना विमिश्राम्
पिबेत् सुशीतां मनुजः सुखार्थी॥ २३॥

धात्र्या रसं विदार्य्या वा त्रायन्ती गोस्तनाम्बु वा।
पिबेत् सशर्करं सद्यः पित्तशूलनिसूदनम्॥ २४॥

शतवरीरसं क्षौद्रयुतं प्रातः पिबेन्नरः।
दाहशूलोपशान्त्यर्थं सर्वपित्तामयापहम्॥ २५॥

बृहत्यौ गोक्षुरैरण्डकुशकाशेक्षुरालिकाः।
पीताः पित्तभवं शूलं सद्यो हन्युः सुदारुणम्॥ २६॥

शतावरीसयष्ट्याह्व-वाट्यालकुशगोक्षुरैः।
शृतशीतं पिबेत् तोयं सक्षौद्रगुड़शर्करम्।
पित्तासृग्दाहशूलघ्नं सद्यो दाहज्वरापहम्॥ २७॥

त्रिफलानिम्बयष्ट्याह्व-कटुकारग्वधैः शृतम्।

---

सपटोलनिम्बैरिति पटोलनिम्बकल्कयुतैः। मदनफलयोगमप्यत्र केचिदिच्छन्ति॥२१॥

विरेचन पित्तहरमिति पित्तहरमधुरगणोपहितम्। सन्तर्पणं लाजमधूपपन्नमिति लाजशक्तुमधुभ्या निर्मित सन्तर्पणम्। यवस्य पेयामिति यवस्य यवागूम्॥ २२॥ २३॥

धात्र्या रसमित्यादि योगत्रयम्। धात्र्याः स्वरस, विदार्य्या अपि स्वरसः, त्रायन्तीगोस्तनयो क्वाथ, , शर्करा सर्वत्र प्रक्षेप्या॥ २४॥

शतावरीरसमित्यादि स्पष्टम्॥ २५॥

बृहत्यावित्यादि।—इक्षुरालिका खागरभेदा॥ २६॥

शतावरीत्यादौ।—शृतशीतमिति शृत शीतमेव व्यजनादिभि., न तु शीतकषायम्॥ २७॥

पाययेन्मधुसंमिश्रं दाहशूलोपशान्तये ॥ २८ ॥
तैलमेरण्डजं वापि मधुकक्वाथसंयुतम् ।
शूलं पित्तोद्भवं हन्याद् गुल्मं पैत्तिकमेव च ॥ २९ ॥
त्रिफलारग्वधक्वाथं सक्षौद्रं शर्करान्वितम् ।
पाययेद्रक्तपित्तघ्नं दाहशूलनिवारणम् ॥ ३० ॥
प्रलिह्यात् पित्तशूलघ्नं धात्रीचूर्णं समाक्षिकम् ॥ ३१ ॥

अपरनारिकेलखण्डः—

नारिकेलपलान्यष्टौ शर्कराप्रस्थसंयुतम् ।
तज्जलं पात्रमेकन्तु सर्पिः पञ्च पलानि च ॥
शुण्ठीचूर्णस्य कुडवं प्रस्थार्द्धं क्षीरमेव च ।
सर्वमेकीकृतं पात्रे शनैर्मृद्वग्निना पचेत् ॥
तुगात्रिकटुकं मुस्तं चतुर्जातं सधान्यकम् ।
द्वे कणे कर्षयुग्मञ्च जीरकञ्च पृथक् पृथक् ॥
श्लक्ष्णचूर्णं विनिक्षिप्य स्थापयेद्भाजने मृदः ।
खादेत् प्रतिदिनं शाणं यथेष्टाहारवानपि ॥
सर्वदोषभवं शूलमामवातं विनाशयेत् ।
परिणामभवं शूलमम्लपित्तञ्च नाशयेत् ॥
बलपुष्टिकरञ्चैव वाजीकरणमुत्तमम् ।
रक्तपित्तहरं श्रेष्ठं छर्दिहृद्रोगनाशनम् ।
अग्निसन्दीपनकरं सर्वरोगनिवर्हणम् ॥ ३२ ॥

कफशूलचिकित्सा—

श्लेष्माधिके छर्दनलङ्घनानि शिरोविरेकं मधुशीधुपानम् ।

---

त्रिफलेत्यादौ।—यष्ट्याह्व यष्टिमधुकः; कटुका कटुरोहिणी। तैलमेरण्डजमिति तैलं प्रत्येयम्। अन्ये तु योगद्वयमाहुः। तन्मते एरण्डजं तैलमित्येकः, मधुकक्वाथसंयुतमेरण्डतैलमिति द्वितीयः॥ २८। २९॥

त्रिफलारग्वधक्वाथमित्यादि स्पष्टम्॥ ३०—३२॥

मधूनि गोधूमयवानरिष्टान् सेवेत रूक्षान् कटुकांश्च सर्वान् ॥३३॥

पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः ।
यवागूर्दीपनीया स्याच्छूलघ्नी तोयसाधिता ॥ ३४ ॥

लवणत्रयसंयुक्तं पञ्चकोलं सरामठम् ।
सुखोष्णेनाम्बुना पीतं कफशूलविनाशनम् ॥ ३५ ॥

विल्वमूलमथैरण्डं चित्रकं विश्वभेषजम् ।
हिङ्गु सैन्धवसंयुक्तं सद्यः शूलनिवारणम् ॥ ३६ ॥

मुस्तं वचां तिक्तकरोहिणीञ्च तथाभयां निर्दहनीञ्च तुल्याम् ।
पिबेत्तु गोमूत्रयुतां कफोत्थशूले तथामस्य च पाचनार्थम् ॥३७॥

वचाब्दाग्न्यभयातिक्ताचूर्णं गोमूत्रसंयुतम् ।
सक्षारं वा पिबेत् क्वाथं विल्वादेः कफशूलवान् ॥ ३८ ॥

मातुलुङ्गरसो वापि शिग्रुक्वाथस्तथापरः ।
सक्षारो मधुना पीतः पार्श्वहृद्वस्तिशूलनुत् ॥ ३९ ॥

आमशूले क्रिया कार्य्या कफशूलविनाशिनी ।
सेव्यमामहरं सर्वं यदग्निबलवर्द्धनम् ॥ ४० ॥

---

श्लेष्मात्मक इत्यादि ।—मधुना कृतः सीधुर्मधुसीधु. । अरिष्टानिति सन्धानविशेषान् ॥ ३३ ॥

पिप्पलीत्यादि स्पष्टम् ॥ ३४ ॥

लवणत्रययुतमिति लवणत्रयं सौवर्चलसैन्धवविडम् । समभागचूर्णादष्टगुणोष्णोदकपलेनालोड्य पेयम् । चूर्णविषये योगोऽयम् ॥ ३५ ॥

विल्वमूलादिर्विश्वभेषजान्तः अयं योग. क्वाथविधिना ॥ ३६ ॥

मुस्तमित्यादौ ।—निर्दहनी मूर्वा । मुस्तमित्यादौ निर्दहनी मूर्वामुस्तादिरेकस्त एको योग. । मुस्तकादिकं पिष्टा गोमूत्रेण पेयम् ॥ ३७ ॥

वचेत्यादौ ।—अग्निश्चित्रकः । सक्षारमित्यादिस्तु द्वितीयो योगः । विल्वादेर्मूलस्य क्वाथं पिबेदिति ॥ ३८ ॥

मातुलुङ्गरस इति मातुलुङ्गमूलक्वाथः । योगद्वयेऽपि मधुयवक्षारौ प्रक्षेप्यौ ॥३९॥

हिङ्ग्वादिः—सहिङ्गु तुम्बुरु व्योषयमानीचित्रकाभयाः।
सक्षारलवणाश्चूर्णं पिबेत् प्रातः सुखाम्बुना।
विष्टम्भानिलशूलघ्नं पाचनं वह्निदीपनम्॥ ४१॥

धात्रीलौहम्—षट्पलं शुद्धमण्डूरं यवस्य कुड़वं तथा।
पाकाय नीरप्रस्थार्द्धं चतुर्भागावशेषितम्॥
शतमूलीरसस्याष्टावामलक्या रसस्तथा।
तथा दधिपयोभूमिकुष्माण्डस्य चतुःपलम्॥
चतुःपलं शर्कराया घृतस्य च चतुःपलम्।
प्रक्षेपं जीरकं धान्यं त्रिजातं करिपिप्पलीम्॥
मुस्तं हरीतकीञ्चैव अभ्रं लौहं कटुत्रयम्।
रेणुकं त्रिफलाञ्चैव तालीशं नागकेशरम्॥
प्रत्येकं कार्षिकं चूर्णं पेषयित्वा विनिक्षिपेत्।
भोजनादौ तथा मध्ये चान्ते चैव समाहितः॥
तोलैकं भक्षयेन्नित्यमनुपानं पयोऽथ वा।
शूलमष्टविधं हन्ति साध्यासाध्यमथापि वा।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्॥
परिणामसमुत्थांश्च अन्नद्रवसमुद्भवान्।
द्वन्द्वजान् पक्तिशूलांश्च अम्लपित्तं सुदारुणम्॥
सर्वरोगहरं श्रेष्ठं धात्रीलौहमिदं स्मृतम्॥ ४२॥
चित्रकग्रन्थिकैरण्डशुण्ठीधान्यं जलैः शृतम्।
शूलानाहविबन्धेषु सहिङ्गु विड़सैन्धवम्॥ ४३॥

---

आमशूल इत्यादौ आमहरं भत्वा यदग्निवृद्धिकर भवति पञ्चकोलादि-सेव्यम्, न तु घृतादि॥ ४०॥

तुम्बुरु वणिग्द्रव्यविशेषः॥ ४१। ४२॥

चित्रकमित्यादौ।—ग्रन्थिकं पिप्पलीमूलम्। सहिङ्गुविड़सैन्धवमित्यत्र विड़दाड़िममिति केचित् पठन्ति॥ ४३॥

दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःपलम्।
भृशं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम् ॥ ४४ ॥
समाचिकं बृहत्यादिं पिबेत् पित्तानिलात्मके।
व्यामिश्रं वा विधिं कुर्य्याच्छूले पित्तानिलात्मके ॥
पित्तजे कफजे वापि या क्रिया कथिता पृथक्।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे ॥ ४५ ॥
पटोलत्रिफलारिष्टक्वाथं मधुयुतं पिबेत्।
पित्तश्लेष्मज्वरच्छर्द्दिदाहशूलोपशान्तये ॥ ४६ ॥
रसोनं मद्यसंमिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
वातश्लेष्मभवं शूलं निहन्तुं वह्निदीपनम् ॥ ४७ ॥
ह्रिङ्ग्वादिः—विश्वोरुबूकदशमूलयवाम्भसा तु
हिञ्चारहिङ्गुलवणत्रयपुष्कराणाम्।
चूर्णं पिबेद् हृदयपार्श्वकटीग्रहाम-
पक्वाशयांसभृशरुग्ज्वरगुल्मशूली ॥
क्वाथेन चूर्णपानं यत् तत्र क्वाथप्रधानता।

---

दीप्यकं यमानी मन्दस्यातिमन्दस्य ॥ ४४ ॥

समाचिक बृहत्यादिमिति बृहत्यौ गोक्षुरेरण्ड इत्यादिना पूर्वमुक्तम्, अन्ये तु त्रिपातज्वरोक्तं बृहत्यादिकमाहुः। व्यवहारस्तु पूर्वेणैव। द्वन्द्वजशूलचिकित्सा-माह व्यामिश्रमित्यादि ॥ ४५ ॥

पटोलेत्यादौ।—अरिष्टो निम्बः ॥ ४६ ॥

रसोनमित्यादि।—निस्तुषपिष्टरसोन माषा ६, मद्य पल १ ॥ ४७ ।

विश्वोरुबूकेत्यादि।—अम्भसेति क्वाथेन। अत्र हिङ्गुसौवर्चलमित्यादि-वक्ष्यमाणयोगे मुदितदशमूलयवयोर्द्वयोः प्रत्येक तुल्यभागेन ग्रहणात् व्यवहारदर्शनात्तत्रापि तथैव नमाह श्रीकण्ठः। तेन विश्वोरुबूकदशमूलानां मिलितानामेको भागः, यवस्य परो भाग इति व्यवहारोऽपि इत्थमेव। हिञ्चारादयस्तु प्रक्षेपविषये प्रयोज्याः, तु "पातव्यश्च चतुर्द्रवै." इति परिभाषया पानविषये, एवं वक्ष्यमाणेष्वपि।

प्रवर्त्तते न तेनात्र चूर्णपेयो चतुर्द्रवः ॥ ४८ ॥

रुचकादिः—चूर्णं समं रुचकहिङ्गुमहौषधानाम्
शुण्ठ्यम्बुना कफसमीरणसम्भवासु ।
हृत्पार्श्वपृष्ठजठरार्त्तिविसूचिकासु
पेयं तथा यवरसेन तु विड्विबन्धे ॥
समं शुण्ठ्यम्बुनेत्येवं योजना क्रियते बुधैः ।
तेनाल्पमानमेवात्र हिङ्गु सम्परिदीयते ॥ ४९ ॥
हिङ्गु सौवर्चलं पथ्याविड्सैन्धवतुम्बुरु ।
पौष्करञ्च पिबेच्चूर्णं दशमूलयवाम्भसा ॥
पार्श्वहृत्कटिपृष्ठांसशूले तन्द्रापतानके ।
शोथे श्लेष्मप्रसेके च कर्णरोगे च शस्यते ॥ ५० ॥

एरण्डसप्तकम्—एरण्डबिल्वबृहतीद्वयमातुलुङ्ग-
पाषाणभित्त्रिकटुमूलकृतः कषायः ।
सक्षारहिङ्गुलवणोरुवुतैलमिश्रः
श्रोण्यंसमेढ्रहृदयस्तनरुक्षु पेयः ॥ ५१ ॥

---

एतदेवाह—क्वाथेन चूर्णपान यदित्यादि। अस्यार्थस्तु ज्वरातीसारचिकित्साया-मेवोक्तः ॥ ४८ ॥

चूर्णं सममित्यादि।—रुचकं सौवर्चलम्। तीक्ष्णत्वेन शुण्ठ्याः कर्षार्द्धस्याल्पस्य वा क्वाथः। प्रक्षेपः सौवर्चल माषा १, शुण्ठीचूर्ण माषा २, हिङ्गु रति ६। एवं यवरसेनेति यवक्वाथेन। समं शुण्ठ्यम्बुनेति, समशब्दस्य तुल्यार्थत्वे हिङ्गुनोऽपि रुचकमहौषधसमानत्वेन बहुमानता स्यादिति सममिति पदं सहार्थ एवेत्यर्थः ॥४९॥

हिङ्गु सौवर्चलमित्यादौ।—दशमूलयवाम्भसेति दशमूलयवयोर्द्वयोः क्वाथेनेत्याहुः तेन प्रत्येकं दशमूल १ माषा ७ रति, यवतण्डुल १ कर्षः प्राक्कार्थं जल शराव १, शेष पल २। भद्रे विवर्चिते हिङ्ग्वादीनां प्रक्षेपः ॥ ५० ॥

एरण्डेत्यादौ।—मातुलुङ्गं मातुलुङ्गस्य मूलम्, पाषाणभित् पाषाणभेदी; त्रिकण्टी गोक्षुरकस्य मूलम्। लवणमत्र सैन्धवम्, न तु सौवर्चलम्, सैन्धवक्षार-

हिङ्गु त्रिकटुकं कुष्ठं यवक्षारोऽथ सैन्धवम्।
मातुलुङ्गरसोपेतं प्लीहशूलापहं रजः॥ ५२॥
दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम्।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव॥ ५३॥
क्रिमिरिपुचूर्णं लीढं सहितं स्वरसेन वङ्गसेनस्य।
क्षपयत्यचिरान्नियतं लौहाजीर्णोद्भवं शूलम्॥ ५४॥
विदारीदाड़िमरसः सव्योषलवणान्वितः।
क्षौद्रयुक्तो जयत्याशु शूलं दोषत्रयोद्भवम्॥ ५५॥

एरण्डद्वादशकम्—

एरण्डफलमूलानि बृहतीद्वयगोक्षुरम्।
पर्ण्यिन्यः सहदेवा च सिंहपुच्छीक्षुरालिका॥
तुल्यै रेतैः शृतं तोयं यवक्षारयुतं पिबेत्।
पृथग्दोषभवं शूलं हन्यात् सर्वभवं तथा॥ ५६॥

---

...युक्तं तैलैरण्डकस्येति नागार्जुनसंवादात्। अयं योग आमवाते चक्रादिना ...लिखितः। अतस्तत्रापि युज्यते॥ ५१॥

हिङ्गु त्रिकटुकमित्यादौ।—मातुलुङ्गरसो मातुलुङ्गमूलक्वाथः। अन्ये तु मातु...लुङ्गफलरसमित्याहुः॥ ५२॥

दग्धमित्यादि।—मृगशृङ्गं हरिणशृङ्गम् तच्च चूर्णीकृत्यान्तर्धूमं यथा स्यात् ...तथा दग्धव्यमित्यर्थः॥ ५३॥

क्रिमिरिपुचूर्णमित्यादौ।—स्वरसेनेति वङ्गसेनपत्रस्य बकपत्रस्य स्वरसेनेत्यर्थः॥ ५४॥

विदारीत्यादि।—विदारी पक्वदाडिमफलयोः स्वरसः, भूमिकुष्माण्डरस...पक्वदाडिमफलरसः प्रत्येकं कर्ष २ त्रिकटुसैन्धव प्रमा ११ मधु माषा ४॥ ५५॥

एरण्डद्वादशके।—एरण्डस्य फलं मूलञ्च। पर्णिन्यश्चतस्रः। सहदेवा दण्डो...त्पलभेदः। सिंहपुच्छी पृश्निपर्णीभेदः, सा च कलम्बुपत्रसदृशदीर्घपत्रा काटवा...सिंहपुच्छीति ख्याता। इक्षुरालिका लटा वा नड इति नाम्ना ख्याता खगडी। ...अन्यस्तु इक्षुरालिकास्थाने इक्षुरकं पठति। एवं सुश्रुतमतानुवादो चक्रादोऽपि॥५६॥

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन् मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम्॥ ५७॥
शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम्।
उष्णोदकेन तत् पीतं शूलं हन्ति त्रिदोषजम्॥ ५८॥
तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम्।
प्रयोज्यं मधुसर्पिर्भ्यां सर्वशूलनिवारणम्॥ ५९॥
मूत्रान्तःपाचितां शुष्कां लौहचूर्णसमन्विताम्।
सगुडामभयामद्यात् सर्वशूलप्रशान्तये॥ ६०॥

दाधिकं घृतम्—

पिप्पली नागरं विल्वं कारवी चव्यचित्रकम्।
हिङ्गु दाड़िमवृक्षाम्लवचाक्षाराम्लवेतसम्॥

---

गोमूत्रशुद्धमित्यादि।—गोमूत्रे सप्तधा निर्वापणेन शुद्धं मण्डूरं मिलितत्रिफला चूर्णसमं पञ्च षट्-सप्तमाषकाणामन्यतममानेनोपयोज्यम॥ ५७॥

शङ्खचूर्णमित्यादि।—मनाग् दग्धस्य शङ्खस्य चूर्णं गृह्णन्ति। अस्य माषकैकं किञ्चिदधिकं वा, लवणव्योषयोश्च मिलित्वा माषद्वयम्, हिङ्गुनो रक्तिद्वयं त्रयं वा पिबेदित्याहुः। अन्ये तु भागानुक्तेः सर्वमेव सममिति वदन्ति। श्लेष्मोत्तरोऽयं योगः॥ ५८॥

तीक्ष्णाय इत्यादि।—मारितपुटितायस्लौहचूर्णं कर्षं १, माषा ८, त्रिफलाचूर्णं प्रत्येकं मा ८, मिलितचूर्णाच्च ग्राह्यं रति ४। घृतमधुनी दत्त्वा लौहमुद्गरेण समर्द्य भक्षणीयम्। मात्रादिविधिश्च लौहान्तरवत्। अन्ये तु त्रिफलाया एकभागसमं लौहचूर्णमिति वदन्ति॥ ५९॥

त्रिफलाक्वाथभावित लौहदन्तिकया अयं योगो यदि क्रियते तदा द्वित्रिचतुर्माषकोपयोगः। मूत्रान्तःपाचितामिति गोमूत्रे यौतस्विन्नाम्। लौहचूर्णेन सहैव मल पाचिता मित्यन्ये शुष्कामित्यातपयोगात्। लौहचूर्णसमन्वितामिति लौहचूर्णञ्च हरीतकीचूर्णसमम्। सगुडामिति चूर्णद्वयसमगुडाम्। अन्ये तु लौहचूर्णगुडहरीतकीनां प्रत्येकं समानत्वमित्याहुः॥ ६०॥

दाधिकघृते विल्वं विल्वस्य मूलम्, कृष्णलवणन्तु सौवर्चलभेदः। चक्रं हि

वर्षाभूरुण्णलवणमजाजी वीजपूरकम्।
दधि त्रिगुणितं सर्पिस्तत्सिद्धं दाधिकं घृतम्॥
गुल्मार्शःप्लीहहृत्पार्श्वशूलयोनिरुजापहम्।
दोषसंशमनं श्रेष्ठं दाधिकं परमं स्मृतम्॥
कम्बलावृतगात्रस्य प्राणायामं प्रकुर्वतः।
कटुतैलाक्तशक्तूनां धूपः शूलहरः परः॥ ६२॥
व्यायामं मैथुनं मद्यं लवणं कटु वैदलम्।
वेगरोधं शुचं क्रोधं वर्जयेच्छूलवान् नरः॥ ६३॥

इति शूलचिकित्सा।

---

## अथ परिणामशूलचिकित्सा।

वमनं तिक्तमधुरैर्विरेकश्चापि शस्यते।
वस्तयश्च हिताः शूले परिणामसमुद्भवे॥ १॥

---

न काललवणे गन्धः सौवर्चलगुणो हि सः" इति। वृचाम्ल महार्द्रकम्, कृष्णलवण सौवर्चलविशेष, वीजपूरक वीजपूरकमूलम्। दध्ना त्रिगुणेनैव पाक। स्वरसक्षीरमाङ्गल्यैरित्यादि परिभाषा वचनन्तु चतुर्गुणजलदानार्थमुक्तम्, किन्तु प्रायो न समाद्रियन्ते॥ ६१॥

कम्बलेत्यादि।—प्राणायाममित्युच्छ्वासरोधनम्, कटुवैदलमित्यत्र शूलिवैदलमिति पाठे शूलजन्यत्वेन इह अस्तीति शूलि वैदलविशेषणम्॥ ६२। ६३॥

इति शूलचिकित्सा विवृतिः।

---

शूलविशेषत्वात् परिणामशूलमाह वमनमित्यादि।—चकाराल्लङ्घनमपि बोध्यम्। तथा वस्तयोऽपि माधुतैलिकादयोऽत्र ज्ञेया। उक्तं हि "लङ्घनं वमनं शस्तं विरेकश्चानुवासनम्। निरूहो वाजिगन्धादिमाधुतैलिकवस्तयः" इति। माधुतैलिकवस्तयश्च मधुतैलप्रधानाः सुश्रुतोक्ताः। उक्तं हि "यस्मान्मधु च तैलञ्च प्राधान्येन

## विड़ङ्गादिमोदकः।

विड़ङ्गतण्डुलव्योषं त्रिवृद्दन्तीसचित्रकम्।
सर्वाण्येतानि संहृत्य स्लक्ष्णचूर्णानि कारयेत्॥
गुड़ेन मोदकं कृत्वा भक्षयेत् प्रातरुत्थितः।
उष्णोदकानुपानन्तु दद्यादग्निविवर्द्धनम्॥
जयेत् त्रिदोषजं शूलं परिणामसमुद्भवम्॥ २॥

नागरगुड़तिलकल्कं पयसा संसाध्य यः पुमानद्यात्।
उग्रं परिणामशूलं तस्यापैति सप्तरात्रेण॥ ३॥

शम्बूकजं भस्म पीतं जलेनोष्णेन तत्क्षणात्।
पक्तिजं विनिहन्त्येव तच्छूलं विष्णुरिवासुरान्॥ ४॥
अक्षधात्रभयाकृष्णाचूर्णं मधुयुतं लिहेत्।
दध्नानूनसरेणाद्यात् सतीलयवशक्तुकान्॥
अचिरान्मुच्यते शूलान्नरोऽन्नपरिवर्त्तजात्॥ ५॥
तिलनागरपथ्यानां भागं शम्बूकभस्मनाम्।
द्विभागगुड़संयुक्तां गुड़ीं कृत्वाक्षभागिकाम्॥
शीताम्बुपानं पूर्वाह्णे भक्षयेत् क्षीरभोजनः।

---

प्रदीयते। माधुतैलिकमित्येव भिषग्भिर्वस्तिरुच्यते।” तत्रामाशयस्थे दोषे लङ्घनं वमनं; पच्यमानाशयस्थ तु विरेकनिरूहौ, पक्वाशयस्थे चानुवासनमिति॥ १॥

विडङ्गेत्यादि।—विडङ्गतण्डुलं विडङ्गस्य निस्तुषसारभागः। मोदकत्वादत्र द्विगुणो गुड.। नागरेत्यादि।—नागरादिकल्कमुत्कारिकावत यवागूवद्वा क्षीरेण साधयित्वा भक्षयेत्। शुण्ठीचूर्णं कर्ष १, पुरातनगुड कर्ष १, तिलचूर्णं पल १, गव्यदुग्ध शराव २॥ २। ३॥

शम्बूकजमित्यादि।—निर्मांसस्वल्पशम्बूकभवं भस्ममाषकमेकं द्वय वा उष्णाम्बुना गोलयित्वा घृताभ्यक्तमुखकुहरेण पेयम् अयं योगः कफे॥ ४॥

अक्षेत्यादौ।—अनूनसरेणेति अखण्डितस्निग्धभागेनेत्यर्थः। अलूनसरेणेति पाठे स एवार्थः सतीलो वर्त्तुलकलायः। अन्नपरिवर्त्तोऽन्नपरिणामः॥ ५॥

सायाह्ने रसकं पीत्वा नरो मुच्येत दुर्जयात्।
परिणामसमुत्थाच्च शूलाच्चिरभवादपि ॥ ६ ॥
शम्बूकं त्र्यूषणञ्चैव पञ्चैव लवणानि च।
समांशां गुड़िकां कृत्वा कलम्बुकरसेन वा ॥
प्रातर्भोजनकाले वा भक्षयेत् तु यथाबलम्।
शूलाद्विमुच्यते जन्तुः सहसा परिणामजात् ॥ ७ ॥
यः पिबति सप्तरात्रं शक्तूनेकान् कलाययूषेण।
स जयति परिणामरुजं चिरजामपि किमुत नूतनजाम् ॥ ८ ॥
लौहचूर्णं वरायुक्तं विलीढं मधुसर्पिषा।
परिणामशूलं शमयेत् तन्मलं वा प्रयोजितम् ॥ ९ ॥

---

तिलेत्यादि।—तिलादीनां शम्बूकभस्मान्तानां समभागः। मिलितचूर्णापेक्षया च गुडस्य भागद्वयम्। रसकमिति मांसरसम् ॥ ६ ॥

शम्बूकमित्यादौ।—कलम्बुकरसेनेति वा शब्दः पूर्वयोगापेक्षया, शम्बूकादिचूर्णं कलम्बुकरसेन संयोज्य चतुर्माषिका गुडिका कार्या। अत्र केचिच्छम्बूकशब्देन शम्बूकभस्म गृह्णन्ति, युक्तञ्चैतत् तथाच तन्त्रान्तरसंवादात्। 'सपञ्चलवणं व्योषचूर्णं शम्बूकभस्मभिः। गुडिकापरिकल्पितौ कलम्बो स्वरसे कृता" इति। शक्तूनिति यवशक्तून्। एकानिति केवलान्। कलाययूषं वर्तुलकलाययूषः। अयं योगः पित्तकफशूले युक्तः ॥ ७ ॥ ८ ॥

लौहचूर्णमित्यादि।—वरा त्रिफला। लौहचूर्णस्यैको भागः; त्रिफलायाश्च प्रत्येकं लौहचूर्णसमभागत्वम्। तन्मलं वेति लौहमलं, एतदपि वरायुक्तमिति बोध्यम्। लौहमलस्य तु मिलितत्रिफलातुल्यो भागः। मारितपुटितलौहचूर्णं माषा ८ त्रिफलाचूर्णं प्रत्येकं माषा ८। अन्ये तु लौहचूर्णस्य महावीर्य्यत्वात् व्याधिप्रत्यनीकत्वाच्च प्राधान्यमिति कृत्वा मिलितत्रिफलाचूर्णसमत्वमित्याहुः। तन्मते त्रिफलाचूर्णं प्रमा ८, लौहचूर्णं कर्ष १. मा ८, मिलितचूर्णात् प्रथमतो रक्तिचतुष्टयं गृहीत्वा घृतमधुभ्यां सम्मर्द्य लेह्यम्। लौहान्तरवत् क्षीरं चतुःषष्टिगुणं षष्टिगुणं वानुपेयम्। दिनत्रयानन्तरं रक्तिद्वयेन वृद्धिर्माषकद्वयं यावत्। सर्वमपरं लौहान्तरवत् क्रिया। तथा शोधितमण्डूर पल १, मिलितत्रिफलाचूर्णं पल १, ततो मिलितचूर्णात् ८ माषा मधुघृताभ्यां लेह्यम् ॥ ९ ॥

कृष्णाभयालौहचूर्णं गुडेन सह भक्षयेत् ।
पक्तिशूलं निहन्त्येतज्जठराग्निमन्दताम् ॥
आमवातविकारांश्च स्थौल्यञ्चैवापकर्षति ॥ १० ॥
पथ्यालोहरजः शुण्ठीचूर्णं माक्षिकसर्पिषा ।
परिणामरुजं हन्ति वातपित्तकफात्मिकाम् ॥ ११ ॥

सामुद्राद्यं चूर्णम्—

सामुद्रं सैन्धवं क्षारो रुचकं रौमकं विडम् ।
दन्ती लौहरजः किट्टं त्रिवृच्छूरणकं समम् ॥
दधिगोमूत्रपयसा मन्दपावकपाचितम् ।
तद्यथाग्निबलं चूर्णं पिबेदुष्णेन वारिणा ।
जीर्णेऽजीर्णे तु भुञ्जीत मांसादि घृतसाधितम् ॥
नाभिशूलं यकृच्छूलं गुल्मप्लीहकृतञ्च यत ।
विद्रध्यष्ठीलिकां हन्ति कफवातोद्भवं तथा ॥
शूलानामपि सर्वेषामौषधं नास्ति तत्परम् ।
परिणामसमुत्थस्य विशेषेणान्तकृ न्तनम् ॥ १२ ॥

सप्तामृत लोहम्—

नारिकेल सतोयञ्च लवणेन प्रपूरितम् ।

---

कृष्णेत्यादि ।—प्रत्येक समभाग इति निश्चल । अन्ये तु मिलितसदृशचूर्णसम लौहचूर्णमित्याहु ॥ १० ॥

पथ्येत्यादि ।—अत्रापि हरीतकीशुण्ठी मिलितचूर्णेन सम लौहचूर्णं ग्राह्यं प्रयोगश्च नवायसादिवादित्याहु । निश्चलस्तु पथ्यादीनां त्रयाणां प्रत्येक समभागता माह ॥ ११ ॥

सामुद्रमित्यादि ,—सामुद्र करकच , रुचक सौवर्चल , रोमक रुमानदीभव तदभावे साम्भरिलवणम । लौहरज किट्टञ्चात मारित पठित लौहचूर्णम् किट्टञ्च गोमूत्रशोधितमण्डूरचूर्णम् । दधिगोमूत्रपयसेति दध्यादित्रय मिलित्वा चतुर्गुणं मिलितचूर्णसम वा, दत्त्वा सर्वमेव चूर्णमेकीकृत्य पक्तव्यम् आचार्याभावात व्यवहारस्तु दध्यादिना चतुर्गुणेनैव ॥ १२ ॥

विपक्वमग्निना सम्यक् परिणामजशूलनुत् ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १३ ॥
मधुकं त्रिफलाचूर्णमयोरजः समं लिहन् ।
मधुसर्पिर्युतं सम्यग् गव्यं क्षीरं पिबेदनु ॥
छर्दिं सतिमिरां शूलमम्लपित्तं ज्वरं क्लमम् ।
आनाहं मूत्रसङ्गञ्च शोथञ्चैव निहन्ति सः ॥ १४ ॥

गुड़पिप्पलीघृतम्—

सपिप्पलीगुड़ं सर्पिः पचेत् क्षीरचतुर्गुणे ।
विनिहन्त्यम्लपित्तञ्च शूलञ्च परिणामजम् ॥ १५ ॥

पिप्पलीघृतम्—

क्वाथेन कल्केन च पिप्पलीनाम्
सिद्धं घृतं माक्षिकसंप्रयुक्तम् ।
क्षीरानुपानस्य निहन्त्यवश्यम्
शूलं प्रवृद्धं परिणामसंज्ञम् ॥ १६ ॥

कोलादिमण्डूरम्—

कोलाग्रन्थिकशृङ्गवेरचपलाक्षारैः समं चूर्णितम्
मण्डूरं सुरभीजलेऽष्टगुणिते पक्त्वाथ सान्द्रीकृतम् ।
न खादेदशनादिमध्यविरतौ प्रायेण दुग्धान्नभुग्-
जन्तुं वातकफामयान् परिणतौ शूलञ्च शूलानि च ॥ १७ ॥

नारिकेलमित्यादि ।—नारिकेलमिह सपक्वम् ॥ १३ ॥

मधुकमित्यादि ।—अयोरजः समामिति मिलितचूर्णसम लौहरजः । अन्ये त्वेक-भागसम लौहरजश्चाहुः । व्यवहारस्तु पूर्वेणैव ॥ १४ ॥

सपिप्पलीगुड़मिति पिप्पलीगुड़ौ कल्कौ ॥ १५ ॥

क्वाथेनेत्यादौ ।—माक्षिकसंप्रयुक्तमिति सिद्धशीते मधु पादिकं प्रक्षेप्यम् ॥ १६ ॥

कोलेत्यादौ ।—कोला चवी ; चपला पिप्पली , क्षारो यवक्षारः । समं चूर्णितं मण्डूरमिति सर्वचूर्णसमं मण्डूरम् । सुरभीजले गोमूत्रे । अष्टगुणित

भीमवटकमण्डूरम्—

कोलाग्रन्थिकसहितैर्विश्वौषधमागधीयवक्षारैः ।
प्रस्थमयोरजसां पलिकांशैश्चूर्णितैर्मिश्रैः ॥
अष्टगुणमूत्रयुक्तं क्रमपाकात् पिण्डतां नयेत् सर्वम् ।
कोलप्रमाणवटिकास्तिस्रो भोज्यादिमध्यविरतौ च ॥
रससर्पिर्यूषपयोमांसैरश्नन् नरो निवारयति ।
अन्नविवर्त्तनशूलं गुल्मं प्लीहाग्निसादांश्च ॥ १८ ॥

क्षीरमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्राढ्ढाढके पचेत् ।
क्षीरप्रस्थेन तत् सिद्धं पक्तिशूलहरं नृणाम् ॥ १९ ॥

चविकादिमण्डूरम्—

लौहकिट्टपलान्यष्टौ गोमूत्रेऽष्टगुणे पचेत् ।
चविकानागरक्षारपिप्पलीमूलपिप्पलीः ॥
सञ्चूर्ण्य निक्षिपेत् तस्मिन् पलांशाः सान्द्रतां गते ।
गुड़िकाः कल्पयेत् तेन पक्तिशूलनिवारिणीः ॥ २० ॥
मण्डूरं शोधितं पथ्यां लौहजां वा गुड़ेन तु ।
भक्षयेन्मुच्यते शूलात् परिणामसमुद्भवात् ॥ २१ ॥

---

इति मण्डूरापेक्षया । आसन्नपाके कोलादिचूर्णं प्रक्षेप्यम् । समुदितचूर्णापेक्षयाष्ट गुणं गोमूत्रमित्याहुरन्ये । शूलमिति सान्निपातिक, शूलानि चेति वातजादीनि ॥१७

भीमवटकमण्डूरे कोलप्रमाणा इति मिलिता अष्टमाषकमाना: । तेनाष्ट माषकैरेवेति तिस्रो वटिका' कार्य्याः । व्यवहारस्तु द्वित्रिचतुर्माषकैरिति । अत्रापि मूत्रस्याष्टगुणत्वं पूर्ववत् । अन्नविवर्त्तनशूलं परिणामशूलम् ॥ १८ ॥

क्षीरमण्डूरं स्पष्टम् ॥ १९ ॥

लौहकिट्टेत्यादौ चविकास्थाने चपलापाठेऽपि चविकैवार्थः, हस्तिपिप्पलीत्यन्ये ॥ २० ॥

शतावरीमण्डूरम्—

संशोध्य चूर्णितं कृत्वा मण्डूरस्य पलाष्टकम्।
शतावरीरसस्याष्टौ दध्नस्तु पयसस्तथा॥
पलान्यादाय चत्वारि तथा गव्यस्य सर्पिषः।
विपचेत् सर्वमेकध्यं यावत् पिण्डत्वमागतम्॥
सिद्धन्तु भक्षयेन्मध्ये भोजनस्याग्रतोऽपि वा।
वातात्मकं पित्तभवं शूलञ्च परिणामजम्।
निहन्त्येव हि योगोऽयं मण्डूरस्य न संशयः॥ २२॥

तारामण्डूरगुड़ः—

विडङ्गं चित्रकं चव्यं त्रिफलात्र्यूषणानि च
नवभागानि चैतानि लौहकिट्टसमानि च॥
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्द्धिकगुड़ान्वितम्।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम्॥
स्निग्धे भाण्डे विनिक्षिप्य भक्षयेत् कोलमात्रया।
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम्।
कामलां पाण्डुरोगञ्च शोथं मन्दाग्नितामपि॥
अर्शांसि ग्रहणीदोषं क्रिमिगुल्मोदराणि च।
नाशयेदम्लपित्तञ्च स्थौल्यञ्चैवापकर्षति॥

---

मण्डूरमित्यादौ।—लौहजा पक्वी वज्रपाण्ड्वादिजा सामान्यलौहजा वा पक्वी पुटादिशोधिता ग्राह्या॥ २१॥

शतावरीमण्डूरे। अग्रतोऽपि वेति वाशब्दः समुच्चये, तेन भोजनान्ते भोजनमध्ये भोजनस्याग्रतश्च भक्षयेत् इति॥ २२॥

तारामण्डूरे नवभागानि चैतानीति विडङ्गादीनां प्रत्येकमेकभागतया नव भागा ग्राह्याः, वृद्धव्यवहारात्, ते चासन्नपाके प्रदेया.। लौहकिट्टसमानि चेति लौहकिट्टस्यापि नवभागत्वम्। गोमूत्रं द्विगुणमिति मिलितचर्णात्। अत्र पक्वो

वर्जयेच्छुष्कशाकानि विदाह्यम्लकटूनि च।
पक्तिशूलान्तको ह्येष गुडो मण्डूरसंज्ञकः॥
शूलार्त्तानां कृपाहेतोस्तारया परिकीर्त्तितः॥ २३॥

राममण्डूरम्—

वशिरं श्वेतवाट्यालं मधुपर्णी मयूरकम्।
तण्डुलीयञ्च कर्षांशं दत्त्वाधश्चोर्द्धमेव च॥
पाक्यं सुजीर्णमण्डूरं गोमूत्रेण दिनद्वयम्।
अन्तर्वाष्पमदग्धञ्च तथा स्थाप्यं दिनत्रयम्॥
विचूर्ण्य द्विगुणेनैव गुडेन सुविमर्द्दितम्।
भोजनस्यादिमध्यान्ते भक्ष्यं कर्षं त्रिभागतः॥
तक्रानुपानं वर्ज्यञ्च वाच्यं मम्लकमत्र तु।
अम्लपित्ते च शूले च हितमेतद् यथामृतम्॥ २४॥

वृहच्छतावरीमण्डूरम्—

शतावरीरसप्रस्थे प्रस्थे च सुरभीजले।
अजायाः पयसः प्रस्थं प्रस्थे धात्रीरसस्य च।
लौहकिट्टपलान्यष्टौ शर्करायाश्च षोड़श।
दत्त्वास्य कुड़वञ्चैव पचेन्मृद्वग्निना शनैः॥
सिद्धशीते घटे नीते चूर्णानीमानि दापयेत्।
विड़ङ्गत्रिफलाव्योषयमानीगजपिप्पली॥
द्विजीरकघनानाञ्च सूक्ष्माण्यक्षसमानि च।

---

ञ्चस्वागतमानत्वात तथैव व्यवहारान्न द्वैगुण्यम। मूत्राद्विकगुडान्वितमिति सर्व चूर्णसमो गुड इत्यर्थ.। कोलमात्रयति अष्टमाषकमानेन॥ २३॥

वशिरमित्यादि।—वशिर सव्यावर्त्त, मधुपर्णी गुडूची; मयूरकोऽपामार्ग। पाक्य सुजीर्णमण्डूरमिति गोमूत्रेण दिनत्रयमिति गोमूत्रमल्पमल्प दत्त्वा दिनद्वय पक्तव्यं यथा मण्डूर न दह्यते। गोमूत्रन्तु एकदैव बहुतरं न देयं तथा सत्युत्तान-धारण कर्त्तुमशक्यमिति। अवतार्य्य शरावेण पिधाय दिनत्रय स्थाप्यम्, तदनु प्रक्षाल्य

क्षादिदम्निबलापेक्षी भोजनादौ विचक्षणः ॥
निहन्ति पक्तिशूलञ्च अम्लपित्तं सुदारुणम्।
रक्तपित्तञ्च शूलञ्च पाण्डुरोगं हलीमकम्॥ २५॥

रसमण्डूरम्—

कुड़वं पथ्याचूर्णं द्विपलं गन्धाश्म लौहकिट्टञ्च।
शुद्धरसस्यार्द्धपलं भृङ्गस्य रसञ्च केशराजस्य॥
प्रस्थोन्मितञ्च दत्त्वा लौहे पात्रेऽथ दण्डसङ्घृष्टम्।
शुष्कं घृतमधुयुतं मृदितं स्थाप्यञ्च भाण्डे स्निग्धे॥
उपयुक्तमेतदचिरान्निहन्ति कफपित्तजान् रोगान्।
शूलं तथाम्लपित्तं ग्रहणीञ्च कामलामुग्राम्॥ २६॥

त्रिफलालौहः—

अक्षामलकशिवानां स्वरसैश्च पक्वं सुलौहजचूर्णम्।
सगुड़ं यद्युपभुङ्क्ते मुञ्चति त्रिदोषजं शूलम्॥ २७॥

---

शोधयित्वा ग्राह्यम। भक्ष्यं कर्षं त्रिभागत इति कर्षमेव भागत्रय कृत्वा खादयम, व्यवहारस्तु माषकचतुष्टयेन। वार्त्ताम्लकमिति बदरीतिन्तिडीकादिकम्। रामकृतत्वाद्राममण्डूरमेतत २४। २५॥

कुडवमित्यादौ।—गन्धाश्म शोधितगन्धकचूर्ण द्विपल तथा शोधितलौहमलञ्च प्रत्येक द्विपलमित्यर्थः। रसगन्धकौ कज्जलीकृत्य हरीतकीमण्डूरचूर्णाभ्या सह मिश्रीकृत्य भृङ्गराजस्वरस केशराजस्वरसञ्च प्रत्येकं प्रस्थमान दत्त्वा तावद्घर्षणीयं लौहपात्रे लौहदण्डेनैव यावच्चूर्णप्रायं भवति, अत. प्रथमत रक्तिचतुष्टय गृहीत्वा घृतमधुभ्या सम्मर्द्य लेह्यम, क्षीरादिकमनुपेयम्। क्रमात् रक्तिद्वय कृत्वा वृद्धिर्माषकद्वयं यावत्॥ २६॥

अक्षामलकेत्यादौ।—स्वरसैरिति मिलित्वा चतुर्गुणैः, प्रत्येकमित्यन्ये। व्यवहारस्तु पूर्ववदेव स्वरसाभावे क्वाथः। सगुडमिति लौहरजः समगुडम्। पाकश्चास्य मृद्रया। तदुक्तं—"गुड़ादि प्रविशेद्यत्र तत्र पाकश्च मुद्रया।" लौहान्तरवद्विधिरत्र॥ २७॥

लौहगुडिका ।

लोहस्य रजसो भागस्त्रिफलायास्त्रयस्तथा ।
गुड़स्याष्टौ तथा भागा गुड़ाम्लकं चतुर्गुणम् ॥
एतत् सर्वञ्च विपचेद्गुड़पाकविधानवित् ।
लिह्याच्च तद् यथाशक्ति क्षये शूले च पाकजे ॥ २८ ॥

धात्रीलौहम्—

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लोहचूर्णस्य ।
यष्टीमधुकरजश्च द्विपलं दद्यादुपले घृष्टम् ॥
अमृताक्काथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ।
चण्डातपेषु शुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम् ॥
घृतमधुना सह युक्तं भुक्त्यादौ मध्यतोऽन्ते च ।
त्रीनपि वारान् खादेत् पथ्यं दोषानुबन्धेन ॥
भक्तस्यादौ नाशयति व्याधीन् पित्तानिलोद्भवान् ।
मध्येऽन्नविष्टम्भं जयति नृणां विदह्यते नान्नम् ॥
पानान्नकृतान् दोषान् भुक्त्यन्ते शीलितं जयति ।
एवं जीर्यति चान्ने शूलं नृणां सुकष्टमपि ॥
हरति सहसा युक्तो योगश्चायं जरत्पित्तम् ।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवान् जयेद्रोगान् ।
प्रसादयत्यपि रक्तं पाण्डुत्वं कामलां जयति ॥ २९ ॥

लौहामृतम्—

तनूनि लोहपात्राणि तिलोत्सेधसमानि च ।

---

लोहस्येत्यादि ।—भाग इत्य कौ भाग, त्रिफलायास्त्रय इति मिलित्वा । लिह्येच्च रक्तिचतुष्टयादिक्रमेणेत्याद्. ॥ २८ ॥

धात्रीत्यादि ।—अमृताक्काथेनामलकीक्काथेन । अन्ये त्वमृता गडूचीमाहुः । व्यवहारस्तु पूर्वेणैव । जरत्पित्तमम्लपित्तम् ॥ २९ ॥

कश्चिकामूलकल्केन संलिप्य सर्षपेण वा ॥
विशोष्य सूर्य्यकिरणैः पुनरेवावलेपयेत् ।
त्रिफलाया जले ध्मातं वापयेच्च पुनः पुनः ॥
ततः सच्चूर्णितं कृत्वा कर्पटेन तु छानयेत् ।
भक्षयेन्मधुसर्पिर्भ्यां यथाग्न्येतत् प्रयोजयेत् ॥
माषकं त्रिगुणं वाथ चतुर्गुणमथापि वा ।
छागस्य पयसः कुर्य्यादनुपानमभावतः ॥
गवां घृतेन दुग्धेन चतुःषष्टिगुणेन च ।
पक्तिशूलं निहन्त्येतन्मासेनैकेन निश्चितम् ।
लोहामृतमिदं श्रेष्ठं ब्रह्मणा निर्मितं पुरा ॥
ककारपूर्वकं यच्च यच्चाम्लं परिकीर्त्तितम् ।
सेव्यं तन्न भवेदत्र मांसञ्चानूपसम्भवम् ॥ ३० ॥

खण्डामलकी—

स्विन्नपीड़ितकुष्माण्डात् तुलार्द्धं भृष्टमाज्यतः ।
प्रस्थार्द्धं खण्डतुल्यन्तु पचेदामलकीरसात् ॥
प्रस्थे सुस्विन्नकुष्माण्डरसप्रस्थे विघट्टयन् ।
दर्व्या पाकं गते तस्मिंश्चूर्णीकृत्य विनिक्षिपेत् ॥
द्वे द्वे पले कणाजाजीशुण्ठीनां मरिचस्य च ।
पलं तालीशधन्याकचातुर्जातकमुस्तकम् ।
कर्षप्रमाणं प्रत्येकं प्रस्थार्द्धं माक्षिकस्य च ॥

तन्नीत्यादि ।—कश्चिकामूलकल्केन श्वेतार्कमूलकल्केन, तथा श्वेतसर्षपकल्केन वा पत्र पुनः परिलिप्य पुनः पुनः चातपे संशोष्य, ततो दग्ध्वा त्रिफलाक्वाथे निर्वापयेत् तावत् कार्य्यं यावत् सर्वलोहस्य जारणम् भवेत् । ततः प्रक्षाल्य संशोष्य चूर्णीकृत्य रक्तिचतुष्टयादिक्रमेण नवायसादिवदस्योपयोगः । क्वचिच्च अत्र कश्चिकामूल-कल्केनेत्यत्र श्वेतसर्षपकल्केन परिलिप्य पुनःपुनरिति पाठान्तरम् ॥ ३० ॥

पक्तिशूलं निहन्त्येतद्दोषत्रयभवञ्च यत्।
छर्द्यम्लपित्तमूर्च्छाश्च कासश्वासावरोचकम्॥
हृच्छूलं रक्तपित्तञ्च पृष्ठशूलञ्च नाशयेत्।
रसायनमिदं श्रेष्ठं खण्डामलकसंज्ञितम्॥ ३१॥

नारिकेलखण्डः—

कुड़वमितमिह स्यान्नारिकेलं सुपिष्टम्
पलपरिमितसर्पिःपाचितं खण्डतुल्यम्।
निजपयसि तदेतत् प्रस्थमात्रे विपक्वम्
गुड़वदथ सुशीते शाणभागान् क्षिपेच्च॥
धन्याकपिप्पलिपयोदतुगाद्विजीरान्
शाणं त्रिजातमिभकेशरवह्निचूर्णं।
हन्त्यम्लपित्तमरुचिं क्षयमस्रपित्तम्
शूलं वमिं सकलपौरुषकारि हारि॥ ३२॥

---

खण्डामलक्यां खण्डतुल्यमिति खण्डस्य पञ्चाशत्पलानि। मरिचस्य तु पलमित्यन्वयः। तालीशादिकस्य प्रत्येकं कर्षमानमित्यर्थः॥ ३१॥

कुड़वमित्यादि।—अत्र केचिन्नारिकेलस्यार्द्रत्वं न द्वैगुण्यमिच्छन्ति। अतएवोक्तं—"अष्टौ पलानि कुडवो नारिकेले तथैव च" इति। ये च न द्वैगुण्यमिच्छन्ति तेषामयमभिप्रायो नारिकेलस्याष्टपलत्वे खण्डस्याप्यष्टपलत्वं, खण्डतुल्यमिति वचनात्। अतश्चात्र नारिकेलोदकप्रस्थस्य द्रवत्वेनोपादानात् पाकस्य द्वैगुण्यं प्रसज्येत, चतुर्गुणस्तूत्सर्गसिद्धः किञ्च तन्त्रान्तरे चातुर्गुण्यमप्युक्तं यथा—"कुडवं नारिकेलस्य श्लक्ष्णं दृशदि पेषितम्। शुद्धखण्डस्य कुडवं सर्वमेतच्चतुर्गुणे। आलोड्य नारिकेलस्य जले मृद्वग्निना पचेत्" इति। अस्मिन् वचने शर्कराया अपि कुड़वमुक्तम्, तत्र च न द्वैगुण्यं—"याश्चास्तत्त्वचमेव न द्विगुणिता ये चेक्षुजाता घनाः" इत्युक्तेः। अत एव खण्डतुल्यमिति पठ्यते। ततः नारिकेलस्य शस्यकुड़वाद्‌द्वैगुण्येन परमनयोर्नारिकेलखण्डयोः समता स्यात्, नान्यथेति। तेन द्वैगुण्याभावपक्ष एव साधीयान्। नारिकेले तथैव चेति वाक्यं नादरणीयमार्षत्वे प्रमाणाभावादित्याहुः। तुल्य

कलायगुड़िका—

कलायचूर्णभागौ द्वौ लौहचूर्णस्य चापरः।
कारवेल्लपलाशानां रसेनैव विमर्द्दितः॥
कर्षमात्रां ततश्चैकां गुड़िकां भक्षयेन्नरः।
मण्डानुपानाज्जयति जरत्पित्तं सुदुर्जयम्॥ ३३॥

लिह्याद्वा त्रैफलं चूर्णमयश्चूर्णसमन्वितम्।
यष्टिचूर्णेन वा युक्तं लिह्यात् चौद्रेण तद्वदे॥ ३४॥

पित्तान्तं वमनं कृत्वा कफान्तञ्च विरेचनम्।
अन्नद्रवे च तत्कार्य्यं जरत्पित्ते यदीरितम्।
आमपक्वाशये शुद्धे गच्छेदन्नद्रवः शमम्।
माषेण्डरी सतुषिका स्विन्ना सर्पियुता हिता॥ ३५॥

गोधूममण्डकं तत्र सर्पिषा गुड़संयुतम्।
ससितं शीतदुग्धेन मर्दितं वा हितं मतम्॥
शालितण्डुलमण्डं वा कवोष्णं सिक्थवर्जितम्।
वाट्यं चौरेण संसिद्धं घृतपूरं सशर्करम्॥ ३६॥

---

वंशलोचना। नागकेशरसहितं त्रिजातं मिलित्वा शाणमात्रं पुनः शाणमित्युक्तेः। पौरुषं शुक्रम्। हारि मनोहारि॥ ३२॥

कलायेत्यादि।—कलायो वर्त्तुलकलायः। लौहचूर्णस्यापर इत्येको भागः। पलाशानामिति पत्राणाम्। मण्डो यवमण्डः। जरत्पित्तमम्लपित्तम्॥ ३३॥

लिह्यादित्यादि।—मिलितत्रिफलाचूर्णस्य लौहचूर्णसमत्वम्। अन्ये तु त्रि-फलायाः प्रत्येकं लौहचूर्णसमोऽंश इत्याहुः। तद्वद इति जरत्पित्ते॥ ३४॥

पित्तान्तमित्यादौ।—अन्नद्रव इति, "भुक्ते जीर्य्यति जीर्णे वा यच्छूलमुपजायते" इत्यादिनोक्तः शूलविशेषोऽन्नद्रवः। माषेण्डरी सतुषिकेति सतुषमाषकृता माषेण्डरी माषपिष्टकविकृतिर्भक्ष्यविशेषः॥ ३५॥

गोधूममण्डको गोधूमकृतो भक्ष्यविशेषः पश्चिमदेशे प्रसिद्धः। मर्दितं वा हितं मतमिति, मर्दितं संयावाकृतिर्लेहः। वाट्यं यवमण्डम्। वाट्यमिव मण्डमिति पाठे

शर्करां भक्षयित्वा वा क्षीरमुत्क्वथितं पिबेत् ।
पटोलपत्रयूषेण खादेच्चणकशक्तुकान् ॥ ३७ ॥
अन्नद्रवे जरत्पित्ते वह्निर्मन्दो भवेद् यतः ।
तस्मादन्नान्नपानानि मात्राहीनानि कल्पयेत् ॥ ३८ ॥

इति परिणामशूलचिकित्सा ।

---

## अथोदावर्त्त-चिकित्सा ।

त्रिवृत्सुधापत्रतिलादिशाकग्राम्यौदकानूपरसैर्यवान्नम् ।
अन्यैश्च सृष्टानिलमूत्रविड्भिरद्यात् प्रसन्नागुड़शीधुपायी ॥१॥
आस्थापनं मारुतजे स्निग्धस्विन्नस्य शस्यते ।
पुरीषजे तु कर्त्तव्यो विधिरानाहिकस्तु यः ॥ २ ॥

---

भालितखण्डुलाकृतमण्ड इत्यर्थः । किन्तु यवस्य सर्वथा शूलघ्नत्वात् वाद्यमिति पाठ एव श्रेयान् । गोधूमचूर्णकृत भृष्टो घृतपूरी भक्ष्यविशेष ॥ ३६ ॥

पटोलेत्यादौ ।—यूषो मुद्गादियोगात किंवा क्वाथ ॥ ३७ ॥ ३८ ॥

इति परिणामशूलचिकित्सा-विवृतिः ।

---

पवनाविनाभावित्वसाधर्म्यात् शूलानन्तरमुदावर्त्तः । उदावर्त्ते हि सर्वत्र शूल ॥ बद्धवद्यम्भावी वायुः । यदुक्तं सुश्रुते—"सर्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नश ! वायोः क्रिया विधातव्या स्वमार्गप्रतिपत्तये" इति । उद्भूतेन वेगविधारणेनावृतस्य निरुद्धवायोर्वर्त्तौ वर्त्तनमुदावर्त्त इति निरुक्तिरस्य । त्रिवृदित्यादि ।—त्रिवृत्सुधयोः पत्रम् आदिशब्दात् सप्तलादिपत्रपरिग्रहः । अन्यैरिति विण्मूत्राद्यनुलोमनैः क्षीरादिभिः । प्रसन्ना मदिराविशेषः, गुडकृतशीधुर्गुडशीधुः ॥ १ ॥

आस्थापनमित्यादि ।—सुश्रुतस्य । मारुतजे इति मारुतवेगविघातजे ; एवं पुरीषज इत्यत्रापि व्याख्येयम् । विधिरानाहिक इति फलवर्त्त्यादिः ॥ २ ॥

क्षारवैतरणौ वस्ती युञ्ज्यात् तत्र चिकित्सकः॥ ३॥
श्यामा दन्ती द्रवन्तीत्वक् महाश्यामा स्नुही त्रिवृत्।
सप्तला शङ्खिनी श्वेता राजवृक्षः सतिल्वकः॥
कम्पिल्लकः करञ्जश्च स्वर्णक्षीरी त्वयं गणः।
सर्पिस्तैलरजःक्काथ-कल्केष्वन्यतमेन च॥
उदावर्त्तोदरानाहविषगुल्मविनाशनः॥ ४॥
त्रिवृत्कृष्णाहरीतक्यो द्विचतुःपञ्चभागिकाः।
गुड़िका गुड़तुल्यास्ता विड्विबन्धगदापहाः॥ ५॥
हरीतकी यवक्षार पीलुनी त्रिवृता तथा।
घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम्॥ ६॥
हिङ्गुकुष्ठवचासर्जो विड़ञ्चेति द्विरुत्तरम्।
पीतं मद्येन तच्चूर्णमुदावर्त्तविनाशनम्॥ ७॥

नाराचचूर्णम्—

खण्डपलं त्रिवृता समसुपकुल्याकर्षचूर्णितं श्लक्ष्णम्।

---

आस्थापनं विदधीति क्षारवैतरणाविल्यादिना। श्यामेत्यादि।—श्यामा श्याममूला त्रिवृत। द्रवन्ती मूषिकपर्णी दन्ती, अस्यास्त्वक्; त्वगित्यत्र स्नुगिति पाठे मीजुभदो वा, किन्तु सुश्रुते वाग्भटे च स्नुहीह न पठ्यते। महाश्यामा वृद्धदारकः। त्रिवृदित्यरुणमूला त्रिवृत्। सप्तला चर्मकषा, नीलवृक्षेत्येके। शङ्खिनी श्वेतवङ्गा। ढोलकलम्बीत्यन्ये श्वेता श्वेतापराजिता कटभी वा। राजवृक्षः शोणालुफलम्। तिल्वकोऽत्र सावरलोध्रः। कम्पिल्ली गुण्डारोचनी। हेमक्षीरी कङ्गुष्ठ। अन्यतमेनेति सर्पिरादिकल्पमध्ये चैकतमेन कल्पेन प्रयुक्त इति शेषः॥ ३। ४॥

त्रिवृदित्यादौ।—द्विचतुःपञ्चभागिका इति यथाक्रमम्। गुड़तुल्या इति समुदितचूर्णतुल्यो गुड़भागः॥ ५॥

हरीतक्यादौ।—पीलुनीति मूर्वा, पीलूनी इति पाठान्तरे पीलु श्रौत्तरापथिकफलम्, इदमेव युक्तं संसकत्वात्॥ ६॥

हिङ्ग्वित्यादि।—सुश्रुतस्य।—सर्जिः सर्जिक्षारः। द्विरुत्तरमिति यथोत्तर द्विगुणम्॥ ७॥

प्राग्भोजने च समधु विड़ालपदकं लिहेत् प्राज्ञः॥
एतद् गाढ़पुरीषे पित्ते कफे च विनियोज्यम्।
सुस्वादुर्नृपयोग्योऽयं चूर्णो नाराचको नाम्ना॥ ८॥
रसोनं मद्यसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितम्।
गुल्मोदावर्त्तशूलघ्नं दीपनं बलवर्द्धनम्॥ ९॥
हिङ्गुमाक्षिकसिन्धूत्थैः पक्का वर्त्तिं सुनिर्म्मिताम्।
घृताभ्यक्तां गुदे दद्यादुदावर्त्तविनाशिनीम्॥ १०॥
मदनं पिप्पली कुष्ठं वचा गौराश्च सर्षपाः।
गुड़क्षारसमायुक्ता फलवर्त्तिः प्रशस्यते॥ ११॥
आगारधूमसिन्धूत्थ-तैलयुक्ताम्लमूलकम्।
क्षुण्णं निर्गुण्डिपत्रं वा खिन्ने पायौ क्षिपेद्बुधः॥ १२॥
सौवर्च्चलाढ्यां मदिरां मूत्रे त्वभिहते पिबेत्।
एलां वाप्यथ मद्येन क्षीरवारि पिबेच्च सः॥ १३॥

नाराचचूर्णे विहङ्गसममिति विहङ्गचूर्णस्यापि पलम्। उपकुल्या पिप्पली। प्राग्भोजन इति भोजनपरिणामे भोजनसन्निधाने वा॥ ८॥

रसोनमित्यादि।—यद्यप्ययं योग शूलाधिकारे पूर्वमुक्त एव तथाप्युदावर्त्तेऽपि विहितत्वात पुनरप्यत्र लिखित॥ ९॥

हिङ्गु माक्षिकेत्यादि।—हिङ्गु माषा ४, सैन्धवाकर्ष १, मधु पल १, एव मत्र हाग्दृग्टहीत्वा पक्का च फलवर्त्तिं कुर्य्यात्। हिङ्गुसैन्धवे समे वर्त्तिकरणोचित मधु देयमित्यन्ये। गुड़पाकवदस्य पाक', तदवस्थायामेव वर्त्तिः कर्त्तव्या। ततो घृतेनाभ्यज्य गुदे क्षिपेत्॥ १०॥

मदनमित्यादौ।—गुडो मिलितचूर्णसमः। गुडञ्च मनाक्जलं दत्त्वा, पक्का च वर्त्तिं कुर्य्यादित्यर्थः॥ ११॥

आगारधूमेत्यादि।—आगारधूमोऽलम्भूमः, अम्लमूलकं काञ्जिकमूलकं अङ्गुष्ठनिभम अलम्भूमसैन्धवचूर्णतैले मर्दयित्वा खिन्ने गुदे प्रवेशयम्। निर्गुण्डी सिन्धुवारः। तत्पत्रमपि चूर्णीकृत्य आगारधूमादिभक्षितं खिन्ने गुदे निक्षेप्यम्॥ १२॥

सौवर्च्चलेत्यादि। मूत्रस्य। अत्र सिन्धूत्थकरणाद्यास्तु शाखिका चेत्यादि·

दुःस्पर्शास्वरसं वापि कषायं ककुभस्य वा ।
एर्वारुवीजं तोयेन पिबेद्वा लवणीकृतम् ॥ १४ ॥
पञ्चमूलीशृतं चीरं द्राक्षारसमथापि वा ।
सर्वथैवोपयुञ्जीत मूत्रकृच्छ्राश्मरीविधिम् ॥ १५ ॥
स्नेहस्वेदैरुदावर्त्तं जृम्भजं समुपाचरेत् ॥ १६ ॥
अश्रुमोक्षोऽश्रुजे कार्य्यः स्वप्नो मद्यं प्रियाः कथाः ॥१७॥
क्षवजे क्षवपत्रेण घ्राणस्थेनानयेत् क्षवम् ।
तथोर्द्ध्वजत्रुगोऽभ्यङ्गः स्वेदो धूमः सलावणः ॥
हितं वातघ्नमाद्यञ्च घृतञ्चौत्तरभक्तिकम् ॥ १८ ॥
उद्गारजे क्रमोपेतं स्नैहिकं धूममाचरेत् ॥ १९ ॥
छर्द्द्याघातं यथादोषं नस्यस्नेहादिभिर्जयेत् ।

---

पदेन संगृहीतत्वान सौवर्चलस्य माषकचतुष्टयम् ; मदिरा चाहारद्रव्यत्वात् प्रचुरा ग्राह्या । व्यवहारस्तु मदिरापलद्वयेन । एला वाप्यथ मद्येनेति एलाचूर्णस्याष्टौ माषकाः ; मद्यस्य च पलद्वयमित्याहुः । चीरवारीति समक्षीरेण मिश्रितं वारीत्यर्थः ॥ १३ ॥

दुःस्पर्शेत्यादि ।—सुश्रुतस्य । दुःस्पर्शा दुरालभा ; दुःस्पर्शास्वरसमिति पाठे दुःस्पर्शा कण्टकारीत्यन्ये । ककुभोऽर्जुनः । एर्वारुः पोषभवा कर्कटीति डल्लणः । अलवणीकृतमिति सैन्धवयोगादीषल्लवणीकृतमिति । एतच्च एर्वारुवीजमित्यनेनैव सम्बध्यते, न तु पूर्वेण ॥ १४ ॥

पञ्चमूलीति ।—पञ्चमूली स्वल्पा, समानतन्त्रभोजनसंवादात् । यथा,—"लघुना पञ्चमूलेन शृतं क्षीरं पिबेन्नरः" इति । श्रीकण्ठदत्तस्तु तृणपञ्चमूलीत्याह । सर्वथैव कार्त्स्न्येन ; सुश्रुतेऽपि निरवशेषित इत्युक्तम् ॥ १५ ॥

स्नेहेत्यादौ ।—जृम्भजमिति जृम्भावेगविघातजम् ; एवमुत्तरत्रापि । अश्रुमोक्षोऽश्रुनिःसरणम्, तच्च तीक्ष्णाञ्जनादिविधिना । क्षवपत्रेणेति क्षवियापत्रेण । ऊर्द्ध्वजत्रुगोऽभ्यङ्ग इति ऊर्द्ध्वजत्रुदेशगतोऽभ्यङ्गः कार्य्यः । आद्यं भक्ष्यम् । क्रमोपेतमिति स्नैहिकधूमपानोक्तक्रमयुक्तम् ॥ १६—१९ ॥

भुक्त्वा प्रच्छर्दनं धूमो लङ्घनं रक्तमोक्षणम् ।
रूक्षान्नपानं व्यायामो विरेकश्चात्र शस्यते ॥ २० ॥
वस्तिशुद्धिकरावापं चतुर्गुणजलं पयः ।
आवारिनाशात् क्वथितं पीतवन्तं प्रकामतः ॥
रमयेयुः प्रिया नार्यः शुक्रोदावर्त्तिनं नरम् ।
तत्राभ्यङ्गावगाहाश्च मदिराश्चरणायुधाः ।
शालिः पयोनिरूहाश्च हितं मैथुनमेव च ॥ २१ ॥
क्षुद्विघाते हितं स्निग्धमुष्णमल्पञ्च भोजनम् ॥ २२ ॥
तृष्णाघाते पिबेन्मन्थं यवागूं वापि शीतलाम् ॥ २३ ॥
रसेनाद्यात् सुविश्रान्तः श्रमश्वासातुरो नरः ॥ २४ ॥
निद्राघाते पिबेत् क्षीरं स्वप्नः संवाहनानि च ॥ २५ ॥

इत्युदावर्त्तचिकित्सा ।

---

कर्य्याघातमित्यादि—सुश्रुतस्य कर्य्याघातमिति कर्य्या वेगविघातजं रोगं कुष्ठविसर्पादिकम्, कार्य्यकारणयोरभेदोपचारात् ; एवं क्षुद्विघात इत्यादावपि व्याख्येयम् । यथादोषमिति यस्यैवानुदूषको दोषश्छर्दिविघातजरोगे जातस्तद्विपरीतैर्नस्यादिभिर्जयेदित्यर्थः ॥ २० ॥

वस्तिशुद्धिकरावापमित्यादि ।—वस्तिशुद्धिकराणीह तृणपञ्चमूलवीरतरादीनि, आवाप इति क्षीरसाधनार्थं कल्कः स यत्र तत्तथा । रमयेयुः मैथुने योजयेयुः । अवगाहो वातपित्तहरद्रव्यक्वाथ कोष्णे बोध्यः । चरणायुधाः कुक्कुटाः । निरूहाश्च निरूह उत्तरवस्तिर्वास्तिश्चेति चकारात् ॥ २१—२३ ॥

सुविश्रान्त इति विरतक्रियः । निद्राघात इत्यादौ ।—क्षीरमिह माहिषं, निद्राकरत्वादित्याहुः । अन्ये तु प्रधानकल्पनया गोक्षीरम्, अतएव तन्त्रान्तरे—"निद्राघाते पिबेत् क्षीरं गोः सुप्यादथ वा नरः" इति ॥ २४ ॥ २५ ॥

इत्युदावर्त्तचिकित्साविवृतिः ।

## अथानाहचिकित्सा ।

उदावर्त्तक्रियानाहे सामे लङ्घनपाचनम् ॥ १ ॥

हरुत्तरा हिङ्गु वचा सकुष्ठा सुवर्चिका चेति विड़ङ्गचूर्णम् ।
सुखाम्बु नानाहविसूचिकार्त्तिहृद्रोगगुल्मोर्द्ध समीरणघ्नम् ॥२॥
चाभयाचित्रकयावशूकान् सपिप्पलीकातिविषान् सकुष्ठान् ।
णाम्बु नानाहविमूढ़वातान् पीत्वा जयेदाशु हितौदनाशो ॥३॥

त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भावयेत् ।
वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ४ ॥

लञ्च मूलञ्च विरेचनोक्तं हिङ्ग्वर्कमूलं दशमूलमग्रम् ।
कुचित्रकौ चैव पुनर्नवा च तुल्यानि सर्वैलवणानि पञ्च ॥
हैः समूत्रैः सह जर्जराणि शरावसन्धौ विपचेत् सुलिप्ते ।
कं सुपिष्टं लवणं तदन्नैः पानैस्तथानाहरुजाघ्नमग्रम् ॥५॥

राठधूमविडव्योषगुड़मूत्रैर्विपाचिता ।
गुदेऽङ्गुष्ठसमा वर्त्तिर्विधेयानाहशूलनुत् ॥ ६ ॥

वर्त्तिस्त्रिकटुकसैन्धवसर्षपगृहधूमकुष्ठमदनफलैः ।

---

आनाहचिकित्सामाह उदावर्त्तेत्यादि ।—हिरुत्तरा इत्यादि ।—यथोत्तरं द्विगुणा
र्थः । सुखाम्बु नेत्यनन्तर पीतमिति शेषः ॥ १—३ ॥

त्रिवृदित्यादि ।—त्रिवृदित्यरुणमूला त्रिवृत्, श्यामा श्याममूला त्रिवृत् । वटि
माषकद्वयेन व्यवहृता । योगोऽयमतिक्रूरकोष्ठे ॥ ४ ॥

फलञ्चेत्यादौ ।—विरेचनोक्तमिति दीर्घञ्जीवितीयेऽपामार्गतण्डुलीये वा विरेचन
ल्पे वा विरेचनकर्मणि यदुक्तम् । हिङ्गुस्थाने हिंस्रेति पाठान्तरम् । शराव-
न्धाविति अन्तःस्थभेषजस्थालीशरावसन्धावित्यर्थः । विपचेदिति दहेत् । पक्व-
ति दग्धम् । अग्र्यमिति श्रेष्ठम् ॥ ५ ॥

राठेत्यादि ।— राठो मदनफलं; धूमो गृहधूमः अवलम्बूम इति यावत् ।
वता गुड़ेन मूत्रेण च पाकाद्वर्त्तिं कर्त्तुं शक्यते तावदुभयं देयमिति ॥ ६ ॥

मधुनि गुडे वा पक्वा पायौरिता चाङ्गुष्ठपरिमाणा।
वर्त्तिरियं दृष्टफला शनैः शनैः प्रणिहिता घृताभ्यक्ता।
आनाहोदावर्त्तप्रशमनी जठरगुल्मविनाशिनी॥ ७॥

शुष्कमूलकाद्यं घृतम्—

मूलकं शुष्कमार्द्रञ्च वर्षाभूमूलपञ्चकम्।
आरेवतफलञ्चापि पिष्ट्वा तेन पचेद् घृतम्।
तत् पीयमानं शमयेदुदावर्त्तमसंशयम्॥ ८॥

स्थिराद्यं घृतम्—

स्थिरादिवर्गस्य पुनर्नवायाः
सम्पाकपूतीककरञ्जयोश्च।
सिद्धः कषायो द्विपलांशिकानाम्
प्रस्थो घृतात् स्यात् प्रतिरुद्धवाते॥ ९॥

इत्यानाहचिकित्सा।

---

वर्त्तिरित्यादि।—मिलित्वा त्रिकट्वादीनां कर्ष १, मधुपल १, गुडकर्ष। इत्येके। युक्त्या त्रिकट्वादिकं गृहीत्वा वर्त्तिः कर्त्तव्येत्यन्ये। गुडे वेति वाशब्दो ऽपि पूर्वयोगापेक्षया समुच्चये वा द्रष्टव्यः॥ ७॥

मूलकमित्यादि।—शुष्क तस्य। शुष्कमिति मूलकविशेषणम्। आर्द्रकमित्यार्द्रकन्दः। चक्रनस्तु शुष्कमिति मूलकार्द्रयोर्विशेषणमाह। मूलपञ्चकमिति बिल्वादि पञ्चमूलं, कफवातकृतविबन्धहन्तृत्वादिति जेज्जड़ः; स्वल्पपञ्चमूलमिति भानुमती आरेवतफलं स्वर्णालु फलम्। अकल्कमिदं घृतम्॥ ८॥

स्थिरादीत्यादि।—स्थिरादिवर्गस्य शालपर्ण्यादिपञ्चमूलस्य। सम्पाकः शोणाफलम्। द्विवचनबलात् पूतिकेति करञ्जफलविशेषणं, तेन नाटाकरञ्ज इत्यर्थः॥९॥

इत्यानाहचिकित्साविवृतिः।

## अथ गुल्मचिकित्सा ।

लघ्वन्नं दीपनं स्निग्धमुष्णं वातानुलोमनम् ।
बृंहणं यद्भवेत् सर्वं तद्धितं सर्वगुल्मिनाम् ॥ १ ॥
स्निग्धस्य भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये ।
स्रोतसां मार्दवं कृत्वा जित्वा मारुतमुल्वणम् ।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्ममपोहति ॥ २ ॥
कुम्भीपिण्डेष्टकास्वेदान् कारयेत् कुशलो भिषक् ।
उपनाहाश्च कर्त्तव्याः सुखोष्णाः शाल्वणादयः ॥ ३ ॥
स्थानावसेको रक्तस्य बाहुमध्ये शिराव्यधः ।
स्वेदोऽनुलोमनञ्चैव प्रशस्तं सर्वगुल्मिनाम् ॥ ४ ॥
पेया वातहरैः सिद्धा कौलत्था धन्वजा रसाः ।
खडाः सपञ्चमूलाश्च गुल्मिनां भोजने हिताः ॥ ५ ॥

वातगुल्मचिकित्सा—

मातुलुङ्गरसो हिङ्गु दाड़िमं विड़सैन्धवम् ।

---

गुल्मेऽप्यानाहो भवतीत्यानाहानन्तर गुल्मः ॥ १ ॥ २ ॥

कुम्भीत्यादि ।—सुश्रुतस्य । वातहरक्वाथादिभिः पूर्णाभिः अन्तर्वाष्पाभिः कुम्भीभिः स्थलीभिः स्वेदनं ; तथा उत्स्विन्नमाषादिपिण्डकैर्वस्त्रबद्धैः स्वेदः पिण्डस्वेदः, इष्टकया च तप्तया वातहरक्वाथसिक्तया स्वेदः इष्टकास्वेदः । शाल्वणादय इत्यादिशब्देन वेशवारादिपरिग्रहः ॥ ३ ॥

स्थानावसेको रक्तस्येति ।—स्थिरगुल्मे गुल्मस्थानाद्रक्तावसेकः । बाहुमध्ये शिराव्यध इति बाहुमध्ये सन्धिरचनात् स्वल्पशिरावेध्या, न तु मध्या न वा बृहती, मर्मत्वात् । शिराव्यधश्च यस्मिन् पार्श्वे गुल्मस्तत्पार्श्वस्थबाहौ । अयञ्च विधिश्चिकित्सया गुल्मस्याप्रशमने स्वेदादिना च शोणितदुष्टौ सत्यां बोध्यः । स्वेदनादिकञ्चार्द्धं पद्यं सम्पूर्णं श्लोकानुरोधादेवोक्तम् ॥ ४ ॥

आहारविधिमाह पेयेत्यादि ।—वातहरैर्दशमूलादिभिः । पञ्चमूलञ्चेह बिल्वादि पञ्चमूलम्, उष्णवीर्य्यतया विशेषेण वातहरत्वात् ॥ ५ ॥

सुरामण्डेन पातव्यं वातगुल्मरुजापहम् ॥ ६ ॥

नागरार्द्धपलं पिष्टं द्वे पले लुञ्चितस्य च।
तिलस्यैकं गुडपलं क्षीरेणोष्णेन पाययेत्।
वातगुल्ममुदावर्त्तं योनिशूलञ्च नाशयेत् ॥ ७ ॥

पिबेदेरण्डतैलं वा वारुणीमण्डमिश्रितम्।
तदेव तैलं पयसा वातगुल्मी पिबेन्नरः ॥ ८ ॥

साधयेच्छुष्कशुद्धस्य रसोनस्य चतुःपलम्।
क्षीरोदकेऽष्टगुणिते क्षीरशेषञ्च पाययेत् ॥
वातगुल्ममुदावर्त्तं गृध्रसीं विषमज्वरम्।
हृद्रोगं विद्रधिं शोषं नाशयत्याशु तत् पयः ॥
एवन्तु साधिते क्षीरे स्तोकमप्यत्र दीयते ॥ ९ ॥

---

मातुलुङ्गेत्यादि।—मातुलुङ्गरसादिकं प्रक्षिप्य सुरामण्डः पेयः। सुरामण्ड आहारद्रव्यतया प्रभूतो ग्राह्यः, न तु तुल्यचतुर्गुणः, एवमन्यत्रापि सुरया भेषजपाने ज्ञेयम् ॥ ६ ॥

नागरेत्यादौ।—लुञ्चितस्येति निस्तुषीकृतस्येति। अत्र च भूरिमानौषधोपयोगी व्याधिमहत्त्वेनैव भवतीति ज्ञेयम्। वाग्भटे पुनरेतदर्द्धमानेनायं योगः पठ्यते। यथा—"शुण्ठ्याः कर्षं गुडस्य द्वौ धौतात् कृष्णतिलात् पलम्। खादन्नेकत्र सञ्चूर्ण्य कोष्णक्षीरानुपो जयेत्। वातहृद्रोगगुल्मार्शोयोनिशूलशकृद्ग्रहान्" इति। अन्ये तु नागरार्द्धपलमिति पुरुषस्य बलाबलं बुद्ध्वा, हीनपुरुषे तु तृतीयभागेन कर्त्तव्यमित्याहुः ॥ ७ ॥

पिबेदित्यादि।—योगद्वयम्। पूर्वयोगः कफानुबन्धवाते, द्वितीयस्तु पित्तानुगे। उक्तं हि चरके—"पूर्वं कफानुबन्धे च हितं पित्तानुगे परम्" इति, पूर्वमिति वारुणीमण्डयुक्तमेरण्डतैलम्, परमिति पयःसंयुक्तमेरण्डतैलम् ॥ ८ ॥

साधयेदित्यादि।—निस्तुषतया शुद्धः पूर्णवीर्यतया च शुष्क इत्यर्थः। क्षीरोदकेऽष्टगुणित इति क्षीरोदकयोश्च समासकरणान्मिलित्वैवाष्टगुणत्वं ज्ञेयम्, भागतुल्यञ्च समभागत्वमिति। तेन रसोनचतुष्पलापेक्षया क्षीरनीरयोः प्रत्येकं चातुर्गुण्यान्मिलित्वा द्वात्रिंशत्पलानि स्युः। अत एव द्रवत्वेऽपि न द्वैगुण्यम्, रसो-

सर्जिकाकुष्ठसहितः क्षारः केतकिजोऽपि वा।
तैलेन पीतः शमयेद्गुल्मं पवनसम्भवम्॥ १०॥
वातगुल्मे कफे वृद्धे वाम्तिश्चूर्णादिरिष्यते॥ ११॥

पित्तगुल्मचिकित्सा।

पित्ते तु रेचनं स्निग्धं रक्ते रक्तस्य मोक्षणम्।
स्निग्धोष्णेनोदिते गुल्मे पैत्तिके स्रंसनं हितम्॥ १२॥
रूक्षोष्णेन तु सम्भूते सर्पिः प्रशमनं परम्।
काकोल्यादिमहातिक्तवासाद्यैः पित्तगुल्मिनम्।
स्नेहितं स्रंसयेत् पश्चाद् योजयेद्वस्तिकर्मणा॥ १३॥

---

पर्नाल्लेनाष्टगुणत्वविधानात्। जलक्षयादवशिष्टं क्षीरम्। यद्यपि षोडशपलत्वेन बहु भवति तथापि दीप्ताग्नयो महाकाया इत्यादि वचनाद्गुल्मस्य बहुमात्राभिहित तया षोडशपलक्षीरपानमपि न दोषावहमिति; किंवा अग्न्युपघातभयात् स्तोक पेयम्, अत एवोक्तम् एवन्तु साधित इत्यादिना। दुग्धरसोनयोश्चात्र न योगविरुद्धत्वमाशङ्कनीयम्, व्याधिप्रभावान्महर्षिवचनाच्चेत्यर्थ॥ ९॥

सर्जिकेत्यादि।—सुश्रुतस्य। सर्जिकाया माषकद्वयम्, एवं कुष्ठस्यापि, केतकीजटाक्षारस्य माषकचतुष्टयमिति निश्चलः। वाशब्दः पूर्वक्षारयोगापेक्षया। डल्वनस्तु क्षारो यवक्षारः। अत्र सर्जिकाकुष्ठसहितो यवक्षारस्तैलेनेत्येको योग। केतकीजोऽपि वेत्यत्र क्षार इति सम्बध्यते, तेन केतकीजोऽपि क्षारस्तैलेनेति द्वितीयो योग। गौडास्तु सर्जिकाकुष्ठसहित केतकीजक्षारस्तैलेनैकमेव योगमाहुः। तैलेनेति तिलतैलेन। अन्ये तु यौगिकत्वादेरण्डतैलमाहुः॥ १०॥

अवस्थाया क्रियासूत्रमाह वातगुल्म इत्यादि।—गुल्मे यद्यपि "न वामयेत" इत्यादिवचनात् 'वमनं निषिद्धं' तथाप्यवस्थाविशेषेऽप्यपवादरूपतया तत्र दृष्यते। चूर्णादीत्यादिशब्दात् फलवर्त्तिगुडिकादयश्च। स्निग्धं विरेचनमित्येरण्डतैलादिना॥ ११। १२॥

रूक्षोष्णेन तु सम्भूत इत्यत्रापि पैत्तिक इति शेष। काकोल्यादिमहातिक्तवासाद्यैरित्यनन्तरं घृतैरिति शेषः। काकोल्यादिगणक्वाथकल्कसाधित घृत काकोल्यादिघृतम्, महातिक्तघृतञ्च कुष्ठोक्तम, वासाद्यघृतञ्च रक्तपित्तोक्तम्। स स्रंसयेदिति विरेचयेत्। वस्तिकर्मणेत्यनुवासन-निरूहाभ्याम्॥ १३॥

स्निग्धोष्णजे पित्तगुल्मे काम्पिल्लं मधुना लिहेत्।
रेचनार्थी रसं वापि द्राक्षायाः सगुड़ं पिबेत्॥ १४॥
दाहशूलानिलक्षोभस्वप्ननाशारुचिज्वरैः।
विदह्यमानं जानीयाद् गुल्मं तमुपनाहयेत्॥ १५॥
पक्वे तु व्रणवत् कार्य्यं व्यधशोधनरोपणम्।
स्वयमूर्द्ध्वमधो वापि स चोद्दोषः प्रपद्यते॥
द्वादशाहमुपेक्षेत रक्षन्नन्यानुपद्रवान्।
परन्तु शोधनं सर्पिः शुद्धे समधु तिक्तकम्॥ १६॥

---

स्निग्धोष्णज इत्यादौ।—काम्पिल्लं गुण्डारोचनी। विदह्यमानमिति पच्यमानम्। उपनाहयेदिति व्रणशोथोक्तपाचनपिण्डैः प्रलेपयेत्। ननु सुश्रुते गुल्मस्य पाको निषिद्धः यथा "स यस्मादात्मनि चयं गच्छत्यप्स्विव बुद्बुदः। अन्तःसरति यस्माच्च न पाकमुपयात्यतः।" इति। आत्मनीति स्वावयवे गुल्मारम्भकदोषरूपे, न तु मांसरक्तादौ। चयमिति वृद्धिम्। अप्स्विव बुद्बुद इति यथा जलावरुद्धो वायुरेव जले बुद्बुदरूपो भवति, तथा कफपित्ताभ्यामवरुद्धो वायुरेव कुण्डलीभूतो गुल्म इत्यर्थः। अन्तःसरति यस्माच्च इत्यनेनापि रक्तादिरहितकोष्ठविवरमात्राश्रयत्वमस्य दर्शितम्। एतेन दोषमात्राश्रयित्वेन गुल्मे मांसशोणितयोः पाकाश्रययोरभावादपाकित्वमुक्तम्। तत्राहुः, गुल्मो यद्यपि दोषमात्राश्रय एव, तथापि यदा कारणवशादाश्रयं मांसादिकमासाद्य कृतवास्तुपरिग्रहो भवति वातोपशमनार्थं कृतस्वेदादिभिर्वा दुष्टं रक्तं सहकारि लभते, तदा गुल्मस्यापि पाकः। कथं प्रलेपणीय? केवलं चरके गुल्म इत्युच्यते सुश्रुते तु विद्रधिसंज्ञयेति संज्ञामात्रे विवादः। अकृतवास्तुपरिग्रहस्तु दोषमात्राश्रयत्वान्न पच्यत इति चरकेणाप्यनुमत एवेति। अन्ये तु अपाकार्थमुक्तहेतुद्वयस्य वातिक एव संभूतत्वाद्वातिक एव गुल्मो न पच्यते अस्थिरत्वाद्वातस्वभावाच्च अन्ये तु पठन्ति भेदः पुनरयं विद्रधिगुल्मयोः; विद्रधिरचिरकालपाकश्चिरपाकश्च गुल्म इति। अतएव माधवकरोऽप्याह "प्रायो न पच्यते गुल्मो वातजस्तु विशेषतः। रक्तपित्तादिबहुत्वात् पच्यतेऽन्यो यदृच्छया" इति। स्वयमित्यादि स्वयमेवान्तर्भिन्ने सति दोषः पूयरूप ऊर्द्ध्वमधो वा गच्छति, तदा द्वादशाहमुपेक्षेत, न शोधनरोपणादिकं कुर्य्यात्। उपद्रवान् ज्वरादीन्। उपद्रवेभ्यो ज्वरादिभ्यश्चातुरं रक्षेदित्यर्थः। परन्तु शोधनं सर्पिरिति द्वादशाहात् परं शोधन-

रोहिणी कटुका निम्बं मधुकं त्रिफलात्वचः।
कर्षांशास्त्रायमाणा च पटोलत्रिवृतापले॥
द्विपलञ्च मसूराणां साध्यमष्टगुणे जले।
घृताच्छेषं घृतसमं सर्पिषश्च चतुःपलम्॥
पिबेत् संमूर्च्छितं तेन गुल्मः शाम्यति पैत्तिकः।
ज्वरस्तृष्णा च शूलञ्च भ्रमो मूर्च्छाऽरतिस्तथा॥ १७॥
दीप्ताग्नयो महाकायाः स्नेहसात्म्या महाबलाः।
गुल्मिनः सर्पदष्टाश्च विसर्पोपहताश्च ये।
ज्येष्ठां मात्रां पिबेयुस्ते पलान्यष्टौ विशेषतः॥ १८॥

कफगुल्मचिकित्सा।

लङ्घनोल्लेखने स्वेदे कृतेऽग्नौ सम्प्रधुक्षिते।
घृतं सक्षारकटुकं पातव्यं कफगुल्मिना॥
मन्दोऽग्निर्वेदना मन्दा गुरुस्तिमितकोष्ठता।
सोत्क्लेशा चारुचिर्यस्य स गुल्मी वमनोपगः॥ १९॥
मन्देऽग्नावनिले मूढ़े ज्ञात्वा सस्नेहमाशयम्।

---

द्रव्यसाधितं घृत पेयम। शुद्धे समधुतिक्तकमिति शुद्धे सति तिक्तद्रव्यसाधित घृतं समधु मधुसहित देय रोपणार्थमिति शेष.॥ १४—१६॥

रोहिणीत्यादि।—रोहिणी कटुकेति कटुरोहिणी। त्रिफलात्वच इति निरस्थि त्रिफलाः। एत त्रायमाणान्ताः प्रत्येकं कर्षांशा.। पटोलत्रिवृतापले इति द्विवचनात प्रत्येक पलमेकम्। अष्टगुणे इति घृतादष्टगुण इति योज्यम्, घृत चतुःपलमेवोक्तम्। तेन घृतेन सम्मूर्च्छितमेकीकृतम्, एतेन क्वाथघृताभ्या मिलित्वाष्टौ पलानि। इयञ्च मात्रा व्याधिमहिम्ना न दोषावहेत्येतदेवाह दीप्ताग्नय इत्यादि॥ १७। १८॥

लङ्घनेत्यादौ।—घृत सक्षारकटुकमिति यवक्षारत्रिकटुकल्कसाधितमित्यर्थः। वमनोपग इति वमनेनोपगम्यते उपचर्य्यते य स वमनोपग। पूर्वं वातकगुल्म एवावस्थायां वमनमुक्तम्, इह तु कफगुल्म इत्येवेति न पौनरुक्त्यम्॥ १९॥

गुड़िकाचूर्णनिर्य्यूहाः प्रयोज्याः कफगुल्मिनाम् ।
क्षारारिष्टगणश्चापि दाहः शेषे विधीयते ॥ २० ॥
पञ्चमूलीशृतं तोयं पुराणं वारुणीरसम् ।
कफगुल्मी पिबेत् काले जीर्णं माध्वीकमेव वा ॥ २१ ॥
तिलैरण्डातसीबीजसर्षपैः परिलिप्य च ।
श्लेष्मगुल्ममयःपात्रैः सुखोष्णैः स्वेदयेद्भिषक् ॥ २२ ॥
यमानीचूर्णितं तक्रं विड़ेन लवणीकृतम् ।
पिबेत् सन्दीपनं वातमूत्रवर्च्चोऽनुलोमनम् ॥ २३ ॥
व्यामिश्रदोषे व्यामिश्रः सर्व एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ।
यथोक्तेन सदा कुर्य्याद् भिषक् तत्र समाहितः ॥ २४ ॥
वचाविड़ाभयाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशिकाः क्रमात् ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।

---

मृद् इत्याहते । गुडिकादय इहैव हिङ्ग्वादिप्रभृतयो वक्तव्याः । क्षारारिष्टगण इति प्रतिसारणीयक्षारस्यानुशस्त्रतया शस्त्रतन्त्र एव तदभिधानं ज्ञेयम् । पानीयक्षाराश्चात्रापि ग्रहण्यध्यायोक्ता अत्रानुसर्त्तव्याः । अरिष्टाश्चरक ग्रहण्यर्शश्चिकित्सितोक्ता ज्ञेयाः । उक्तं हि—"यत एव ग्रहणीदोषे क्षारास्ते कफगुल्मिनाम् । अरिष्टयोगाः सिद्धाश्च ग्रहण्यर्शश्चिकित्सिते" इति । दाहस्तु शरलोहादिभिः । उक्तं हि—"तस्य दाहो हृते रक्ते शरलोहादिभिर्हितः" इति । दाहः शेष इति दाहस्य दारुणत्वात् क्रियान्तरासिद्धौ शेष एव कर्त्तव्यता युक्ता ॥ २० ॥

पञ्चमूलीत्यादि ।—पञ्चमूली महती कफप्रत्यनीकत्वात् । माध्वीकं मधु ॥ २१ ॥

स्वेदमाह तिलेत्यादि । गुल्मामयमिति गुल्मस्थानम् । त्रिदोषघ्नो विधिरिति वाताद्युक्तयोगा एव एकीकृत्य योज्याः, प्रकृतिसमसमवेतत्वात्, विकृतिविषमसमवेतस्य तु चरकेऽसाध्यतोक्तेः ॥ २२—२४ ॥

शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥ २५ ॥
यमानीहिङ्गुसिन्धूत्थक्षारसौवर्च्चलाभयाः।
सुरामण्डेन पातव्या गुल्मशूलनिसूदनाः ॥ २६ ।

हिङ्ग्वाद्यं चूर्णम्—

हिङ्गु त्रिकटुकं पाठां हवुषामभयां शटीम्।
अजमोदाजगन्धे च तिन्तिड़ीकाम्लवेतसौ ॥
दाड़िमं पौष्करं धान्यमजाजीं चित्रकं वचाम्।
द्वौ क्षारौ लवणे द्वे च चव्यञ्चैकत्र चूर्णयेत् ॥
चूर्णमेतत् प्रयोक्तव्यमन्नपानेष्वनत्ययम्।
प्राग्भुक्तमथवा पेयं मद्येनोष्णोदकेन वा ॥
पार्श्वहृद्वस्तिशूलेषु गुल्मे वातकफात्मके।
आनाहे मूत्रकृच्छ्रे च गुदयोनिरुजासु च ॥
ग्रहण्यर्शोविकारे च प्लीह्नि पाण्ड्वामयेऽरुचौ।
उरोविबन्धे हिक्कायां कासे श्वासे गलग्रहे ॥
भावितं मातुलुङ्गस्य चूर्णमेतद्रसेन वा।
बहुशो गुड़िकाः कार्य्याः कार्म्मुकाः स्युस्ततोऽधिकम् ॥२७॥

पूतीकपत्रगजचिर्भिटिचव्यवह्नि-
व्योषञ्च संस्तरचितं लवणोपधानम्।

---

वचेत्यादौ।—अभया हरीतकी, अग्निश्चित्रक ; दीप्यकी यमानी। आदि-शब्दादुष्णोदकादीनां ग्रहणम् ॥ २५ ॥

यमानीत्यादौ।—क्षारो यवक्षारः। योगोऽयमुष्णाम्बुना प्रचरति ॥ २६ ॥

हिङ्ग्वादिचूर्णे अजमोदा यमानी ; अजगन्धा श्वेतयमानी, तिन्तिड़ीक महा-र्द्रक, द्वौ क्षारौ यवक्षारसर्जिकाक्षारौ, लवणे द्वे सैन्धव सौवर्च्चले। प्राग्भुक्त-मित भोजनस्य प्राक् परिणामे, भोजनाव्यवहितपूर्वकाले वा। प्रकारान्तरमाह भावितमित्यादि। बहुश इति सप्ताहं सप्ताहं भावनाविधिरित्युक्तत्वात्। मातु-लुङ्गरसेन सप्तदिनान्यातपे भाव्यं, तदनु चाष्टमाषकमिता वटिका कार्य्या। एकां खादित्वा तप्तजलाद्यनुपेयमिति। कार्म्मुकाः कर्मकारकाः ॥ २७ ॥

दग्ध्वा विचूर्ण्य दधिमस्तुयुतं प्रयोज्यम्
गुल्मोदरश्वयथुपाण्डुगदोद्भवेषु ॥ २८ ॥
हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकीम्।
श्यामा विडं सैन्धवञ्च यवक्षारं महौषधम्॥
यवक्वाथोदकेनैतद् घृतभृष्टन्तु पाययेत्।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः॥ २९ ॥

वचाद्यं चूर्णम्—

वचाहरीतकीहिङ्गुसैन्धवं साम्लवेतसम्।
यवक्षारं यमानीञ्च पिबेदुष्णेन वारिणा॥
एतद्धि गुल्मनिचयं सशूलं सपरिग्रहम्।
भिनत्ति सप्तरात्रेण वह्नेर्वृद्धिं करोति च॥ ३० ॥

---

पूतीकपत्रेत्यादि। वाग्भटस्य—पूतीकी नाटाकरञ्ज, गजचिर्भिटी गोरक्षकर्कटी, वह्निश्चित्रक, सस्नर्चितमिति सस्नररूपतया विहितम्। लवणोपधानं सैन्धवगर्भम्। सैन्धवञ्च पूतीकपत्रादिकसम ग्राह्यम। सौश्रुतपक्वलवणविधौ टीकाकृद्भिरेवं व्याख्यातत्वात्। पूतीकपत्रादिसस्तरे सैन्धव दत्त्वा तदुपरि पुन पूतीकपत्रादिक विभज्य चान्तर्धूम दग्धव्यम्॥ २८ ॥

हिङ्ग्वित्यादौ।—तुम्बुरु स्वनामख्यात, श्यामा त्रिवृत। हिङ्गुप्रभृतीनां चूर्णं प्रभूत कृत्वा स्थाप्य, ततो योग्या मात्रा गृहीत्वा यवक्वाथेन प्लावयित्वा घृते परिभृज्य पाययदित्यर्थः। यवक्वाथोदकेन यवक्वाथेनोष्णोदकेनेत्यर्थः। अस्मिन् प्रयोगे हि वैद्यप्रसारके उष्णोदकमेरण्डतैलञ्चाधिक पठित, तद्यथा,—"उष्णोदकेन पातव्यमेतत सरुवु(?)त्तकम्" इति। अन्ये तु उदकशब्दोऽय द्रववचन, तेन यवक्वाथरूपद्रवेणेत्याह। यवक्षारोदकेनेति पाठान्तरमसङ्गतम्, वृद्धवाग्भटे यवक्वाथस्योक्तत्वात। भिद्यते विलीयते, न तु पक्व सन् भेद गच्छति। सपरिग्रह इति वास्तुपरिग्रह सहित सोपद्रव इति वा॥ २९ ॥

वचेत्यादि।—हारीतस्य।—इम योग भोजनादिमध्यावसानेष्वपि कारयन्तीति निश्चल। तन्न, हारीते हि—"शाम्यते योगराजेन त्रिः प्रयुक्तेन योगत." इत्येवोक्तम्, न तु भोजनादिमध्यावसानेष्वपीति॥ ३० ॥

पिप्पलीपिप्पलीमूलचित्रकाजाजिसैन्धवैः ।
युक्ता पीता सुरा हन्ति गुल्ममाशु सुदुस्तरम् ॥ ३१ ॥
नादेयीकुटजार्कशिग्रुबृहतीस्नुग्विल्वभल्लातक-
व्याघ्रीकिंशुकपारिभद्रकजटापामार्गनीपाग्निकान् ।
वासामुष्ककपाटलाः सलवणा दग्ध्वा जले पाचितम्
हिङ्ग्वादि प्रतिवापमेतदुदितं गुल्मोदराष्ठीलिषु ॥ ३२ ॥
हिङ्गूग्रगन्धाविड़शुण्ठ्यजाजीहरीतकीपुष्करमूलकुष्ठम् ।
भागोत्तरं चूर्णितमेतदिष्टं गुल्मोदराजीर्णविसूचिकासु ॥ ३३ ॥
त्रिफलाकाञ्चनक्षीरीसप्तलानीलिनीवचा ।
त्रायन्तीहवुषातिक्ताचित्रकत्सैन्धवपिप्पली: ॥
पिबेद्विचूर्ण्य मूत्रोष्णवारिमांसरसादिभि. ।

---

पिप्पलीत्यादि ।—अय योगो वातश्लेष्मणि ज्ञेय ॥ ३१ ॥

नादेयीत्यादि ।—नादेयी भूमिजम्बुका, व्याघ्री कण्टकारी, किंशुक पलाश, पारिभद्रकजटा पारिभद्रमूलम, अग्निश्चित्रक । सलवणा ससैन्धवा लवणा ज्योतिष्मतीत्येके । नादेयीप्रभृतीन् दग्ध्वा क्षार कार्य्य । अस्याढक पलशत वा पानीयक्षारविधिना चतुर्गुण षड्गुणेन वा उदकेन पक्त्वा चतुर्भागावशेषे कल्कमपनीय, एकविंशतिवारान परिस्राव्य स्थापयेत । अस्य कर्षमर्द्धपल वा हिङ्ग्वादि चूर्णपादिक दत्त्वा मासघृतक्षीराणामन्यतमेषु प्रक्षिप्य पिबेत, मासरसादिभिश्च भोक्तव्यमोजीर्णक्षणाथम् । अन्ये त्वाहु एकदा विपाच्य स्थापित क्षारोदकेऽम्लत्वादिदोषशङ्का स्यात, अत कृत क्षारादग्नि बलाद्यपेक्षया पलादिपरिमित क्षार गृहीत्वा प्रत्यहमन्तरीक्तकाथविधिना क्षारोदक कार्य्यमात । हिङ्ग्वादिप्रतिवापमिति हिङ्ग्वादेपादिकस्य प्रतिवाप' प्रक्षेपी यत्र तत तथा । एतदिति क्वाथक्षारजलम । यस्य तन्त्रस्याय प्रयोगस्तत्रोक्तहिङ्ग्वाद्यपरिज्ञानात् वक्ष्यमाणहिङ्ग्वादिरनन्तरपठितत्वात् संग्रहकारस्याभिमती लक्ष्यते ॥ ३२ ॥

हिङ्ग्वादी ।—उग्रगन्धा वचा । भागोत्तरमिति उत्तरोत्तरमेकभागवृद्धम । उष्णाम्बुनास्य पानमुपदिशन्ति ॥ ३३ ॥

सर्वगुल्मोदरप्लीहकुष्ठार्शःशोथपीड़ितः ॥ ३४ ॥

काङ्कायनगुड़िका—

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढ़कीम् ।
शृङ्गवेरं वचाञ्चैव पलिकानि समाहरेत् ॥
त्रिवृतायाः पलञ्चैव कुर्य्यात् त्रीणि च हिङ्गुनः ।
यवक्षारपले द्वे च द्वे पले चाम्लवेतसात् ॥
यमान्यजाजीमरिचं धन्याकञ्चेति कार्षिकम् ।
उपकुञ्च्यजमोदाभ्यां तथा चाष्टमिकामपि ॥
मातुलुङ्गरसेनैव गुड़िकाः कारयेद्भिषक् ।
तासामेकां पिबेद् द्वे वा तिस्रो वापि सुखाम्बुना ॥
अम्लैश्च मद्यैर्यूषैश्च घृतेन पयसाथवा ।
एषा काङ्कायनेनोक्ता गुड़िका गुल्मनाशिनी ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम् ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मे च नारीणामुष्ट्रीक्षीरेण पाययेत् ॥ ३५ ॥

हवुषाद्यं घृतम्—

हवुषाव्योषपृथ्वीकाचव्यचित्रकसैन्धवैः ।
साजाजीपिप्पलीमूलदीप्यकैर्विपचेद्घृतम् ॥
सकोलमूलकरसं सक्षीरं दधि दाड़िमम् ।

---

त्रिफलेत्यादौ ।—काञ्चनक्षीर्य्या अभावात् कटुकमाहुः । सप्तला चर्मकषा शीलिनी नीलवृक्षा । विरेकार्थोऽयं योगः ॥ ३४ ॥

शटीमित्यादौ ।—यमान्यादीनां प्रत्येकं कर्षः । उपकुञ्ची कृष्णजीरकम्, अजमोदा यमानी, अनयोः प्रत्येकम् अष्टमिकामर्द्धपलमित्यर्थः ॥ ३५ ॥

अत परं वातगुल्मघ्नं शूलानाहविबन्धनुत् ॥
योन्यर्शोग्रहणीदोष-श्वासकासारुचिज्वरान् ।
पार्श्वहृद्बस्तिशूलञ्च घृतमेतदपोहति ॥ २६ ॥

पञ्चपलकं घृतम्—

पिप्पल्याः पिचुरध्यर्द्धो दाडिमाद् द्विपलं पलम् ।
धान्यात् पञ्च घृताच्छुण्ठ्याः कर्षः क्षीरं चतुर्गुणम् ॥
सिद्धमेतैर्घृतं सद्यो वातगुल्मं चिकित्सति ।
योनिशूलं शिरःशूलमर्शांसि विषमज्वरान् ॥ २७ ॥

त्र्यूषणाद्यं घृतम्—

त्र्यूषणत्रिफलाधान्य-विडङ्गचव्यचित्रकैः ।
कल्कीकृतैर्घृतं सिद्धं सक्षीरं वातगुल्मनुत् ॥ २८ ॥

त्रायमाणाद्यं घृतम्—

जले दशगुणे साध्यं त्रायमाणाचतुःपलम् ।
पञ्चभागस्थितं पूतं कल्कैः संयोज्य कार्षिकैः ॥
रोहिणीकटुकामुस्त-त्रायमाणादुरालभाः ।
कल्कैस्तामलकीवीराजीवन्तीचन्दनोत्पलैः ॥

---

हवुषेत्यादि।—हवुषा स्वनामख्याता; पृथ्वीका कृष्णजीरकम्, हिङ्गुपत्रिकै-र्व्यं, दीप्यको यमानी। सकोलमूलकरसमिति कोलं शुष्कबदरं तस्य क्वाथः, मूलकस्यापि शुष्कस्य क्वाथः; न पुनर्नवद्रव्यस्य स्वरसः, तस्य तु गुल्मे निषिद्धत्वात्। दाडिमस्याप्यत्र स्वरसः, द्रवसाहचर्यात्। विश्वामित्रेणापि दाडिमरस एवोक्त एव पञ्चभिर्द्रवैः प्रत्येकं स्नेहसमैः पाकः ॥ २६ ॥

पिप्पल्या इत्यादि।—पिचुरध्यर्द्ध इति सार्द्धकर्षः। पलं धान्यादिति योज्यम् पञ्च घृतादिति पञ्च पलानीत्यर्थः। क्षीरं चतुर्गुणमिति घृतपञ्चपलापेक्षया विंशतिः पलानि क्षीरस्येत्यर्थः ॥ २७ ॥

त्र्यूषणादिघृते सक्षीरमिति चतुर्गुणक्षीरसहितं, द्रवान्तराभावात् ॥ २८ ॥

जल इत्यादौ।—पञ्चभागस्थितमिति पञ्चभागावशिष्टं, तेन क्वाथस्याष्टौ पलानी-त्यर्थः। कल्कैरित्यत्र व्यवहितैरप्यामलक्यादिभिः सम्बध्यते; न केवलमेतैः कल्कैः.

रसस्यामलकीनाञ्च क्षीरस्य च घृतस्य च ।
पलानि पृथगष्टाष्टौ दत्त्वा सम्यग्विपाचयेत् ॥
पित्तगुल्मं रक्तपित्तं विसर्पं पैत्तिकं ज्वरम् ।
हृद्रोगं कामलां कुष्ठं हन्यादेतद्घृतोत्तमम् ॥
पलोल्लेखागते माने न द्वैगुण्यमिहेष्यते ।
चत्वारिंशत्पलं तेन तोयं दशगुणं भवेत् ॥ ३९ ॥

द्राक्षाद्यं घृतम्—

द्राक्षामधुकखर्जूरं विदारीं सशतावरीम् ।
परूषकाणि त्रिफलां साधयेत् पलसम्मिताम् ॥
जलाढ़के पादशेषे रसमामलकस्य च ।
घृतमिक्षुरसं क्षीरमभयाकल्कपादिकम् ॥
साधयेत् तद्घृतं सिद्धं शर्कराक्षौद्रपादिकम् ।
प्रयोगात् पित्तगुल्मघ्नं सर्वपित्तविकारनुत् ।
साहचर्य्यादिह पृथग्घृतादेः क्वाथतुल्यता ॥ ४० ॥

क्षीरषट्पलकं घृतम्—

पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः ।
पलिकैः सयवक्षारैः सर्पिःप्रस्थं विपाचयेत् ॥
क्षीरप्रस्थेन तत् सर्पिर्हन्ति गुल्मं कफात्मकम् ।
ग्रहणीपाण्डुरोगघ्नं प्लीहकासज्वरापहम् ॥ ४१ ॥

---

कटुरोहिण्यादयश्च कल्का इति योजना। कल्का इति श्लोकपादपूरणार्थमि[illegible]
हरिचन्द्रः। वीरा क्षीरकाकोली। पलोल्लेखागतमानत्वादिह न द्वैगुण्यमित्या[illegible]
पलानीत्यादि ॥ ३९ ॥

द्राक्षेत्यादौ।—मधुकं यष्टिमधु। शर्कराक्षौद्रपादिकमिति मिलित्वा। [illegible]
क्वाथशेषस्य प्रस्थमानस्य साहचर्य्याद्घृतादीनामपि प्रस्थमानत्वमित्याह साहचर्य्यादि[illegible]
त्यादि ॥ ४० ॥

धात्रीषट्पलकं घृतम्—

धात्रीफलानां स्वरसैः षडङ्गं विपचेद्घृतम्।
शर्करासैन्धवोपेतं तद्धितं सर्वगुल्मिनाम् ॥ ४२ ॥

भार्गीषट्पलकं घृतम्—

षड्भिः पलैर्मगधजाफलमूलचव्य-
विश्वौषधज्वलनयावककल्कपक्कम्।
प्रस्थं घृतस्य दशमूल्युरुवूकभार्गी
क्काथेऽप्यथो पयसि दध्नि च षट्पलाख्यम् ॥
गुल्मोदरारुचिभगन्दरमग्निसाद-
कासज्वरक्षयशिरोग्रहणीविकारान्।
सद्यः शमं नयति ये च कफानिलोत्था
भार्ग्याख्यषट्पलमिदं प्रवदन्ति वैद्याः ॥ ४३ ॥

---

क्षीरषट्पलके घृते क्षीरप्रस्थेनैव केवलेन घृतसमेन पाक इति ब्रुवते; अन्ये तु त्रिगुणं जलं ददति; तन्न, सर्वथा द्रवानुक्तौ हि जलं द्रवं भवतीत्याह चक्रः ॥ ४१ ॥

धात्रीत्यादि।—सुश्रुतस्य। धात्रीफलस्वरसश्चतुर्गुणः। षडङ्गमिति यवक्षार-सहितपञ्चकोलकल्कितं प्रत्येकं पलिकम्। उक्तं हि—"पञ्चकोलैर्घृतं क्षीरे प्रत्येकं पलिकैः पचेत्। क्षीरे धात्रीरसे वापि सितासैन्धवयोजितम् ॥" शर्करा-सैन्धवोपेतमिति शर्करासैन्धवयोर्मिलित्वा पादिकयोः प्रक्षेपः। अत्रापि शर्करा पादत्वं, सैन्धवस्यैकपाद इति वदन्ति ॥ ४२ ॥

षड्भिः पलैरित्यादि।—मगधजा पिप्पली, तस्याः, फलं मूलञ्च; ज्वलन-श्चित्रकः, यावको यवक्षारः। यावजेति पाठे स एवार्थः। अत्र क्षीरं स्नेहसमं, "द्रवान्तरेण योगे हि क्षीरं स्नेहसमं भवेत्" इत्युक्तेः। दधिक्काथौ तु मिलित्वा स्नेहात् त्रिगुणौ। अतः चतुर्गुणः पाकः, एकेनापि चातुर्गुण्यं द्वाभ्यामपि चातुर्गुण्यं त्रिभिरपि चातुर्गुण्यं चतुर्भिः समामिति वचनात्। अन्ये तु क्काथो द्विगुणः, क्षीरं दधि च प्रत्येकं स्नेहसममित्याहुः। निश्चलस्तु क्काथश्चतुर्गुणः, दधि च चतुर्गुणं, क्षीरन्तु स्नेहसममिति नवगुणः पाक इत्याह। अन्ये तु दधिक्काथौ मिलित्वा चतु-र्गुणौ, क्षीरन्तु स्नेहसममिति [illegible] पाक इत्याहुः ॥ ४३ ॥

भल्लातकं घृतम्—

भल्लातकानां द्विपलं पञ्चमूलं पलोन्मितम्।
साध्यं विदारीगन्धाद्यमापोथ्य सलिलाढ़के॥
पादावशेषे पूते च पिप्पलीं नागरं वचाम्।
विड़ङ्गं सैन्धवं हिङ्गु यावशूकं विड़ं शटीम्॥
चित्रकं मधुकं रास्नां पिष्ट्वा कर्षसमान् भिषक्।
प्रस्थञ्च पयसो दत्त्वा घृतप्रस्थं विपाचयेत्॥
एतद्भल्लातकं नाम कफगुल्महरं परम्।
प्लीहपाण्ड्वामयश्वासग्रहणीकासगुल्मनुत्॥ ४४॥

रसोनाद्यं घृतम्—

रसोनस्वरसे सर्पिः पञ्चमूलरसान्वितम्।
सुरारनालदध्यम्लमूलकस्वरसैः सह॥
व्योषदाड़िमवृक्षाम्लयमानीचव्यसैन्धवैः।
हिङ्ग्वम्लवेतसाजाजीदीप्यकैश्च पलांशिकैः॥
सिद्धं गुल्मग्रहण्यर्शःश्वासोन्मादक्षयज्वरान्।
कासापस्मारमन्दाग्निप्लीहशूलानिलान् जयेत्॥ ४५॥

दन्तीहरीतकी—

जलद्रोणे विपक्तव्या विंशतिः पञ्च चाभयाः।
दन्त्याः पलानि तावन्ति चित्रकस्य तथैव च॥
तेनाष्टभागशेषेण पचेद्दन्तीसमं गुड़म्।

---

भल्लातकघृतं द्विगुणद्रवेणैव पक्तव्यं, निर्दिष्टे तद्वदेव हि इति वचनात्। पञ्च मूलं स्वल्पं, तदेव विदारीगन्धाद्यं प्रत्येकं पलोन्मितम्। भल्लातकं नामेत्यनन्तरं सर्पिरिति शेषः; चरके तु एतद्भल्लातकघृतं कफगुल्महरं परमित्येव पाठः॥ ४४॥

रसोनेत्यादौ।—पञ्चमूलं महत् पञ्चमूलं वातकफहरत्वात्, तस्य रसः क्वाथः। रसोनस्वरसादीनां यथा स्वं द्रवसमत्वम्। दीप्यकं चैवयमानी॥ ४५॥

जलद्रोण इत्यादौ।—विंशतिः पञ्च चाभया इत्याकृतिमानात्। हरीतकी

शाखाभयास्थिहच्चूर्णात् तैलाच्चापि चतुःपलम् ॥
पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले ।
क्षौद्रं तैलसमं दत्त्वा चातुर्जातपलं तथा ॥
ततो लेहपलं लीढ्वा जग्ध्वा चैकां हरीतकीम् ।
सुखं विरिच्यते स्निग्धो दोषप्रस्थमनामयः ॥
प्लीहश्वयथुगुल्मार्शो-हृत्पाण्डुग्रहणीगदाः ।
शाम्यन्त्युत्क्लेशविषम-ज्वरकुष्ठान्यरोचकाः ॥ ४६ ॥

वृश्चीराद्यरिष्टः—

वृश्चीरमुरुबूकञ्च वर्षाह्वं बृहतीद्वयम् ।
चित्रकञ्च जलद्रोणे पचेत् पादावशेषितम् ॥
मागधीचित्रकक्षौद्र-लिप्तकुम्भे निधापयेत् ।
मधुनः प्रस्थमावाप्य पथ्याचूर्णार्द्धसंयुतम् ॥
व्युषोषितं दशाहञ्च जीर्णभक्तः पिबेन्नरः ।
अरिष्टोऽयं जयेद्गुल्ममविपाकं सुदुस्तरम् ॥ ४७ ॥

---

फलानि कर्पटे पोट्टली बद्धा अगस्त्यहरीतकीवत् क्वथनीयानि । तैलाढ्कुडवमिति
मा च पलचतुष्टयमित्यर्थः । तैलमत्रास्विन्नहरीतकीभर्जनार्थं, न तु विश्वचूर्णपरि
भर्जनार्थ, भर्जनेन विरेचनशक्त्यपकर्षप्रसङ्गात् । पलमेकं कणाशुण्ठ्योर्मिलित्वा ;
एवं चातुर्जातपलमपि । प्रस्थमत्र दोषस्य, सार्द्धत्रयोदशपलमानम् । उक्तं हि
भोजे -"वमने च विरेके च तथा शोणितमोक्षणे । सार्द्धत्रयोदशपलं प्रस्थमाहु
र्मनीषिणः" इति ॥ ४६ ॥

वृश्चीरमित्यादि ।—वृश्चीरः श्वेतपुनर्नवा । वृश्चीरादीना मिलित्वा पलशतम्,
"द्रोणं द्रव्यतुला मता" इति वचनात् ; अन्ये त्वाढकमाहुः । मागधी पिप्पली ।
मधुनः प्रस्थमिति शरावचतुष्टयम् । पथ्याचूर्णार्द्धसंयुतमिति हरीतकीचूर्णप्रस्थार्द्धमष्टौ
पलानि, तेन संयुतम् । व्युषोषितं तुषधान्यराशिमध्ये स्थितम् । जीर्णभक्तः परि-
णताहारः, लघुकोष्ठ इत्यर्थः । अस्य पलमर्द्धपलं वा प्रातरुपयोज्यम् ॥ ४७ ॥

रौधिरस्य च गुल्मस्य गर्भकाले व्यतिक्रमे।
स्निग्धस्विन्नशरीरायै दद्यात् स्निग्धं विरेचनम् ॥ ४८ ॥
शताह्वाचिरविल्वत्वग्दारुभार्गीकणोद्भवः।
कल्कः पीतो हरेद्गुल्मं तिलक्वाथेन रक्तजम् ४९ ॥
तिलक्वाथो गुड़व्योष-हिङ्गुभार्गीयुतो भवेत्।
पानं रक्तभवे गुल्मे नष्टे पुष्पे च योषिताम् ॥ ५० ॥
सक्षारं त्र्यूषणं मद्यं प्रपिबेदस्रगुल्मिनी।
पलाशक्षारतोयेन सिद्धं सर्पिः पिबेच्च सा ॥ ५१ ॥

---

रौधिरस्येत्यादौ।—गर्भकालव्यतिक्रम इति उचितगर्भकालस्य दशमासरूप-कालस्य व्यतिक्रमे। अयञ्च समयनियमो रक्तगुल्मस्यौषधार्हसमयप्रदर्शनार्थमेव, ज्वरे सप्तदिवसात् परतः पाचनवत्। न तु गर्भकालशङ्कानिरासार्थम्, दशमासाति-क्रमेणापि गर्भावस्थादर्शनात्। उक्तं हि—"तं स्त्री प्रसूते सुचिरेण गर्भं पुष्टो यदा वर्षगणैरपि स्यात्" इति। तथा पिण्डितस्पन्दनमस्य गर्भलक्षणात् विरुद्धलक्षणमुक्तं "य स्पन्दते पिण्डित एव नाङ्गैः" इति। एतेन दशमासादर्वागपि शोणितगुल्म-ज्ञानं भवत्येव। तस्माद् व्याधिमहिम्ना अस्य दशमासातिक्रमे सत्येव सुखचिकि-त्स्यत्वप्रदर्शनार्थमिदमुक्तम्। अर्वाक् चिकित्सायान्तु शोणितातिस्रुतौ गर्भाशयोप-घातादिकं स्यादिति ॥ ४८ ॥

शताह्वेत्यादि।—शताह्वादिकणान्तानां प्रक्षेपः। चिरविल्वत्वक् लाटाकरञ्ज-त्वक्। तिलक्वाथेनेति तिलफलक्वाथेनेत्यर्थः, एवमुत्तरयोगेऽपि तिलफलस्य क्वाथः। केचित्तु तिलनालक्वाथकृतक्षारोदकेनापि व्यवहरन्ति। रक्तजमित्यार्तव-रक्तजम् ॥ ४९ ॥

तिलक्वाथ इत्यादौ।—गुडादयः प्रक्षेप्याः। नष्टे पुष्पे इत्यदृष्टार्तवे ॥ ५० ॥

सक्षारेत्यादौ।—क्षारो घण्टापारुल्यादिकृतः, अन्ये तु यवक्षार इत्याहुः।

पलाशक्षारतोयेनेत्यादि।—अकल्कमिदं घृतम्। पलाशभस्माढकमुदकाढकैः षड्भिर्ज्यायौ साधनीयम्। ततो वक्ष्यमाणेत्यादिलक्षणोदये तृतीयभागेऽवशिष्टे त्रिः सप्तवारान् परिस्राव्य क्षारोदकं घृताच्चतुर्गुणं ग्राह्यम्, तेन घृतस्य पाक इति चक्र

उष्णैर्वा भेदयेद्भिन्ने विधिरासृग्दरो हितः।
न प्रभिद्येत यद्येवं दद्याद्योनिविशोधनम्॥
क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः।
रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहरी क्रिया॥ ५२॥
भल्लातकात् कल्ककषायपक्वं सर्पिः पिबेच्छर्करया विमिश्रम्।
तद्रक्तगुल्मं विनिहन्ति पीतं बलाशगुल्मं मधुना समेतम्॥५३॥
वल्लूरं मूलकं मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेच्चालुकं गुल्मी मधुराणि फलानि च॥ ५४॥

इति गुल्मचिकित्सा।

---

न्ध तु पानीयक्षारविधिना स्रावितक्षाराम्बुना घृतपाकमुपदिशन्ति कात्तिकः पुन-
ःश्शक्षारतोयतैलनेन स्नेहपाकोक्तविधिना पलाशक्षारक्वाथकरणमित्याह॥ ५१॥

उष्णैर्वेति। उष्णैरित्युष्णवीर्य्यै सुरासौवीरादिभि। भिन्ने इति भग्ने सति। ...क्त। योनिविशोधनमिति वर्त्तिरूपतया योनिविरेचनमित्यर्थः। क्षारेणेत्यादि... लाशक्षारेण सह पललं तिलचूर्णं किञ्चिज्जलं दत्त्वा वर्त्तिं विधाय योन्य...ःयात। अथवा पलाशादिक्षारतिलचूर्णं सीजक्षीरेण मिश्रणीयम, तेन सूक्ष्मवस्त्र... ऩ्नायत्ता वर्त्तिः कार्य्या, सा च योन्यभ्यन्तरे देया। रुधिर इत्यादि स्पष्टम्॥ ५२॥

भल्लातकादित्यादि।—अत्र पादिकशर्कराप्रक्षेप, एव मध्वपि "कल्कवन्मध-शर्करे" इत्युक्तेः। बलाश कफ। कफगुल्मे शर्करास्थाने मधु देयमित्यर्थ॥ ५३॥

वल्लूरमित्यादि। —सुगमम्। वल्लूर शुष्कमांसम। मूलकमार्द्रम, शुष्कमूलकस्य वातहरत्वेन पथ्यत्वान्न निषिद्धम। एतच्च हरितवर्गोपलक्षणं गुल्मे हरितवर्गस्याप्य...हितत्वात। वैदल मुद्गादि, आलुक पिण्डालुकम। मधुराणि फलानि क्षीरि वृक्षफलानि, क्षारपाणौ न्यग्रोधादिफलवर्जनस्योक्तत्वात्। चकारात हरीतकीवर्गोप-लक्षणम, गुल्मे हरीतकीवर्गस्याप्यहितत्वात्॥ ५४॥

इति गुल्म-चिकित्सा-विवृति.।

## अथ हृद्रोग-चिकित्सा ।

वातोपसृष्टे हृदये वामयेत् स्निग्धमातुरम् ।
द्विपञ्चमूलीक्वाथेन सस्नेहलवणेन च ॥ १ ॥
पिप्पल्येलावचाहिङ्गु यवक्षारोऽथ सैन्धवम् ।
सौवर्च्चलमथो शुण्ठी अजमोदा च चूर्णितम् ॥
फलधान्याम्ल-कौलत्थ-दधिमद्यासवादिभिः ।
पाययेच्छुद्धदेहञ्च स्नेहेनान्यतमेन वा ॥ २ ॥
नागरं वा पिबेदुष्णं कषायञ्चाग्निवर्द्धनम् ।
कासश्वासानिलहरं शूलहृद्रोगनाशनम् ॥ ३ ॥
श्रीपर्णीमधुकक्षौद्र-सितागुड़जलैर्वमेत् ।
पित्तोपसृष्टे हृदये सेवेत मधुरैः शृतम् ॥
घृतं कषायांश्चोद्दिष्टान् पित्तज्वरविनाशनान् ॥ ४ ॥

---

गल्मस्य हृदय स्थानमन्तम, अत. स्थानसाम्यात तदनन्तर हृद्रोग उच्य वातोपसृष्ट इत्यादि। सुश्रुतस्य। अत्रानुक्तमपि मदनफलादिचूर्णं योज्यम्, वमन योग्यत्वात। वातजेऽपि वमनविधान हृदयस्य कफस्थानत्वात, उक्त हि "स्थानिस्थानगत दोष स्थानिवत समुपाचरेत्" इति। एव पित्तज वमन बोध्यम्। चरके हृद्रोगिणां यद्यप्यवस्था उक्तास्तथापि कफोत्क्लेशे बलीयसि सर्वत्र वमन ज्ञेयम। पिप्पलीत्याद्यन्यतमेन वेत्यन्त सुश्रुतस्य। फलाम्ल मातुलुङ्ग दाडिम-फलादि हृद्यत्वात् तस्य रसो ग्राह्य पानोपयोगित्वात्। वाते धान्याम्ल काञ्जिकम् कौलत्थ कुलत्थयूष। स्नेहेनान्यतमेन वेति घृतादीनामन्यतमेन फलधान्याम्लादिद्रव्योपदर्शन सात्म्यापेक्षम् ॥ १ । २ ॥

नागरमित्यादि।—नागर नागरकृतकषाय पिबेत्। वाशब्द पूर्वयोगा पेक्षया ॥ ३ ॥

पत्तिकचिकित्सामाह श्रीपर्णीत्यादि।—सुश्रुतस्य। श्रीपर्णी गाम्भारी तस्या फलमत्र देयम्। अत्र श्रीपर्णीमधुकयोरेव तयोरेव योग्यत्वात जलमत्राईप्रतक्वाथ। अत्र क्षौद्रसितागुडान् प्रक्षिप्य पित्तजे वमेत्। किंवा जलस्य श्रीपर्ण्यादिभिः पञ्चभि सम्ब

शीताः प्रदेहाः परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्रपरूषकैः स्यात्
शुद्धे च पित्तापहमन्नपानम्॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वयं तिक्तकरोहिणीञ्च॥ ५॥

अर्जुनस्य त्वचा सिद्धं क्षीरं योज्यं हृदामये।
सितया पञ्चमूल्या वा बलया मधुकेन वा॥ ६॥

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्णं ककुभत्वचो ये।
हृद्रोगजीर्णज्वररक्तपित्तं हत्वा भवेयुश्चिरजीविनस्ते॥ ७॥

वचा-निम्बकषायाभ्यां वान्तं हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्यादि च योजयेत्॥ ८॥

---

त्मात पञ्च योगा अमी। अत्राप्यनुक्तमपि मदनफलादि पूर्ववद्द बोध्यम्। डल्लनस्तु सितागुडजलैरित्यत्र सितोत्पलजलैरिति पठित्वा उत्पलं कुष्ठमिति व्याचष्टे। मधुरैः शृत घृतमिति काकोल्यादिगणक्वाथकल्कसाधितं घृतम्॥ ४॥

शीता इत्यादौ।—द्राक्षादिभिर्युक्तमन्नपानं मण्डयूषादिपानवमनविरेचनशुद्धे कार्यमित्यर्थः इति केचित्। अन्ये तु—"पित्ते द्राक्षेक्षुनिर्याससिताक्षौद्रपरूषकैः। युक्तो विरेको हृद्यः स्यात्" इति तन्त्रान्तरदर्शनात् द्राक्षादिभिर्युक्तो विरेक इत्याहुः। सिताजलेनेति शर्करामिश्रितजलेनेत्यर्थः। सिता जलेनेति पाठोऽपि ज्ञेयः। उक्तं हि वाग्भटे "यष्टीमधुककल्कञ्च पिबेत् ससितमम्भसा" इति॥ ५॥

अर्जुनस्येत्यादि।—क्षीरपरिभाषया अर्जुनत्वगादिभिः प्रत्येकं साधितं सितया सह पेयमिति चत्वारो योगाः। केचित्तु केवल वारिसाधितक्षीरे सिताप्रक्षेपादिति पञ्च योगानाहुः। पञ्चमूली चात्र स्वल्पा। एते च योगा वातपित्ते ज्ञेयाः॥ ६। ७॥

वचेत्यादि।—सुश्रुतस्य। वचाकषायेण निम्बकषायेण वा वमनम्; किंवा वचाकल्को निम्बस्य कषायः, ताभ्यां मिलित्वा वमनम्। हृदीति हृद्रोगे। तात्स्थ्यात् मञ्चाः क्रोशन्तीतिवत्। वातहृद्रोगहृच्चूर्णं पिप्पल्यादि चेति। अत्रैव वातहृद्रोगे

त्रिदोषजे लङ्घनमादितः स्यादन्नञ्च सर्वेषु हितं विधेयम् ।
हीनाधिमध्यत्वमवेक्ष्य चैव कार्य्यं त्रयाणामपि कर्म शस्तम् ॥ ९ ॥
चूर्णं पुष्करजं लिह्यान्माक्षिकेण समायुतम् ।
हृच्छूलश्वासकासघ्नं क्षयहिक्कानिवारणम् ॥ १० ॥
तैलाज्यगुड़विपक्वं चूर्णं गोधूमं पार्थजं वापि ।
पिबति पयोऽनु च स भवेज्जितसकलहृदामयः पुरुषः ॥ ११ ॥
गोधूमककुभचूर्णं छागपयो गव्यसर्पिषा विपक्वम् ।
मधुशर्करासमेतं शमयति हृद्रोगमुद्धतं पुंसाम् ॥ १२ ॥
मूलं नागबलायास्तु चूर्णं दुग्धेन पाययेत् ।

---

पिप्पल्यादिना यच्चूर्णमुक्तं तत् पाययेदित्यर्थं वागभटेऽप्युक्तम् । कफाद्रवे वम स्विन्न पिचुमर्दवचाम्भसा । कुलत्थ धन्वोत्थ रसतीक्ष्णमद्ययवाशन । पिबेच्चथ वच हिङ्गुलवणद्वयनागरान्, सैलायमानीककणा यवक्षारान् सुखाम्बुना । फलधान्या कौलत्थयूषमूत्रासवैस्तथा ।'' इति । वातघ्नञ्च पिप्पल्यादिकं तथा पिप्पल्यादिगण पाययेदित्याहुरन्ये ॥ ८ ॥

त्रिदोषज इत्यादि ।—लङ्घनविधानं हृदयस्य कफस्थानतया । त्रिदोषजेऽपि कफ एवादौ लङ्घनेन जेय इति मत्वा कृतम् । त्रिदोषजे इत्येन दोषत्रय चिकित्सासूत्रमाह हीनाधीत्यादि ।—अधिशब्दोऽधिकवाची, अधिकत्वमित्यर्थ दोषाणां हीनत्वादिकं प्रतीत्य यत् कर्मशमनमधिकदोषहन्तृतया तत् कार्य्यमिति वाक्यार्थः ॥ ९ ॥

चूर्णमित्यादि स्पष्टम् ॥ १० ॥

तैलाज्येत्यादि ।—तैलाज्यगुडान् मिलित्वा पादिकान् दत्त्वा गोधूमपार्थचूर्णं स्तोकमात्रेण तोयनोत्कारिकावद्विपाच्य भक्ष्यम् । किंवा गोधूमपार्थचूर्णसमो गुड़, तैलाज्ये तु सत्कारार्थं स्तोकमात्रं देये । पार्थोऽर्जुनत्वच । वाशब्दः पूर्वयोगा पेक्षया ॥ ११ ॥

गोधूमेत्यादि ।—ककुभोऽर्जुनः । अत्रापि योगे सर्पिर्मधुशर्कराणां पूर्ववन्मानं ज्ञात्वा छागक्षीरेणोत्कारिकावत् पक्वं मधुपरं सिद्धशीतं देयम् ॥ १२ ॥

हृद्रोगश्वासकासघ्नं ककुभस्य च वल्कलम् ॥
रसायनं परं बल्यं वातजिन्मासयोजितम् ।
संवत्सरप्रयोगेण जीवेद्वर्षशतं ध्रुवम् ॥ १३ ॥
हिङ्गूग्रगन्धाविडविश्वकृष्णा-कुष्ठाभयाचित्रकयावशूकम् ।
पिबेच्च सौवर्चलपुष्कराढ्यं यवाम्भसा शूलहृदामयघ्नम् ॥१४॥
दशमूलीकषायन्तु लवणक्षारसंयुतम् ।
श्वासं कासञ्च हृद्रोगं गुल्मं शूलञ्च नाशयेत् ॥ १५ ॥
पाठां वचां यवक्षारमभयां साम्लवेतसाम् ।
दुरालभां चित्रकञ्च त्र्यूषणञ्च फलत्रयम् ॥
शटीं पुष्करमूलञ्च तिन्तिड़ीकं सदाड़िमम् ।
मातुलुङ्गस्य मूलानि श्लक्ष्णचूर्णानि कारयेत् ॥
सुखोदकेन मद्यं वा स्नुतान्येतानि पाययेत् ।
अर्शः शूलञ्च हृद्रोगं गुल्मञ्चाशु व्यपोहति ॥ १६ ॥
पुटदग्धमश्मपिष्टं हरिणविषाणन्तु सर्पिषा पिबतः ।
हृत्पृष्ठशूलमुपशममुपयात्यचिरेण कष्टमपि ॥ १७ ॥
क्रिमिहृद्रोगिणं स्निग्धं भोजयेत् पिशितौदनम् ।
दध्ना च पललोपेतं त्र्यहं पश्चाद्विरेचयेत् ॥

---

मृत नामवन्नाया इति, मृल चूर्णमिति चूर्णरूप मलमित्यर्थः। ककुभस्य वल्कलमिति ककुभस्य त्वक्चूर्णमपि दुग्धेन पेयम्। योगद्वयमेतत ॥ १३ ॥

हिङ्ग्वित्यादि।—पुष्करस्याभावात् कुष्ठस्यैव भागद्वयम। हिङ्ग्वादिपुष्करान्तानां चूर्ण यवक्वाथे प्रक्षिप्य पिबेत ॥ १४—१६ ॥

पुटेत्यादि।—हरिणशृङ्गं कर्दमेन सवेष्ट्य मृदा प्रलिप्य च गोमयाग्नौ निर्धूमाङ्गारे वा दग्ध्वा शिलापिष्टं घृतेन पेयमित्यर्थः ॥ १७ ॥

क्रिमीत्यादि।—अतःपरमित्यन्त सुश्रुतस्य।—पिशितप्रधानमोदनं पिशितौदनम्, तच्च दध्ना पललेन च संयुक्तं त्र्यहं भोजयेत्। पलल तिलचूर्णम्। एतच्च पिशितौदन-

सुगन्धिभिः सलवणैर्योगैः साजाजिशर्करैः ।
विडङ्गगाढं धान्याम्लं पाययेद्धितमुत्तमम् ॥ १८ ॥
क्रिमिजे च पिबेन्मूत्रं विडङ्गामयसंयुतम् ।
हृदि स्थिताः पतन्त्येवमधस्तात् क्रिमयो नृणाम् ।
यवान्नं वितरेच्चास्मै सविडङ्गमतः परम् ॥ १९ ॥

वल्लभघृतम्—

मुख्यं शताद्धञ्च हरीतकीनां सौवर्चलस्यापि पलद्वयञ्च ।
पक्वं घृतं वल्लभकेति नाम्ना हृच्छ्वासशूलोदरमारुतघ्नम् ॥ २० ॥

श्वदंष्ट्राद्यं घृतम्—

श्वदंष्ट्रोशीरमञ्जिष्ठाबलाकाश्मर्य्यकत्तृणम् ।
दर्भमूलं पृथक्पर्णी पलाशर्षभकौ स्थिरा ॥

---

बीजम क्रिमीणामुत्क्लेशार्थम् । पश्चादिति क्रिम्युत्क्लेशानन्तर विरेचयत् । कैर्वि रेचयेदित्याह सुगन्धिभिरित्यादि ।—योगैरिति विरेचनयोगैः । कीदृशैः, सुगन्धिभिः ?—चातुर्जातकयोगैरिति शेषः । सौगन्ध्यकरणञ्च वान्तिशङ्कानिरासार्थम् । वमनञ्च क्रिमिहृद्रोगे निषिद्धम्, क्रिमिजर्जरितहृदयत्वात् । तथा वमनेन क्रिमिभि शिरोगतैरिन्द्रियोपघातभयाच्चेति । सलवणैरित्यत्र सपललैरिति पठित्वा सभृष्टतिलचूर्णैरिति व्याख्यानयन्ति केचित् । पीतविरेकस्यानुपानमाह विडङ्गगाढमित्यादि ।—विडङ्गगाढ विडङ्गचूर्णोत्कटम्, धान्याम्लमिति काञ्जिकम् । विडङ्गगाढैरिति पाठे योगैरित्यस्य विशेषणम् ॥ १८ ॥

विरेचनयोगान्तरमाह क्रिमिजे चेत्यादि ।—विडङ्गकुष्ठचूर्णं प्रक्षिप्य गोमूत्रं वा विरेकार्थं पिबेत् । यद्यप्ययं योगः सुश्रुते नास्ति तथापि तन्त्रान्तरीय एवायं विरेचनप्रस्तावे संग्रहकारेण लिखितः । विरेचनानन्तरमग्निसन्धुक्षणार्थं परिशिष्टक्रिमिविनाशार्थञ्चान्नसंस्कारमाह यवान्नमित्यादि ।—यवान्नमिति यवपेयादिकम् । सविडङ्गमिति षडङ्गविधिना विडङ्गकषायसाधितम् । अतःपरमिति विरेकानन्तरमित्यर्थः ॥ १९ ॥

वल्लभघृते—मुख्यमिति श्रेष्ठम् । हरीतकी सौवर्चलञ्च कल्कः, घृतस्य प्रस्थः जलेन च पाकः ॥ २० ॥

पलिकान् साधयेत्तेषां रसे क्षीरे चतुर्गुणे।
कल्कैः स्वगुप्तर्षभकमेदाजीवन्तिजीवकैः॥
शतावर्य्यृद्धिमृद्वीकाशर्कराश्रावणीबिसैः।
प्रस्थः सिद्धो घृताद्वातपित्तहृद्रोगशूलनुत्॥
मूत्रकृच्छ्रप्रमेहार्शःश्वासकासक्षयापहः।
धनुःस्त्रीमद्यभाराध्वखिन्नानां बलमांसदः॥ २१॥

बलाद्यं घृतम्—

घृतं बलानागबलार्जुनाम्बु सिद्धं सयष्टीमधुपादकल्कम्।
हृद्रोगशूलक्षतरक्तपित्तं कासानिलासृक् शमयत्युदीर्णम्॥२२॥

अर्जुनघृतम्—

पार्थस्य कल्कस्वरसेन पक्वं शस्तं घृतं सर्वहृदामयेषु॥ २३॥

इति हृद्रोगचिकित्सा।

---

मूद्वाद्यं—पलाशः किंशुकः, तस्य मूलम्। अन्ये तु पलाशं शटीमाहुः। एतेषामेकादशपलं क्वाथ्यं ऽष्टगुणं जलमेकादशशरावं दत्त्वा क्वाथः कार्य्यः। पादशेषश्च पादोनशरावत्रयम्, ततश्चतुर्गुणं क्षीरमेकादशशरावरूपमिति किञ्चिदूनचतुर्गुण पाकः। अन्ये तु एकादशपलं क्वाथ्य एवाढकं जलं दत्त्वा पादशेषश्च प्रस्थमाहुः। अतश्चतुर्गुणं क्षीरमाढकं एव पञ्चगुणः पाक इति। व्यवहारोऽप्येवम्। श्रावणी मुण्डितिका। बिसं मृणालम्॥ २१॥

घृतमित्यादौ।—बलाघृते।—नागबला गोरक्षतण्डुला अम्बु क्वाथ.॥ २२॥

अर्जुनघृतं स्पष्टम्॥ २३॥

इति हृद्रोगचिकित्साविवृतिः।

## अथ मूत्रकृच्छ्रचिकित्सा ।

वातमूत्रकृच्छ्रे—

अभ्यञ्जनस्नेहनिरूहवस्तिस्नेहोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धान् दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥१॥

अमृतानागरं धात्रीवाजिगन्धात्रिकण्टकान् ।
प्रपिबेद्वातरोगार्त्तः सशूली मूत्रकृच्छ्रवान् ॥ २ ॥

पित्तमूत्रकृच्छ्रे—सेकावगाहाः शिशिराः प्रदेहा
ग्रैष्मो विधिर्वस्तिपयोविकाराः ।
द्राक्षाविदारीक्षुरसैर्घृतैश्च
कृच्छ्रेषु पित्तप्रभवेषु कार्य्याः ॥ ३ ॥

कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम् ।
पित्तकृच्छ्रहरं पञ्चमूलं वस्तिविशोधनम् ।
एतत्सिद्धं पयः पीतं मेढ्रगं हन्ति शोणितम् ॥ ४ ॥

शतावरीकाशकुशाश्वदंष्ट्राविदारिशालीक्षुकशेरुकाणाम् ।
क्वाथं सुसिद्धं मधुशर्करात्तं पिबन् जयेत् पैत्तिकमूत्रकृच्छ्रम् ॥५॥

हरीतकीगोक्षुरराजवृक्षपाषाणभिद्धन्वयवासकानाम् ।
क्वाथं पिबेन्माक्षिकसम्प्रयुक्तं कृच्छ्रे सदाहे सरुजे विबन्धे ॥६॥

---

सद्योत्तरे मर्मशते त्रीणि मर्माणि शिरोहृदयवस्तयः प्रधानानि । ततो हृद्रोगचिकित्सामभिधाय वस्तिरोगचिकित्सामाह अभ्यञ्जनेत्यादि । —स्थिरादिभिरिति शालपर्ण्यादिभिः पञ्चमूलैः । वातहरैरिति वातहरत्वं नोक्तैः ॥ १ ॥

अमृतेत्यादि ।—योगोऽयं क्वाथेन ॥ २ ॥

ग्रैष्मो विधिरिति सशर्करं मन्थमित्यादि वाग्भटस्य अशीतीयोक्तः । द्राक्षाविदारीक्षुरसैर्घृतैश्चेति सहार्थे तृतीया ॥ ३ ॥

कुश इत्यादौ ।—तृणोद्भव पञ्चमूलमिति योज्यम् दर्भ उलुयामूलम ॥ ४ ॥

शतावरीत्यादौ ।—शालीति शालिधान्यमूलम् ॥ ५ ॥

हरीतकीत्यादौ ।— राजवृक्ष शोणालुफलम् धन्वयवासकौ दुरालभा ॥ ६ ॥

गुड़ेनामलकं वृष्यं श्रमघ्नं तर्पणं परम्।
पित्तासृग्दाहशूलघ्नं मूत्रकृच्छ्रविनाशनम्॥ ७॥

एर्वारुबीजं मधुकञ्च दार्वीम्
पैत्ते पिबेत् तण्डुलधावनेन।
दार्वीं तथैवामलकीरसेन
समाक्षिकां पैत्तिकमूत्रकृच्छ्रे॥ ८॥

कफमूत्रकृच्छ्रे-

क्षारोष्णतीक्ष्णौषधमन्नपानं स्वेदो यवान्नं वमनं निरूहाः।
तक्रं स तिक्तौषधसिद्धतैलाद्यभ्यङ्गपानं कफमूत्रकृच्छ्रे॥ ९॥

मूत्रेण सुरया वापि कदलीस्वरसेन वा।
कफकृच्छ्रविनाशाय सूक्ष्मं पिष्ट्वा त्रुटिं पिबेत्॥ १०॥

तक्रेण युक्तं शितिमारकस्य बीजं पिबेत् कृच्छ्रविनाशहेतोः
पिबेत् तथा तण्डुलधावनेन प्रवालचूर्णं कफमूत्रकृच्छ्रे॥ ११॥

श्वदंष्ट्रा विश्वतोयं वा कफकृच्छ्रविनाशनम्॥ १२॥

सर्वं त्रिदोषप्रभवे तु वायोः
स्थानानुपूर्व्या प्रसमीक्ष्य कार्य्यम्।

---

गुड़ेनेति गुडामलकफले तुल्यमाने॥ ७॥

एर्वारु कर्कटी। समाक्षिकामित्यस्य दार्वीमित्यनेनैव सम्बन्ध न तु पूर्वेण॥८॥

क्षारेत्यादि।—कफकृच्छ्रभेषज क्षारादिभिर्युक्तमन्नपानम्। ऊषण त्रिकटुक-मिति चक्रः, अतएव औषधमिति पाठोऽशुद्ध एव, वाग्भटेऽपि "कफजे वमनस्वेदो तीक्ष्णोष्णकटुभोजनम्" इत्युक्तत्वात्॥ ९॥

मूत्रेणेत्यादौ।—त्रुटिः सूक्ष्मैला वाग्भटसंवादात्। "पिबेन्मूत्रेण सूक्ष्मैला धात्रीफलरसेन वा॥" इति। अन्ये तु एलामात्रमाहुः। कदलीस्वरसेनेति कदलीमूलस्वरसेन च॥ १०॥

तक्रेणेत्यादौ।—शितिमारः शालिञ्चः; प्रवालो विद्रुम.॥ ११॥ १२॥

समकुपितदोषत्रयारब्धमूत्रकृच्छ्रचिकित्सामाह सर्वमित्यादि।—वातजादिमूत्

त्रिभ्योऽधिके प्राग्वमनं कफे स्यात्
पित्ते विरेकः पवने तु वस्तिः ॥ १३ ॥
बृहतीधावनीपाठा-यष्टीमधु कलिङ्गकाः।
पाचनीयो बृहत्यादिः कृच्छ्रदोषत्रयापहः ॥ १४ ॥
तथाभिघातजे कुर्य्यात् सद्योव्रणचिकित्सितम्।
मूत्रकृच्छ्रे सदा चास्य कार्य्या वातहरी क्रिया ॥ १५ ॥
स्वेदचूर्णक्रियाभ्यङ्गवस्तयः स्युः पुरीषजे।
क्वाथं गोक्षुरबीजस्य यवक्षारयुतं पिबेत्।
मूत्रकृच्छ्रं शकृज्जञ्च पीतः शीघ्रं विनाशयेत् ॥ १६ ॥
क्रिया हिता त्वश्मरिशर्करायाम्
या मूत्रकृच्छ्रे कफमारुतोत्थे ॥ १७ ॥
मेह्यं शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम्।
वृष्यैर्बृंहितधातोश्च विधेयाः प्रमदोत्तमाः ॥ १८ ॥

---

*कृच्छ्रनिर्दिष्टं भेषजं सर्वं सर्वदोषजे मूत्रकृच्छ्रे मिलितं कार्य्यम्। तच्च वातस्थानानुपूर्व्या कर्त्तव्यं न तु त्रिदोषजज्वर इव कफस्थानानुपूर्व्या। सर्वदोषजमूत्रकृच्छ्रस्य वातस्थानभवत्वेन वायोरेव प्रथमं चिकित्सा कार्य्या, चिकित्स्यत्वादिति भावः। विषमसन्निपातकृच्छ्रचिकित्सामाह त्रिभ्य इत्यादि। त्रिभ्योऽधिक इति तार्क्ष्ये कफे पित्ते वाते इत्येते क्रमेण सम्बध्यन्ते। अत्र मूत्रकृच्छ्रानारम्भकमाशयान्तरस्थं कथमप्यपेत्य मूत्रकृच्छ्रारम्भककफस्यास्याधिक्यमस्तीति कृत्वा त्रिभ्योऽधिक इत्युक्तम्। एवं पित्तपवनयोरपीति पित्तपवनान्तरापेक्षया आधिक्यं व्याख्येयम्। अन्ये त्रिभ्य इति छान्दसत्वात् षष्ठ्यर्थे पञ्चमीत्याहुः। तेन त्रयाणां मध्ये इत्यर्थः। १३।

बृहतीत्यादौ।—धावनी कण्टकारी। कृच्छ्रदोषत्रयापह इति कृच्छ्रजनकदोषत्रयापह इत्यर्थः ॥ १४ ॥

वातहरी क्रियेति वातनाशिका क्रिया। स्वेदेत्यादौ।—चूर्णक्रियेति कुलवर्त्ति किंवा विरेचनद्रव्यचूर्णं दत्त्वा गुदे नलिकया फूत्करणम् ॥ १५ । १६ ॥

अश्मरीशर्कराजमूत्रकृच्छ्रचिकित्सामाह क्रिया हितेत्यादि।—अश्मरीशर्कराभ्यामिति चरके पाठः ॥ १७ । १८ ॥

एलाहिङ्गुयुतं क्षीरं सर्पिर्मिश्रं पिबेन्नरः।
मूत्रदोषविशुद्ध्यर्थं शुक्रदोषहरञ्च तत्॥ १९॥
मूत्रकृच्छ्रे विहितन्तु पैत्ते तत् कारयेच्छोणितमूत्रकृच्छ्रे॥२०॥
त्रिकण्टकारग्वधदर्भकाशदुरालभापर्वतभेदपथ्याः।
निघ्नन्ति पीता मधुनाश्मरीञ्च सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम् २१
कषायोऽतिबलामूल-साधितोऽशेषकृच्छ्रजित्॥ २२॥
एलाश्मभेदकशिलाजतुपिप्पलीनाम्
चूर्णानि तण्डुलजलैर्लुलितानि पीत्वा।
यद्वा गुड़ेन सहितान्यवलिह्य सम्यक्
आसन्नमृत्युरपि जीवति मूत्रकृच्छ्री॥ २३॥
अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम्।
मूत्रकृच्छ्रं निहन्त्याशु त्रिभिर्लेहैर्न संशयः॥
सितातुल्यो यवक्षारः सर्वकृच्छ्रविनाशनः।
निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः॥ २४॥

शतावरीघृतञ्चौतं—

शतावरीकाशकुशश्वदंष्ट्रा-विदारिकेक्ष्वामलकेषु सिद्धम्।
सर्पिः पयो वासितया विमिश्रं कृच्छ्रेषु पित्तप्रभवेषु योज्यम् २५

एलेत्यादौ।—एलाहिङ्गुनी प्रक्षिप्य ससर्पिः क्षीरं पिबेदित्यर्थः॥ १९। २०॥

त्रिकण्टकेत्यादौ।—पर्वतभेदः पाषाणभेदः। एषां कषाये मधु प्रक्षेप्यम्॥२१॥

कषाय इत्यादौ।—अतिबला श्वेतबला॥ २२॥

एलादिचूर्णानि तण्डुलजलेन पातव्यानि, किंवा गुडेन लेह्यानीति॥ २३॥

अय इत्यादि।—मारितपुटितवज्रादिलौहचूर्णं रति ५ मधुमात्रेण लौहपात्रे मर्दयित्वा लेह्यं रक्तिकादिक्रमेण माषकद्वयपर्य्यन्तम्। त्रिभिर्लेहैरिति दिनत्रये-णेत्यर्थः। निदिग्धिकारस इति कण्टकारीस्वरसः। उक्तं हि वाग्भटे—"स्वरसं कण्ट-कार्य्या वा पाययेन्माक्षिकान्वितम्" इति॥ २४॥

शतावर्य्यादौ।—घृतसाधनपक्षे शतावर्य्यादीनां कल्कः जलञ्च चतुर्गुणम्, शर्करा तु प्रक्षेप्या॥ २५॥

त्रिकण्टकाद्यं घृतम्—

त्रिकण्टकैरण्डकुशाद्यभीरु-कर्कारुकेक्षुक्षुरसेन सिद्धम् ।
सर्पिर्गुड़ार्द्धांशयुतं प्रपेयं कृच्छ्राश्मरीमूत्रविघातहेतोः ॥२६॥

सुकुमारकुमारकघृतम्—

पुनर्नवामूलतुला दशमूलं शतावरी ।
बला तुरगगन्धा च तृणमूलं त्रिकण्टकम् ॥
विदारिगन्धा नागाह्वा गुडूच्यतिबला तथा ।
पृथग्दशपलान् भागान् जलद्रोणे विपाचयेत् ॥
तेन पादावशेषेण घृतस्यार्द्धाढ़कं पचेत् ॥
मधुकं शृङ्गबेरञ्च द्राक्षासैन्धवपिप्पलीः ।
द्विपलिकाः पृथग्दद्याद्यमान्याः कुड़वं तथा ॥
त्रिंशद्गुड़पलान्यत्र तैलस्यैरण्डजस्य च ।
प्रस्थं दत्त्वा समालोड्य सम्यङ्मृद्वग्निना पचेत् ॥
एतदीश्वरपुत्राणां प्राग्भोजनमनिन्दितम् ।
राज्ञां राजसमानाञ्च बहुस्त्रीपतयश्च ये ॥
मूत्रकृच्छ्रे कटीस्तम्भे तथा गाढ़पुरीषिणाम् ।
मेढ्रवङ्क्षणशूले च योनिशूले प्रशस्यते ॥

---

त्रिकण्टकेत्यादौ ।—कुशादि तृणपञ्चमूलम्, अभीरुः शतावरी, कर्कारुः कुष्माण्डभेदः कुष्माण्डाकृतिः उत्कलदेशे प्रसिद्धः । त्रिकण्टकादीनां सर्वेषां स्वरसाभावे कषाय । गुड़ार्द्धांशयुतमिति घृतापेक्षया अर्द्धांशो गुड इति बोद्धव्य इत्यर्थः । गुडश्च प्रक्षेप्यः । अन्ये तु गुडं दत्त्वैव पाक इत्याहुः ॥ २६ ॥

पुनर्नवेत्यादौ ।—दशमूलस्य मिलित्वा दश पलानि तृणमूलं तृणपञ्चमूलं एतदपि मिलित्वा दशपलमानम् । विदारिगन्धा शालपर्णी । नागाह्वा नागबलागोरक्षतण्डुला इत्यर्थः । अतिबला श्वेतबला । द्रोण इति द्रव्यतुलाद्वये प्रत्येकं द्रोण इत्यर्थः । द्विपलिका इति पलद्वयमानाः । गुड़मेरण्डतैलञ्च दत्त्वैव पाकः

श्वयीत्थानाञ्च गुल्मानां वातशोणितजाश्च ये।
पथ्यं रसायनं शीतं सुकुमारकुमारकम्।
पुनर्नवाशते द्रोणी देयोऽन्येषु तथाऽपरः ॥ २७ ॥

इति मूत्रकृच्छ्र-चिकित्सा।

---

# अथ मूत्राघात-चिकित्सा।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत्।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥
कल्कमेर्वारुवीजानामक्षमात्रं ससैन्धवम्।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥ १ ॥
पाटल्या यावशूकाच्च पारिभद्रात् तिलादपि।
क्षारोदकेन मदिरां त्वगेलोषणसंयुताम्।
पिबेद्गुड़ोपदंशान् वा लिह्यादेतान् पृथक् पृथक् ॥ २ ॥

---

देयोऽन्येषु तथापर इति अन्येषु दशमूलादिष्वपरद्रोण इत्यर्थः। सुकुमारेति सुकुमाराः सुखिनः, कुमाराः शिशवः, एतदुभयोर्हितत्वात् सुकुमारकुमारकसंज्ञा ॥ २७ ॥

इति मूत्रकृच्छ्रचिकित्सा-विवृतिः ॥

---

मूत्रगतविकारसाधर्म्यादनन्तरं मूत्राघातचिकित्सारम्भः।—मूत्रस्याघातो विबन्धः मूत्राघातः। मूत्राघातमूत्रकृच्छ्रयोश्चायं भेदः;—मूत्रकृच्छ्रे कृच्छ्रत्वमधिकमीषद्विबन्धः, मूत्राघाते तु विबन्धो महान् कृच्छ्रत्वमल्पमिति। कल्कमित्यादि।—सुश्रुतस्य। एर्वारुर्बीजकर्कटीति डल्लनः। धान्याम्लं काञ्जिकम् ॥ १ ॥

पाटल्या इत्यादि।—सुश्रुतस्य। तिलादिति तिलनालात्। इहापि वक्ष्यमाणं पृथक् पृथगिति सम्बन्धनीयम्, तेन पृथक् पाटल्यादीनां क्षारस्रावोदकेन समां मदिरां त्वगेलोषणं प्रक्षिप्य पिबेत्। ऊषणं मरिचम्। अन्ये तु पाटलीयावशूकयोर्मिलिता क्षारः। केवलयवक्षारस्याहृद्यत्वात्; अतएव वाग्भटे आयुर्वेदसारे च

त्रिफलाकल्कसंयुक्तं लवणं वापि पाययेत्।
निदिग्धिकायाः स्वरसं पिबेद्वा तान्त्रवस्रुतम्॥ ३॥
जले कुङ्कुमकल्कं वा सक्षौद्रमुषितं निशि।
सतैलं पाटलाभस्म क्षारवद्वा परिस्रुतम्॥ ४॥

---

"पाटलीयावशूकाभ्यामिति मिलित्वा पठ्यते" इत्याहुः। अरुणदत्तोऽप्येवं वाग्भटटीकायां व्याख्यातवान्। कार्त्तिकस्तु मदिरामित्यस्य स्थाने मतिमानिति पाठं स्वीकृत्य चूर्णकमिति चाध्याहृत्य एवं व्याचष्टे,—पाटल्यादीनां चूर्णं क्षारोदकेन मुष्ककक्षारवारिणा पिबेदिति। यदाह विश्वामित्र. "पाटलेः पारिभद्राद्वा तिलाद्वापि यवाग्रजात्। कर्षैलात्वग् युतं चूर्णं मुष्ककक्षारवारिणा। पिबेद् गुडेन मिश्रं वा लिह्यान् मूत्रविघातजित्।" इति एतत् संवादात्। अत्र ऊषण पिप्पली। गुडोपदंशान् वा लिह्यादेतानिति एतान् पृथक् पृथक् पाटल्यादिक्षारान् गुडोपदंशान् गुड़मिश्रान् वा लिह्यात्। डल्वनस्तु मतिमानित्यत्र मदिरामिति पाठं तथा गुडेन मिश्रानित्यत्र गुड़ोपदंशानिति पाठश्चानार्षमाह॥ २॥

त्रिफलेत्यादि।—सुश्रुतस्य। अत्रापि पानं क्षारोदकेनेत्यनुवर्त्तयति कार्त्तिकः। अन्ये तु "अभयामलकाक्षाणां कल्कं बदरसम्मितम्। अम्भसा लवणोपेतं पिबेन्मूत्ररुजापहम्" इति वचनं मूत्रकृच्छ्रप्रतिषेधे सुश्रुतेनोक्तम्। अतस्तद्दर्शनादत्राप्यम्भसैव पानम्, तथा मिलित्वाष्टमाषक मानञ्चेत्याहुः। त्रिफलाकल्क माषा ६, सैन्धव-माषा २। द्वितीययोगे तान्त्रवस्रुतमिति वस्त्रगालितम्। मधुयोगादप्ययं योगः पेयः। यदाह वाग्भटः—"स्वरसं कण्टकार्य्या वा पाययेन्माक्षिकान्वितम्" इति॥ ३॥

जल इत्यादि।—सुश्रुतस्य। अत्र कुङ्कुमकल्कं शीतकषायविधिना जले पर्य्युषितं प्रातर्वस्त्रस्रुतं सक्षौद्रं पिबेत्। "पिबन् कुङ्कुमकर्षं वा मधूदकसमाप्लुतम्। रात्रिपर्य्युषितं प्रातस्तथा सुखमवाप्नुयात्" इति पाठान्तरं सुश्रुतटीकाकृतः पठन्ति; व्याख्यानयन्ति च,—"कुङ्कुमकर्षं मधूदकाभ्यामाप्लाव्य रात्रौ स्थाप्यं ततः पातव्यम्" इति। सतैलमित्यादि द्वितीयो योगः सुश्रुतस्यैव। वाशब्दः पूर्वयोगापेक्षया। क्षारवद्वा परिस्रुतमिति, परिस्रुतं पाटलाभस्म किं विशिष्टं क्षारवत् यवक्षारयुक्तं पिबेदिति केचिद् व्याचक्षते। अन्ये तु क्षारवत् पानीयक्षारमिव सप्तकृत्वः परिस्रुत

सुरां सौवर्च्चलवतीं मूत्राघाती पिबेन्नरः।
दाड़िमाम्लयुतं मुख्यमेलाबीजं सनागरम्।
पीत्वा सुरां सलवणां मूत्राघाताद्विमुच्यते ॥ ५ ॥
पिबेच्छिलाजतु क्वाथे गणे वीरतरादिके।
रसं दुरालभाया वा कषायं वासकस्य वा ॥ ६ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः।
गुड़प्रगाढ़ं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्यते तत् ॥ ७ ॥
नलकुशकाशेक्षुशिफां क्वथितां प्रातः सुशीतलां ससिताम्।
पिबतः प्रयाति नियतं मूत्रग्रह इत्युवाच कचः ॥ ८ ॥

---

पाटलाभस्म तेन सहितं पिबेदित्याहुः। युक्तञ्चैतत्, यदाह वाग्भटः—"सतैलं पाटलाक्षारं सप्तकृत्वोऽथवा स्रुतम्" इति। सुश्रुतेऽपि मूत्रकृच्छ्रप्रतिषेधे—"पलाश-क्षारमाहृत्य सप्तकृत्वः परिस्रुतम्" पिबेन्मूत्रविकारघ्नं ससृष्टं तैलमात्रया।" इति पठ्यते तैलस्य मात्रया स्तोकतैलेनेत्यर्थः। इति। यथामात्रां खादेद् बुभुक्षित इति ॥४॥

सुरामित्यादि।—सुश्रुतस्य। पिबेन्नर इत्यन्त एक एवायं योगः। वाग्भटे-ऽपि "सौवर्चलाढ्यां मदिरां पिबेन्मूत्ररुजापहाम्" इत्येवोक्तम्। दाड़िमेत्यादि नाग-रान्तो द्वितीयो योगः। दाड़िमाम्लयुतमिति दाड़िमरसयुतम्। रसाभावे तु क्वाथः। मुख्यमित्येलाबीजविशेषणम्। पीत्वा सुरां सलवणामिति तृतीयो योगः। सलवणामिति ससैन्धवाम्। वस्तुतस्तु दाड़िमाम्लयुता मुख्यामेलाजीरकनागरैरित्य-नेन सुरामिति सम्बध्यते। "पीत्वा सुरां सलवणाम्" इत्येव पाठः सुश्रुते पठ्यते टीकाकारैश्च व्याख्यातः। तस्मात् दाड़िमाम्लादि सलवणामित्यन्त एक एवायं योगो युक्तः। दाड़िमाम्लामिति दाड़िमयोगादम्लाम्। मुख्यां सुरामिति पैष्टिकीम् ॥ ५ ॥

पिबेदित्यादौ।—वीरतरादिगणक्वाथे शिलाजतु प्रक्षिप्य पिबेदित्यर्थः। अत्र व्याख्यौ शिलाजतुनोऽत्यन्तयौगिकत्वेन दुरालभाक्वाथे वासकक्वाथेऽपि शिलाजतु प्रक्षिपन्ति ॥ ६ ॥

त्रिकण्टकेत्यादि।—योगत्रयम्। गुड़प्रगाढमिति पूर्वेण योगद्वयेन सम्बध्यते। त्रिकण्टकादिसिद्धं वा तृणपञ्चमूलसिद्धं वा पयो गुड़प्रगाढं हितम्। सघृतं पय इति तृतीयो योगः ॥ ७ ॥

नलेत्यादौ।—शिफा मूलम्, तच्च नलादिभिः प्रत्येकं सम्बध्यते। कचः बृह-

गोधावत्या मूलं क्वथितं घृततैलगोरसैर्मिश्रम्।
पीतं निहन्त्यचिराद्विनन्ति मूत्रस्य सङ्घातम्॥ ९॥
जलेन खदिरीबीजं मूत्राघाताश्मरीहरम्।
मूलं रुद्रजटायाश्च तक्रपीतं तदर्थकृत्॥ १०॥
मूत्रे विबन्धे कर्पूर-चूर्णं लिङ्गे प्रवेशयेत्॥ ११॥
शृतशीतपयोऽश्नाशी चन्दनं तण्डुलाम्बुना।
पिबेत् सशर्करं श्रेष्ठमुष्णवाते सशोणिते॥
शीतोऽवगाहः श्चावस्तेरुष्णवातनिवारणः।
कुष्माण्डकरसश्चापि पीतः सक्षारशर्करः॥ १२॥
स्त्रीणामतिप्रसङ्गेन शोणितं यस्य सिच्यते।
मैथुनोपरमश्चास्य बृंहणीयो हितो विधिः॥ १३॥
खगुप्ताफलमृद्वीकाकृष्णेक्षुरसितारजः।
समांशमर्द्धभागानि क्षीरक्षौद्रघृतानि च॥

---

स्रुतेः पुनः। गोधावती गोहालिया इति ख्याता। गोरसोऽत्र तक्रम्॥ ८। ९॥

जलेनेत्यादौ।—खदिरीबीजमशोकबीजमित्याहुः॥ १०॥

मूत्र इत्यादौ।—लिङ्ग इति लिङ्गरन्ध्रे श्लक्ष्णदूर्वाकाण्डादिना च कर्पूररज प्रक्षेपः। एवं स्त्रीयोनावपि, लिङ्गवचनस्य सामान्यवचनत्वात। शृतेत्यादौ।—श्वेत चन्दनमिति योज्यम्, तेन श्वेतचन्दनमित्यर्थः। शृतशीतपयसा अन्नभोजनशील। श्चावस्तेरिति वस्तिभागपर्यन्तम्। कुष्माण्डरस कुष्माण्डमञ्जिकास्वरस॥ ११॥

मूत्रदोषप्रसङ्गेन मूत्रमार्गप्रवृत्तस्य रक्तस्यापि विधानमुपदिशन्नाह स्त्रीणा मित्यादि।—सुश्रुतस्य। सुश्रुतेऽमु यन्थ कार्त्तिककुण्डो न पठति, शुक्रक्षय लिङ्गैकैवोक्तत्वात्। केचिदस्तु प्रकरणान्तरत्वात् शिष्यहितैषितया पठति॥ १२॥ १३॥

खगुप्तेत्यादौ।—खगुप्ताफलं शूकशिम्बीबीजम्। मृद्वीका द्राक्षा। कृष्णा पिप्पली, न तु कृष्णेति इक्षुरकविशेषणम्, सुश्रुते पिप्पलीपाठात्। इक्षुरकः कोकिलाक्ष, तस्य बीजम्। सिता शर्करा। रजश्चूर्णम्। अर्द्धभागानि क्षीरक्षौद्रघृतानि चेति

सर्वं सम्यग्विमथ्याथ समानं क्षौद्रं पयः पिबेत्।
हन्ति शुक्राशयोत्थांश्च दोषान् वन्ध्यासुतप्रदम्॥ १४॥

चित्रकाद्यं घृतम्—

चित्रकं शारिवा चैव बला कालानुशारिवा।
द्राक्षाविशालापिप्पल्यस्तथा चित्रफला भवेत्॥
तथैव मधुकं दद्याद् दद्यादामलकानि च।
घृताढ़कं पचेदेभिः कल्कैरक्षसमन्वितैः॥
क्षीरद्रोणे जलद्रोणे तत् सिद्धमवतारयेत्।
शीतं परिस्रुतञ्चैव शर्कराप्रस्थसंयुतम्॥
तुगाक्षीर्य्याश्च तत् सर्वं मतिमान् प्रतिमिश्रयेत्।
ततो मितं पिबेत् काले यथा दोषं यथाबलम्॥
वातरेताः पित्तरेताः श्लेष्मरेताश्च यो भवेत्।
रक्तरेता ग्रन्थिरेताः पिबेदिच्छन्नरोगिताम्॥
जीवनीयञ्च वृष्यञ्च सर्पिरेतन्महागुणम्।
प्रजाहितञ्च धन्यञ्च सर्वरोगापहं शिवम्॥
सर्पिरेतत् प्रयुञ्जाना स्त्री गर्भं लभतेऽचिरात्।
असृग्दोषान् जयेच्चापि योनिदोषांश्च संहतान्।
मूत्रदोषेषु सर्वेषु कुर्य्यादेतच्चिकित्सितम्॥ १५॥

इति मूत्राघातचिकित्सा।

---

समुदितचूर्णात् क्षीरादीनि प्रत्येकमर्द्धभागानि। सुश्रुते पुनरयं योगोऽन्यथा पठ्यते,—"क्षौद्रार्द्धभागः कर्त्तव्यो भागः स्यात् क्षीरसर्पिषोः। शर्करायाश्च चूर्णानि द्राक्षाचूर्णञ्च तत्समम्। स्वयगुप्ताफलञ्चैव तथैवेक्षुरकस्य च। पिप्पलीनां तथा चूर्णमर्द्धभागं प्रदापयेत् तदैकध्यं समानीय खजनाभिप्रमथ्य च। तस्य माषितञ्च चूर्णं लिह्यात् क्षीरं ततः पिबेत्।" इति॥ १४॥

चित्रकमित्यादि।—सुश्रुतस्य। कालानुशारिवा तगरपादिका। विशाला गोरक्षकर्कटी। विशालेति पाठे काष्ठपाटला, अपरस्तु विशालवैव। चित्रफला

## अथाश्मरी-चिकित्सा।

वरुणस्य त्वचं श्रेष्ठां शुण्ठीगोक्षुरसंयुताम्।
यवक्षारगुडं दत्त्वा क्वाथयित्वा पिबेद्धिताम्।
अश्मरीं वातजां हन्ति चिरकालानुबन्धिनीम्॥ १॥

वीरतर्वादिगणः—

वीरतरः सहचरौ दर्भो वृक्षादनी नलः।
गुन्द्राकाशकुशावश्मभेदमोरटटुण्टुकाः॥
कुरुण्टका च वशिरो वसुकः साग्निमन्थकः॥
इन्दीवरी श्वदंष्ट्रा च तथा कपोतवङ्कक:॥
वीरतरादिरित्येष गणो वातविकारनुत्।
अश्मरीशर्करामूत्रकृच्छ्राघातरुजापहः॥ २॥

---

गोडुम्बाककर्कटीभेद। तुगाक्षीर्य्यो इत्यत्र प्रस्थसयुतामित्येतत् समासप्रविष्टमप्याकृष्य सम्बन्धनीयम्। काले जीर्णान्नलक्षणे। यथादोषं यथानलमिति मिलितदोषापि बलानुरूपम्, सुश्रुते एतद् घृतात् पूर्वमतिबलनाम घृतमुक्तम्। तेन मधिरतन्महा बलामित्यपि घृतस्यास्य नामेति टीकाकृतः॥ १५॥

इति मूत्राघातचिकित्साविवृतिः।

---

मूत्रविरोधित्वसामान्यादश्मरीचिकित्सितमुच्यते वरुणस्येत्यादि।—श्रेष्ठामिति कीटाद्यनुपहताम्। यवक्षारगुडौ प्रक्षेप्यौ॥ १॥

वीरतर इत्यादौ।—वीरतरः शरः, सहचरी झिण्टीद्वय पीतनीलपुष्पभेदात, दर्भ उलुयाढण, वृक्षादनी वन्दाकः, गुन्द्रा गुलुञ्चः, मोरटमिक्षुमूल, टुण्टुक श्योणाकः, कुरुण्टिका श्रीहस्तिनी, ब्रह्मदत्तस्तु कृष्णसूक्ष्मफला मस्तकमञ्जरी दक्षिणदेशे सितवराख्येत्याह। इन्दीवरः चुंश्राकः। वशिरः सूर्य्यावर्त्तभेद, वसुको वसुहट्टः; कपोतवङ्ककः कण्डइ इति ख्यातः, स च शिरीषसदृशः स्वल्पपत्र, स्वल्पविटपः। गणत्वादनेन सर्वकल्पना॥ २॥

गुडूच्यग्निमन्थपाषाणभिद्वृषवरुणगोक्षुरैः।
अभयारग्वधफलैः क्वाथं कुर्य्याद्विचक्षणः॥
रामठक्षारलवणचूर्णं दत्त्वा पिबेन्नरः।
अश्मरीमूत्रकृच्छ्रघ्नं पाचनं दीपनं परम्।
हन्यात् कोष्ठाश्रितं वातं कट्यूरुमुदमेढ्रगम्॥ ३॥

पाषाणभेदाद्यं घृतम्—

पाषाणभेदो वसुको वशिरोऽश्मन्तकस्तथा।
शतावरी श्वदंष्ट्रा च बृहती कण्टकारिका॥
कपोतवङ्कार्त्तगलकाञ्चनोशीरगुन्द्रकाः।
वृक्षादनीभल्लूकश्च वरुणः शाकजं फलम्॥
यवाः कुलत्थाः कोलानि कतकस्य फलानि च।
ऊषकादिप्रतीवापमेषां क्वाथे शृतं घृतम्॥
भिनत्ति वातसम्भूतामश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूः पेयानि कषायाणि पयांसि च।
भोजनानि च कुर्वीत वर्गेऽस्मिन् वातनाशने॥ ४॥

---

गुडूचीत्यादौ।—पाषाण पाषाणभेदौ॥ ३॥

पाषाणभेद इत्यादिः—सुश्रुतस्य। अश्मन्तकोऽश्मलोटक कोविदारसदृशपत्र। ...गल चाकडा इति ख्यात'। शीगल इत्यन्ये काञ्चनो जलजी विटपश्चीरित ...। गुन्द्रको गुन्दु'। भल्लूकः श्योनाकशाक कर्कशमसृणपृष्ठोदर ...' प्रायो मरुदेशे भवति तस्य फलम्। कतक तोयप्रसादनफल प्रायो ...घे भवति। ऊषकादिप्रतिवापमिति ऊषकादिरग्रे वक्ष्यमाणस्तत्कल्कः। एषा- ...ति पाषाणभेदादीनाम्। घृतसाधनौषधवर्गेण क्षारादयोऽपि साध्या इत्याह ...रानिति पानीयक्षारान्। यदि चूर्णरूपः क्षारः पीयते, तदा वस्तिशोधनद्रवेण ...लादिना। क्षारोदकपानपक्षे तु क्षारस्य कर्षद्वय कर्षत्रय वा षड्गुणेन जलेन बहुश- ...स्राव्य शृतं पेयम्। पेयानीति यूषरसादीनि, पेयाश्चेति पाठेऽपि यूषादीनि- ...र्थः। यूषांश्चेत्यपि पाठान्तरम्। पेयाश्चेति तु पाठः सुश्रुतपुस्तकेषु न दृश्यते, तद्दो-

ऊषकादिः—

ऊषकं सैन्धवं हिङ्गु काशीशद्वयगुग्गुलु ।
शिलाजतु तुत्थकञ्च ऊषकादिरुदाहृतः ॥
ऊषकादिः कफं हन्ति गणो मेदोविशोधनः ।
अश्मरीशर्करामूत्रशूलघ्नः कफगुल्मनुत् ॥ ५ ॥

कुशाद्यं घृतम्—

कुशः काशः शरो गुल्म उत्कटो मोरटोऽश्मभित् ।
दर्भो विदारी वाराही शालिमूलं त्रिकण्टकः ॥
भल्लूकः पाटली पाठा पत्तूरोऽथ कुरुण्टकः ।
पुनर्नवे शिरीषश्च क्वथितास्तेषु साधितम् ॥
घृतं शिलाह्वमधुकबीजैरिन्दीवरस्य च ।
त्रपुसैर्वारुकादीनां बीजैश्चावापितं शृतम् ॥
भिनत्ति पित्तसम्भूतामश्मरीं क्षिप्रमेव च ।

काङ्क्षिश्च न व्याख्यातः । भोजनानीति विलेपीभक्तपलेह्यानि , यवाग्वाश्च पृथगुपादान विशेषेण मूत्रप्रवर्त्तकतया प्राधान्यख्यापनार्थम । वर्गेऽस्मिन् वातनाशन इति पाषाणभेदादिकतकान्तक्वाथ्यस्य द्रव्यवर्गे । ऊषकादिकन्तु प्रतीवापद्रव्य कफहरमिति शक्तिविशेषसाधनार्थं संयोज्यमानं क्षारादिष्वेव प्रक्षेपविधया देयमित्याह । अश्मर्यां हन्ति नाप्युक्तः यथा,—"कुर्य्यात क्षारादिक क्वाथ्यै तस्मिन् क्षेपमवापकै" इति । क्षेपमिति प्रक्षेप्यम् , अवापकैरिति आवापरूपैः कल्कद्रव्यैरित्यर्थ , कर्षाभद्रा गुराधाकुस्वलम् । एव वर्गेऽस्मिन् पित्तनाशन इत्यादावपि व्याख्येयम् ॥ ४ ॥

ऊषकादिवर्गमाह ऊषकमित्यादि ।—सुश्रुतस्य । ऊषकं क्षारमृत्तिका तद्भव लवणमित्यन्ये । काशीशद्वयमिति धातुकाशीशं पुष्पकाशीशञ्च , तत्राद्य भस्मसदृश किञ्चिदम्ल लवणरसञ्च, द्वितीयन्त्वीषत्पीतं कषायरसम् तुत्थक तुतिया इति प्रसिद्धम् ॥ ५ ॥

कुश इत्यादौ ।—सुश्रुतस्य मोरट इक्षुमूलं ; गुन्द्र गुलुञ्च , दर्भ उलुया वाराही वाराहीकन्दः, तदभावे चर्मकारालुक, भल्लूकः श्योनाक. ; पत्तुरः शालिञ्च ,

क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् पित्तनाशने ॥ ६ ॥

वरुणाद्यं घृतम्—

गणे वरुणकादौ च गुग्गुल्वेलाहरेणुभिः।
कुष्ठमुस्ताह्वमरिचचित्रकैः ससुराह्वयैः ॥
एतैः सिद्धमजासर्पिरूषकादिगणेन च।
भिनत्ति कफसम्भूतामश्मरीं क्षिप्रमेव तु।
क्षारान् यवागूः पेयाश्च कषायाणि पयांसि च।
भोजनानि प्रकुर्वीत वर्गेऽस्मिन् कफनाशने ॥ ७ ॥

वरुणादिगणः—

वरुणोऽर्त्तगलः शिग्रुतर्कारीमधुशिग्रुकाः।
मेषशृङ्गीकरञ्जौ च विम्बाग्निमन्थमोरटाः ॥
शैरेयौ वशिरो दर्भौ वरी वसुकचित्रकौ।
विल्वश्चैवाजशृङ्गी च बृहतीद्वयमेव च ॥

---

पुनर्नवे पुनर्नवाद्वयम्। एषां सर्वेषां क्वाथः, शिलाह्वादीनां कल्कः। शिलाह्वमधुकबीजैरित्यत्र बीजपदं समासप्रविष्टमपि इन्दीवरस्येत्यनेन सह सम्बन्धनीयं, न तु बीजो बीजकः पीतशालः, वाग्भटसंवादात्। यथा,—पिष्टैर्न त्रपुषादीनां बीजैर्नन्दीवरस्य च। मधुकेन शिलाजेन तत् पित्ताश्मरिनाशनम्" इति। इन्दीवरश्च पुष्पाकः। एतेन "मधुकः क्षतह्रस्वत्वाद्बीजो बीजक उच्यते" इत्यपि वृन्दवचनमबोधान्यस्तमेव। अस्यार्थः—ह्रस्वमधुकशब्देन यष्टिमधुकमेवोच्यते, न तु मधुकतरु, तस्य बीजेनाव्यवहारात् बीजो बीजक इति। आवापितं कल्कितम् ॥ ६ ॥

गण इत्यादि।—सुश्रुतस्य। अत्र वरुणादिगणेन क्वाथः, शेषैश्च कल्कः, उषकादिगणेन कल्करूपश्च सिद्धमित्यर्थः। अजासर्पिरित्यत्र वाग्भटे तु घृतमित्येवोक्तम् ॥ ७ ॥

यथा "भिनत्ति कफजामाशु साधितं घृतमश्मरीम्" इति। वरुणादिगणे अर्त्तगलः खगगड़ः होगल इत्यन्ये अर्जुन इति तु भानुमती। तर्कारी जयन्ती, अन्यत्वं;

वरुणादिगणो ह्येष कफमेदोनिवारणः ।
विनिहन्ति शिरःशूलं गुल्माद्यन्तरविद्रधीन् ॥ ८ ॥
वरुणत्वक्कषायस्तु पीतस्तु गुड़संयुतः ।
अश्मरीं पातयत्याशु वस्तिशूलविनाशनः ॥ ९ ॥
यवक्षारं गुड़ोपेतं पिबेत् पुष्पफलोद्भवम् ।
रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥ १० ॥
पिबेद्वरुणमूलत्वक् क्वाथं तत् कल्कसंयुतम् ।
क्वाथश्च शिग्रुमूलोत्थः कदुष्णोऽश्मरिनाशनः ॥ ११ ॥
नागरवरुणगोक्षुरपाषाणभेदकपोतवङ्कजः क्वाथः ।
गुड़यावशूकमिश्रः पीतो हन्त्यश्मरीमुग्राम् ॥ १२ ॥
वरुणत्वक्शिलाभेदशुण्ठीगोक्षुरकैः कृतः ।
कषायः क्षारसंयुक्तः शर्कराश्च भिनत्त्यपि ॥ १३ ॥
श्वदंष्ट्रैरण्डपत्राणि नागरं वरुणत्वचम् ।
एतत् क्वाथवरं प्रातः पिबेदश्मरिभेदनम् ॥ १४ ॥

मूलं श्वदंष्ट्रेक्षुरकोरुबूकात्
क्षीरेण पिष्टं बृहतीद्वयाच्च ।
आलोड्य दध्ना मधुरेण पेयम्
दिनानि सप्ताश्मरिभेदनार्थम् ॥ १५ ॥

---

मधुशिग्रुः रक्तशोभाञ्जनः ; करञ्जौ करञ्जलाटाकरञ्जौ , बिम्बी तेलाकुचा , मोरटमूलम्, अङ्कोलपुष्पमिति भानुमती, हस्तिकर्णपलाश इत्यन्ये । सैरीयो पीतनीलपुष्पभिण्टीद्वयं , दर्भः कुशः उलया , वरी शतावरी ; वसुको वसुहट्ट इति ख्यातः , अजशृङ्गी आवर्त्तकिका ॥ ८ ॥ ९ ॥

पुष्पफलोद्भव रसमिति पक्वकुष्माण्डरसम् ॥ १० ॥

पिबेदित्यादि ।—पिबेदश्मरीभेदनमित्यन्तं स्पष्टम् ॥ ११—१४ ॥

मूलमित्यादि बृहतीद्वयान्त एको योगः । इक्षुरकः कोकिलाक्षः । सर्वं मिलित्वा माषकचतुष्टयं दुग्धेन पिष्ट्वा अनम्लदध्ना पेयम् ॥ १५ ॥

पक्वेक्ष्वाकुरसः क्षारः सितायुक्तोऽश्मरीहरः।
पाषाणरोगपीड़ां सौवर्चलयुक्ता सुरा जयति।
तद्वन्मधुदुग्धयुक्ता त्रिरात्रं तिलनालभूतिश्च॥ १६॥

एलादिः—

एलोपकुल्यामधुकाश्मभेदकौन्तीश्वदंष्ट्रावृषकोरुवूकैः।
क्वाथं पिबेदश्मजतुप्रगाढ़ं सशर्करं चाश्मरिमूत्रकृच्छ्रे॥ १७॥
त्रिकण्टकस्य वीजानां चूर्णं माक्षिकसंयुतम्।
अविक्षीरेण सप्ताहं पिबेदश्मरिनाशनम्॥ १८॥
शुक्राश्मर्यान्तु सामान्यो विधिरश्मरिनाशनः॥ १९॥

पाषाणभेदाद्यं चूर्णं घृतञ्च—

पाषाणभेदो वृषकः श्वदंष्ट्रा पाठाभयाव्योषशटीनिकुम्भाः।
हिंस्राखराश्वासितमारकाणामिर्वारुकाच्च त्रपुषाच्च वीजम्॥
उपकुञ्चिकाहिङ्गु सवेतसाम्लं स्याद् द्वे वृहत्यौ हवुषा वचा च।
चूर्णं पिबेदश्मरिभेदि पक्वं सर्पिश्च गोमूत्रचतुर्गुणं तैः॥ २०॥

कुलत्थाद्यं घृतम्—

कुलत्थसिन्धूत्थविडङ्गसारं सशर्करं शीतलियावशूकम्।
वीजानि कुष्माण्डकगोक्षुराभ्यां घृतं पचेत्रा वरुणस्य तोये॥

---

पक्वेत्यादौ।—इक्ष्वाकुस्तिक्तालावृस्तस्या मज्जिकाम्बरसः। पाषाणरोगोऽश्मरी। तिलनालभूतिस्तिलनालक्षारः॥ १६॥

एलेत्यादौ।—उपकुल्या पिप्पली। अत्र शोधितशिलाजतुनो माषकत्रयं चतुष्टय वा प्रक्षेप्यमित्याहुः॥ १७॥

शुक्राश्मर्यान्तु सामान्यो विधिरिति अश्मरीमात्रसाधारणविधिः॥ १८॥ १९॥

पाषाणभेद इत्यादौ।—निकुम्भा दन्ती; खराश्वा अजमोदा; सितमारकः शालिञ्चः; उपकुञ्चिका कृष्णजीरकम्। चूर्णं पिबेदिति विशेषानभिधानाज्जलेनैव। तैः पाषाणभेदादिभिरेव कल्करूपैः पक्वं सर्पिश्च पेयमित्यन्वयः॥ २०॥

कुलत्थघृते शीतली [illegible]ाक्षोपड़ः; तथाच रत्नकोष "शीतली शीतकुम्भी च

दुःसाध्यसर्वाश्मरिमूत्रकृच्छ्रं मूत्राभिघातञ्च समूत्रबन्धम् ।
एतानि सर्वाणि निहन्ति शीघ्रं प्ररूढवृक्षानिव वज्रपातः ॥२१॥

शरादिपञ्चमूलादि घृतम्—

शरादिपञ्चमूल्या वा कषायेण पचेद्घृतम् ।
प्रस्थं गोक्षुरकल्केन सिद्धमद्यात् सशर्करम् ॥
अश्मरीमूत्रकृच्छ्रघ्नं रेतोमार्गरुजापहम् ॥ २२ ॥

वरुणघृतम्—

वरुणस्य तुलां क्षुण्णां जलद्रोणे विपाचयेत् ।
पादशेषं परिस्राव्य घृतप्रस्थं विपाचयेत् ॥
वरुणं कदली विल्वं तृणजं पञ्चमूलकम् ।
अमृता चाश्मजं देयं बीजञ्च त्रपुषोद्भवम् ॥
शतपर्वा तिलक्षारं पलाशक्षारमेव च ।
यूथिकायाश्च मूलानि कार्षिकाणि समावपेत् ॥
अस्य मात्रां पिबेज्जन्तुर्देशकालाद्यपेक्षया ।
जीर्णे तस्मिन् पिबेत् पूर्वं गुडं जीर्णन्तु मस्तुना ।
अश्मरीं शर्कराञ्चैव मूत्रकृच्छ्रञ्च नाशयेत् ॥ २३ ॥

---

शङ्कपुष्पा जलोद्भवा । कालानुशारिवा तस्या प्रतीचे नतवद्गुणे ।' इति । अत्र
व शीतलीयावशूक श्रियतिश्रवचार , स तु स्फटिकसैन्धवसद्दाश इत्याह अः
क्षारम् पूर्वेणैव । शर्करापि कल्करूपा ॥ २१ ॥

शरादिपञ्चमूलमित्यत्र शरादीति विशेषणात् चरकोक्त तृणपञ्चमूलं ग्राह्य
यथा,—"शरेक्षुदर्भकाशानां शालीनां मूलमेव च" इति । अत्र शर्करा प्रक्षेप्या
अशब्द पूर्वयोगापेक्षया ॥ २२ ॥

वरुणादिघृते ।- कदल्या फलमाम मूलं वा अश्मजं शिलाजतु , त्रपु
मायाम्बुफलम , शतपर्वा वंशस्तस्य नेली मूलं वा । तस्मिन्निति घृते, पूर्वमिति
भोजनात् पूर्वम ॥ २३ ॥

वीरतराद्यं तैलम्—

व्रणाधिकारे यत् तैलं सैन्धवाद्यं प्रकीर्त्तितम् ।
तत् तैलं द्विगुणं चीरं पचेत् वीरतरादिना ॥
क्वाथेन पूर्वकल्केन साधितन्तु भिषग्वरैः ।
एतत् तैलवरं श्रेष्ठमश्मरीणां विनाशनम् ॥
मूत्राघाते मूत्रकृच्छ्रे पिच्छिते मथितेऽपि वा ।
अन्ये अमाभिपन्ने च सर्वथैव प्रशस्यते ॥ २४ ॥

वरुणाद्यं तैलम्—

त्वक्पत्रपुष्पमूलस्य वरुणात् सचिकण्टकात् ।
कषायेण पचेत् तैलं वस्तिनास्थापनेन च ।
शर्कराश्मरिशूलघ्नं मूत्रकृच्छ्रविनाशनम् ॥ २५ ॥
शल्यवित् तामशाम्यन्तीं प्रत्याख्याय समुद्धरेत् ॥ २६ ॥
वायुच्छिन्नाङ्गुलिभ्यान्तु गुदमेद्रान्तरीकृताम् ।
मेवन्याः सव्यपार्श्वे च यवमात्रं विमुच्य तु ।
व्रणं कृत्वाश्मरीमात्रं कर्षेत् तां शस्त्रकर्मवित् ॥

---

व्रणाधिकार इत्यादि ।—तत् तैलमिति व्रणाधिकारोक्तविधिना सिद्धं तैलं पुनरपि द्विगुणं चीरं दत्त्वा वीरतरादिक्वाथेन चतुर्गुणेन द्विगुणेन वा, पूर्वकल्केनेति सैन्धवाद्यकल्केन पचेत् । अन्ये तु केवलं तैलमेव द्विगुणचीरादिना पचेदिति वदन्ति, तत्तु न व्यवहारसिद्धम् । यद्यपि सैन्धवाद्यतैले तिलतैलमेरण्डतैलञ्चोक्तं तथाप्यत्र उत्तरवस्त्यादौ तिलतैलस्यैव सूक्ष्मस्रोतोऽनुसारित्वेन यौगिकत्वादग्रहण-मित्याहुः । पिच्छित इत्यागन्तुकव्रणविशेषे ; मथित इति चूर्णिताख्य भग्ने ॥ २४ ॥

त्वक्पत्रेत्यादि ।—क्वाथार्थं वरुणस्य यथालाभं त्वक्पत्रमूलपुष्पं पल ३२, गोक्षुर पल ३२, पाप श्र ६४, शेष श्र १६ । अकल्कमिदं तैलम् ॥ २५ । २६ ॥

सव्यपार्श्वं इति वामपार्श्वं । निःशेषमश्मरीं कुर्य्यादिति सशेषायान्तु पुनरप्यश्मरी-वृद्धिसम्भवात् । वस्तौ रक्तञ्च निर्हरेदिति वस्तिगतरक्तमित्यर्थः । तथा सति

भिन्नेऽपि वस्तौ त्वशामान्मृतुरः स्यादश्मरीं विना।
निःशेषामश्मरीं कुर्य्यात् वस्तौ रक्तञ्च निर्हरेत्।
हृताश्मरीकमुष्णाम्बु गाहयेद्भोजयेच्च तम्।
गुड़ं मूत्रविशुद्ध्यर्थं मध्वाज्याक्तं व्रणं ततः॥
दद्यात् साज्यां त्र्यहं पेयां साधितां मूत्रशोधिभिः।
आदशाहं ततो दद्यात् पयसा मृदुभोजनम्॥
स्वेदयेद्यवमध्वाढ्यं कषायैः क्षालयेद्व्रणम्॥
प्रपौण्डरीकमञ्जिष्ठायष्टीलोध्रैश्च लेपयेत्॥
एतैश्च सनिशैः सिद्धं घृतमभ्यञ्जने हितम्।
अप्रशान्ते तु सप्ताहाद् व्रणे दाहोऽपि चेष्यते।
दैवान्नाड़े तु या लग्ना तां विपाट्यापकर्षयेत्॥ २७॥

इत्यश्मरीचिकित्सा।

---

वस्तिरसृजा न प्रपूर्य्येत इति भावः। हृताश्मरीमित्यादौ गुडं भोजयेदित्यन्वयः मूत्रशोधिभिरिति तृणपञ्चमूलादिभिः। तत इति त्र्यहादूर्द्ध्वम्, आदशाहं दशाहं पर्य्यन्तम्। पयसा दुग्धेन मृदु ओदनं कोमलं भक्तं दद्यात्; तथा स्वेदयेत् आदशाहमित्यनेन दशाहाभ्यन्तर एव स्वेदोऽप्युक्तः, उक्तं हि 'दशरात्रञ्च नम प्रमत्तं स्वेदयेत्" इति। स च स्नेह एव स्वेदः रक्तपित्तानुगतत्वादार्य्यैरिति गयदासः। भोजेऽप्युक्तम् "स्नेहस्वेदं विधिज्ञस्तु कुर्य्याद् वातरुजापहम्" इति यव मध्वाढ्यमिति मृदुभोजनमित्यस्य विशेषणम्, यवकृतभक्ष्यप्रधानं मधुप्रधानञ्च त्वर्थः। कषायैः क्षालयेद्व्रणमिति दशाहादूर्द्ध्वमेव क्षीरिवृक्षकषायैः क्षालनं बोध्यं भोजसवादात्। सनिशैरित्यनेन घृतसाधनद्रव्यं सम्बध्यते, न तु लेप इति सुश्रुतसंवादात्॥ २७॥

इत्यश्मरीचिकित्साविवृतिः॥

## अथ प्रमेहचिकित्सा।

कुशावलेहः—

वीरणञ्च कुशः काशः क्रष्णेक्षुः खागड़स्तथा।
एषां दशपलान् भागान् जलद्रोणे विपाचयेत्॥
अष्टभागावशेषन्तु कषायमवतारयेत्।
खण्डप्रस्थं समालोड्य लेहवत् साधु साधयेत्॥
अवतार्य्य ततः पश्चाच्चूर्णानीमानि दापयेत्।
मधुकं कर्कटीवीजं कर्व्वारुं त्रपुषं तथा॥
शुभामलकपत्राणि एलात्वङ्नागकेशरम्।
वरुणामृतप्रियङ्गूणां प्रत्येकञ्चाक्षसम्मितम्॥
प्रमेहान् विंशतिश्चैव मूत्राघातं तथाश्मरीम्।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम्।
हन्त्यरोचकमेवोग्रं तुष्टिपुष्टिकरस्तथा॥ १॥
श्यामाककोद्रवोद्दालगोधूमचणकाढ़की।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिनां सदा।
जाङ्गलं तिक्तशाकानि यवान्नञ्च श्रमो मधु॥ २॥
पारिजातजयानिम्बवह्निगायत्रीणां पृथक्।
पाठायाः सागुरोः पीताद्वयस्य शारदस्य च॥
जलेक्षुमद्यसिकताशनैर्लवणपिष्टकान्।
सान्द्रमेहान् क्रमाद् घ्नन्ति चाष्टौ क्वाथाः समाक्षिकाः॥३॥

---

अश्मर्य्यनन्तरं वस्तिविकृतिसाम्यात् प्रमेहप्रतिकार उच्यते श्यामाकेत्यादि।— उद्दालो वनकोद्रवः, आढकी तुवरी; यवान्नमिति यवशक्त्वादिकम्। पारिजातेत्यादि। पारिजातः पारिभद्रः; जया जयन्ती; वह्निश्चित्रकः, गायत्री खदिरः, पाठायाः सागुरोरित्येकः क्वाथः। पीताद्वयं हरिद्राद्वयम्। अयमप्येकः। शारदः

दूर्वाकशेरुपूतीककुम्भीकप्लवशैवलम्।
जलेन क्वथितं पीतं शुक्रमेहहरं परम्॥
त्रिफलारग्वधद्राक्षाकषायो मधुसंयुतः।
पीतो निहन्ति फेनाख्यं प्रमेहं नियतं नृणाम्॥ ४ ॥

लोध्राभयाकट्फलमुस्तकानां विडङ्गपाठार्जुनधन्वनानाम्।
कदम्बशालार्जुनदीप्यकानां विडङ्गधात्रीबहुशल्यकानाम्।
चत्वार एते मधुना कषायाः कफप्रमेहेषु निषेवणीयाः॥ ५ ॥

अश्वत्थाच्चतुरङ्गुलान्न्यग्रोधादेः फलत्रयात्।
सजिङ्गीरक्तसाराच्च क्वाथाः पञ्च समाक्षिकाः॥
नीलहारिद्रशुक्लाख्यक्षारमञ्जिष्ठकाह्वयान्।
मेहान् हन्युः क्रमादेते सक्षौद्रो रक्तमेहजित्।
क्वाथः खर्जूरकाश्मर्यतिन्दुकास्थ्यमृताकृतः॥ ६ ॥

लोध्रार्जुनोशीरकुचन्दनाना-
मरिष्टसेव्यामलकाभयानाम्।

सप्तपर्णः। पारिभद्रेत्यादयोऽष्टौ क्वाथाः जलाद्यष्टौ मेहान् क्रमाद्घ्नन्तीत्यन्वयः ॥ १—३ ॥

दूर्वेत्यादौ।—पूतिकः करञ्जः तस्य त्वक्। कुम्भीकः पाङ्गा, प्लवः कैवर्त्तमुस्तकम्। योगेऽत्र मधु प्रक्षिपन्ति वृद्धा मुश्रुतसंवादात्। त्रिफलेत्यादि स्पष्टम्। लोध्रेत्यादि। योगद्वयं वाग्भटस्य, कदम्बेत्यादि योगद्वयं चरकस्य, चक्रेण प्रतिसंस्कृत्य लिखितम्। धन्वनो धामनो, दीप्यको यमानी; शल्यकः खदिरः, बहुशल्य इति खदिरसंज्ञा उक्ता हि "बहुशल्यश्च यम्मोक्तो याज्ञिकः कुष्ठनाशनः" इति। तेनैकदेशोऽपि सञ्ज्ञिनं गमयति यथा भीमो भीमसेनः। उक्तं हि चरके "दार्वी विडङ्गं खदिरो धवश्च" इति। वाग्भटेऽप्युक्तं—"गायत्रीदार्वीक्रिमिजिद्धवानाम्" इति। अन्ये तु शल्यकं मदनफलमाहुः॥ ४ ॥ ५ ॥

पित्तमेहस्य याप्यत्वेन यापनार्थं चिकित्सामाह अश्वत्थादित्यादि।—नीलादिषु पञ्चसु मेहेषु क्रमेण एते पञ्च योगा बोध्याः। अत्र अश्वत्थक्वाथेनैको योगः, चतुरङ्गुलादिति द्वितीयः, न्यग्रोधोडुम्बराश्वत्थप्लक्षमधुकककुभजम्बूद्वयपियालमधुक-

धात्र्यर्जुनारिष्टकवत्सकानाम्
नीलोत्पलानां तिनिशार्जुनानाम् ॥
चत्वार एते विहिताः कषायाः
पित्तप्रमेहे मधुसम्प्रयुक्ताः ॥ ७ ॥

छिन्नावह्निकषायेण पाठाकुटजरामठम् ।
तिक्तां कुष्ठञ्च सञ्चूर्ण्य सर्पिर्मेही पिबेन्नरः ॥ ८ ॥
कदरखदिरपूगक्वाथं क्षौद्रान्विते पिबेत् ॥ ९ ॥
अग्निमन्थकषायन्तु वसामेहे प्रयोजयेत् ॥ १० ॥
पाठाशिरीषदुःस्पर्शमूर्वाकिंशुकतिन्दुकम् ।
कपित्थानां भिषक् क्वाथं हस्तिमेहे प्रयोजयेत् ॥ ११ ॥
म्पिल्लसप्तच्छदशालजानि वैभीतरौहीतककौटजानि ।

---

रोहिणीनकुलकदम्बवदरतिन्दुकशल्लकीलोध्रभल्लातकपलाशनन्दीवृक्षाश्चेति अत्र प्रत्य पाकडि. । ककुभोऽर्जुन । नन्दीवृक्षो गन्धमुण्ड. । अन्य तु न्यग्रोधादिशब्देन भवल्कलमाहुः । फलत्रयादिति चतुर्थ । समञ्जिष्ठारक्तसारादिति ।—जिङ्गी मञ्जिष्ठा । रक्तगैरी रक्तचन्दनम् । अयन्तु पञ्चम । हन्युरिति यापयेयुरि त्यर्थ । किंवा यत्नदृष्टमेदसि पित्तजानामपि साध्यत्वं साध्यास्तु मेदो यदि न प्रदुष्टम्" इति चरकवचनात । शुक्ताख्यमेहोऽम्लमेह । सुश्रुते कालमेहस्थाने अम्लमेहः पठ्यते उक्त हि सुश्रुत निदानस्थाने "अम्लरसगन्धमम्लमेही" इति। तथा च चिकि[illegible]स्थाने "अम्लमेहिनं न्यग्रोधादिकषाय वा पाययेत्" इति। रक्तमेह चिकित्सामाह सर्वांद्र इत्यादिना क्वत इत्यन्तन। अत्र खर्जूरकाश्मर्यौ फल, तिन्दुकस्य च फलास्थि। अमृता गडूची। सुश्रुतेऽपि "शोणितमेहिनं गुडूचीतिन्दुकास्थिकाश्मर्य्यखर्जूरकषायं मधुमधुरम् पाययेत्" इति। लोध्रेत्यादौ।—कुचन्दन रक्तचन्दनं ; अरिष्टो निम्ब ; सेव्यमुशीर, नीलोत्पलानामित्यत्र नीलोत्पलैला इति पाठान्तरं, किन्त्वार्षं न दृष्टं ; तिनिश आङ्कः ॥ ६ ॥ ७ ॥

इदानीमसाध्येष्वपि नातिकर्षहेप यापनार्थं योगानाह छिन्नेत्यादि।—वह्नि श्चित्रकः। पाठा इकुष्ठान्तानां चूर्णं गुडूचीचित्रककषाये प्रक्षिप्य पिबेत्। कदरो विट्खदिरः ; खदिरस्तु तदितरः ; पूगं पूगफलम्। पाठेत्यादौ।—तिन्दुक-

कपित्थपुष्पाणि च चूर्णितानि क्षौद्रेण लिह्यात् कफपित्तमेही
॥ १२ ॥

सर्वमेहहरो धात्र्या रसः क्षौद्रनिशायुतः।
कषायस्त्रिफलादारुमुस्तकैरथवा कृतः॥ १३ ॥

फलत्रिकं दारुनिशां विशालां मुस्तञ्च निःक्वाथ्य निशांशकल्कम्।
पिबेत् कषायं मधुसम्प्रयुक्तं सर्वप्रमेहेषु समुत्थितेषु ॥ १४ ॥

कटङ्कटेरीमधुकत्रिफलाचित्रकैः समैः।
सिद्धः कषायः पातव्यः प्रमेहाणां विनाशनः॥ १५ ॥
त्रिफलादारुदार्व्यब्दक्वाथः क्षौद्रेण मेहहा ॥ १६ ॥
कुटजाशनदार्व्यब्दफलत्रयकृतोऽथवा ॥ १७ ॥

---

कपित्थयोः फल, तिन्दुकस्य तैन्दुफलम्। पाठादिकपित्थान्तमेकमेव पदम्। वातमेहेष्वसाध्येष्वपि चिकित्साविधानमिदं मेहानां चिरानुबन्धित्वेन किञ्चिद्विशेषलाभेन यापनार्थम्। सुश्रुतेऽप्युक्तम् "अत ऊर्द्धमसाध्येष्वपि योगान् यापनार्थं वक्ष्यामः" इति। कम्पिल्लेत्यादौ।—चूर्णानीति विशेष्यपदं द्रष्टव्यम् एव वैभीतके-त्यादावपीति केचित्। अन्ये तु कपित्थपुष्पाणि चेति चकारात् कम्पिल्लादीनामपि कुसुममेव ग्राह्यमित्याहुः। युक्तञ्चैतत्। उक्तं हि वागभटे "शालसप्ताह्वकम्पिल्लवृक्षकाक्षकपित्थजम्। रोहितकं च कुसुम मधुनाऽद्यात् सश्र[illegible]" इति एवं वृद्धवागभटेऽपि शालादीनामिति कुसुममित्येवोक्तम्। कफपित्तमेहीति। कफमेही पित्तमेही चेत्यर्थः॥ ८—१२ ॥

सर्वमेहेत्यादि। अयं योगो वाग्भिविरेकादिशुद्धे ज्ञेयः सुश्रुतसंवादात। धात्र्या रसः स्वरसः, स्वरस एव व्यवहारात् न तु क्वाथ इत्याहुः। कषाय इत्यादि द्वितीययोगेऽपि क्षौद्रनिशायुत इति सम्बन्धनीयम्॥ १३ ॥

फलत्रिकमित्यादौ।—दारुनिशा दारुहरिद्रा ; विशाला गोरक्षकर्कटी। निशांशकल्कमिति।—निशाभागकल्कं तत्सहितमेव त्रिफलादिद्रव्यं निःक्वाथ्य कषायं पिबेदित्येके। अन्ये तु अंशशब्दोऽर्द्धाभिधायी, तेन फलत्रिकादीनां समुदितानामेको भागः, निशायाश्चापरो भागः, एतद्भागद्वयं निःक्वाथ्य कषायं पिबेदित्यर्थः। अपरे तु निशाया अंशश्चतुर्थो भागः समुदितक्वाथ्यापेक्षया, स एव कल्कः प्रक्षेपरूप-

त्रिफलालौहशिलाजतुपथ्याचूर्णञ्च क्षौद्रमेकैकम् ।
मधुनामराखरस इव सर्वान् मेहान् निवारयति ॥१८॥
शालमुष्ककम्पिल्लकल्कमक्षसमं पिबेत् ।
धात्रीरसेन सक्षौद्रं सर्वमेहहरं परम् ॥ १९ ॥

न्यग्रोधाद्यं चूर्णम्—

न्यग्रोधोडुम्बराश्वत्थश्योणाकारग्वधाशनम् ।
आम्रजम्बूकपित्थञ्च पियालं ककुभं धवम् ॥
मधूको मधुकं लोध्रं वरुणः पारिभद्रकम् ।
पटोलं मेषशृङ्गी च दन्ती चित्रकमाढ़की ॥
करञ्जत्रिफलाशक्रभल्लातकफलानि च ।
एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ।
न्यग्रोधाद्यमिदं चूर्णं मधुना सह लेहयेत् ।
फलत्रयरसञ्चानुपिबेन्मूत्रं विशुध्यति ॥
एतेन विंशतिर्मेहा मूत्रकृच्छ्राणि यानि च ।
प्रशमं यान्ति योगेन पिड़का न च जायते ।
न्यग्रोधाद्यमिदन्त्वत्र चाम्रजम्ब्वस्थि गृह्यते ॥ २० ॥

---

यत्र तत्तथेति व्याचक्षते । व्यवहारस्त्वनेनैव । कटङ्कटेरी दारुहरिद्रा । शनेत्यादावपि क्षौद्रेणेत्यनुवर्त्तते । अशनः पीतशालः । दार्वी दारुहरिद्रा । री मुस्तकम् । निश्चलस्तु अब्दस्थाने अग्नीति पठति । व्यवहारस्तु मुस्तके व ॥ १४–१७ ॥

त्रिफलेत्यादि ।—समुदितत्रिफलयैवैको योगः, तेन चत्वारो योगाः । अमरा गुडूची, अयञ्च पञ्चमो योगः । लौहस्य मारितपुटितवज्रादिलौहचूर्णम् । शाल-त्यादौ ।—शालस्य सारः । मुष्कको घण्टापारुलो तस्या मूलम् । काम्पिल्लस्य त्वक् ॥ १८ ॥ १९ ॥

न्यग्रोधादिचूर्णे ।—न्यग्रोधो वटः ; अशनः पीतशालः । आम्रजम्बूकपित्थञ्चेति आम्रजम्बूफलास्थि कपित्थस्य तु फलमित्याहुः । ककुभोऽर्जुनः । धवः स्वनाम-

विकण्टकाद्यं घृतं तैलं यमकञ्च।

विकण्टकाश्मन्तकसोमवल्क-
भल्लातकैः सातिविषैः सलोध्रैः।
वचापटोलार्जुननिम्बमुस्ती-
हरिद्रया दीप्यकपद्मकैश्च ॥
मञ्जिष्ठपाठागुरुचन्दनैश्च
सर्वैः समस्तैः कफवातजेषु।
मेहेषु तैलं विपचेद् घृतन्तु
पित्तेषु मिश्रं त्रिषु लक्षणेषु ॥ २१ ॥

कफमेहहरक्वाथसिद्धं सर्पिः कफे हितम्।
पित्तमेहघ्ननिर्य्यूहसिद्धं पित्ते हितं घृतम् ॥ २२ ॥

धान्वन्तरं घृतम्—

दशमूलं करञ्जौ द्वौ देवदारु हरीतकी।
वर्षाभूर्वरुणो दन्ती चित्रकं सपुनर्नवम् ॥
सुधानीपकदम्बाश्च बिल्वभल्लातकानि च।
शटीपुष्करमूलञ्च पिप्पलीमूलमेव च ॥

---

ख्यातः। मधूकी मधूकसारः। आढ़की तुवरी। करञ्जस्य फलम्। शक्र कुटजः ॥ २० ॥

विकण्टकेत्यादौ।—अश्मन्तकी मानुभाक इति ख्यातः। सोमवल्कः खदिर न तु कट्फल जतूकर्णसंवादात्। सर्वैरित्युक्ते पृथगपि सर्वैः स्नेहसाधनं स्यादत आह समस्तैरिति मिलितैरित्यर्थः, यथालाभपरिहारार्थमिति वा। कफजेषु वातजेषु च मेहेषु तैलम्, पैत्तिकेषु घृतम्, मिश्रं त्रिषु लक्षणेष्विति दोषत्रयलक्षणप्रादुर्भावे सति मिश्रं तैलघृतयमकं पचेदित्यर्थः। त्रिदोषजत्वञ्च कफपित्तमेहेष्वेवानुबन्ध्यानुबन्धकृतं मन्तव्यम्। किंवा सर्वेषामेव मेहानां त्रिदोषजत्वादुद्भूतदोषाविर्भावः कदाचिद्भवतीति ज्ञेयम् ॥ २१ ॥

कफमेहेत्यादौ क्वाथनिर्यूहेति पदोपादानादकल्कत्वं बोध्यम्। दशमूलेत्यादौ।—करञ्जयोः फलं न तु मूलम्, फलस्यैव मेहहरत्वात् यदुक्तम्—"करञ्जकिंशुकारि-

पृथग्दशपलान् भागान् तवत्तोयार्मणे पचेत्।
यवकोलकुलत्थानां प्रस्थं प्रस्थञ्च दापयेत्॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
निचुलं त्रिफला भार्गी रोहिषं गजपिप्पली॥
शृङ्गवेरं विड़ङ्गानि वचा कम्पिल्लकं तथा।
गर्भेणानेन तत्सिद्धं पाययेत् यथाबलम्॥
एतद्धान्वन्तरं नाम विख्यातं सर्पिरुत्तमम्।
कुष्ठं गुल्मप्रमेहांश्च श्वयथुं वातशोणितम्॥
प्लीहोदरं तथार्शांसि विद्रधिं पिड़काश्च याः।
अपस्मारं तथोन्मादं सर्पिरेतन्नियच्छति॥
पृथक् तोयार्मणे तत्र पचेत् द्रव्याच्छतं शतम्।
शतत्रयाधिके तोयमुत्सर्गक्रमतो मतम्॥ २३॥

दाड़िमाद्यं घृतम्—

दाड़िमस्य फलप्रस्थं यवप्रस्थौ तथैव च।
कुलत्थकुड़वञ्चापि क्वाथयित्वा यथाविधि॥
तेन पादावशेषेण घृतप्रस्थं विपाचयेत्।
चतुःषष्टिपलं क्षीरं क्षीरतुल्यं वरीरसम्॥
दत्त्वा मृद्वग्निना कल्कैरक्षमात्रायुतैः सह।
द्राक्षाखर्जूरकाकोलीदन्तीदाड़िमजीरकैः॥

---

फल जन्तुप्रमेहनुत्" इति। सुधा स्नुही तस्या मूलम्, तन्त्रान्तरे मूलपाठात्। नीप कदम्बो स्वल्पवृहत्कदम्बौ, किंवा कदम्बो भूकदम्बः स चालम्बुषः, तन्त्रान्तरे भूमिकदम्बपाठात्; नीपस्थाने क्वापि निम्बः पठ्यते। पृथग्दशपलान् भागानिति दशमूलमपि प्रत्येकं दशपलम्, तत्र प्रतिशतं तोयार्मणदानम्। शतत्रयाधिके द्रव्ये पनरुत्सर्गसिद्धमष्टगुणमेव जलं देयम्। एतदेव वक्ष्यति "पृथक् तोयार्मणे" इत्यादि। अर्मणो द्रोणः, इन्दुश्चाह "पाठान्तरे मतं तोयं क्वाथ्यादष्टगुणन्त्विह" इति। अस्यार्थः

तथा मेदामहामेदात्रिफलादारुरेणुकैः।
विशालारजनीदारुहरिद्राविकषामयैः॥
क्रिमिघ्नभूमिकुष्माण्डश्यामैलाभिभिषग्वरः।
पानं भोज्यं प्रदातव्यं सर्वर्त्तुषु च मात्रया॥
प्रमेहान् विंशतिञ्चैव मूत्राघातांस्तथाऽश्मरीम्।
कृच्छ्रं सुदारुणञ्चैव हन्यादेतद्रसायनम्॥
शूलमष्टविधं हन्ति ज्वरमष्टविधं तथा।
कामलां पाण्डुरोगांश्च हलीमकमथारुचिम्॥
श्लीपदश्च विशेषेण घृतेनानेन नश्यति।
इदमायुष्यमाजस्यं सर्वरोगहरं परम्।
दाड़िमाद्यमिदं नाम अश्विभ्यां निर्मितं महत्॥ २४॥

त्र्यूषणादिगुड़िका—

त्रिकटुत्रिफलाचूर्णं तुल्यगुग्गुलुना युतम्।
गोक्षुरक्काथसंयुक्तं गुड़िकां कारयेद्भिषक्॥
देषकालबलापेक्षी भक्षयेच्चानुलोमिकीम्।
न चात्र परिहारोऽस्ति कर्म कुर्य्यात् यथेप्सितम्॥
प्रमेहान् मूत्रघातांश्च वातरोगोदरं जयेत्॥ २५॥

---

एतदेव घृत तन्त्रान्तरेऽन्यथा पठ्यते तत्र च क्काथार्थमष्टगुणत्तोयमुक्तम्, तत्प्रामाण्यादिहाप्यष्टगुणं तोय देयम्। तन्त्रान्तरीयपाठान्तर यथा "दशमूल हरीतकी देवदारु करञ्जद्वय वर्षाभूद्वय दन्ती भूमिकदम्ब भल्लातक पुष्करमूलार्कमूल कुटी मूल वरुणमूल पिप्पलीमूलमिति प्रत्येकं दशपलोन्मितानि। यवकोलकुलत्थप्रस्थत्रयं चाष्टगुणेऽम्भसि पादशेष कषायमवतारयेत्" इत्यादि। धर्मणाशब्देनेह भूरिजलोपलक्षण इति चन्द्रस्याशय। व्यवहारस्त्वधुना चक्रमतेनैव। निचुल इ ज्जल रोहिषं गन्धतृणम्॥ २२-२४॥

त्रिकटुत्रिफलेत्यादि।—त्रिकटुत्रिफलाचूर्णेन तुल्य गुग्गुलुं किं विशिष्टम्—युक्त मिश्रितम्, पुनः कीदृशम्—गोक्षुरक्काथेन सम्यग्युतं भावितम्, एव कृत

शिलाजतुप्रयोगः—

शालसारादितोयेन भावितं यच्छिलाजतु।
पिबेत् तेनैव संशुद्धदेहः पिष्टं यथाबलम्॥
जाङ्गलानां रसैः सार्द्धं तस्मिन् जीर्णे च भोजनम्।
कुर्य्यादेवं तुलां यावदुपयुञ्जीत मानवः॥
मधुमेहं विहायासौ शर्करामश्मरीं तथा।
वपुर्वर्णबलोपेतः शतं जीवत्यनामयः॥ २६॥
माक्षिकं धातुमप्येवं युञ्ज्यादस्याप्ययं गुणः॥ २७॥
शालसारादिवर्गस्य क्वाथे तु घनतां गते॥
दन्तीलोध्रशिवाकान्तलौहताम्ररजः क्षिपेत्।
घनीभूतमदग्धञ्च प्राश्य मेहान् व्यपोहति॥
व्यायामजातमखिलं भजन् मेहान् व्यपोहति॥ २८॥
पादत्वक्छत्ररहितो भिक्षाशी मुनिवद्यतः।

... कारयेदित्यर्थः। मिलितत्रिकटुचूर्णं पल १, मिलितत्रिफलाचूर्णं पल १, ... पल २, चूर्णयुक्तगग्गुलभावनार्थं गोक्षुर पल ४, क्वाथार्थं जल श ४, एव ...ऽहमातपे भावयेत, तदनु षडष्टमाषकमिता वटिका कार्य्याः॥ २५॥

शालसारादितोयेनेत्यादि। शालसारादि सौश्रुतो गणः तस्य तोय क्वाथ। ... "तुल्यं गिरिजेन जले चतुर्गुणे भावनौषध क्वाथ्यम्" इत्यादि रसायन-...ध्यमाणविधिना ज्ञेयम्। तेनैवेति शालसारादितोयेनैव पिबेत्। संशुद्धदेह ...त वमनादिना। पिष्टमिति चूर्णितम्। तुला यावदुपयुञ्जीतेति प्रतिदिनमड ...ष्टमावया तावानुपयोगोऽस्य यावता तुला स पूर्य्यते न तु पिप्पलीवर्द्धमानवत्। ... विहायेति उत्पन्नमात्र मधुमेह जित्वा इत्यर्थः। चिरजस्य असाध्यत्वात ...था महाप्रभावत्वात। योगोऽयमसाध्यमपि मधुमेहं साधयति। उक्तविधि ...यमाक्षिकऽप्यतिदिशति माक्षिक धातुमप्येवमिति। शालसारादिवर्गस्येत्यादि।— ...लसारादिगणस्य चतुर्थभागावशिष्टे क्वाथे पुनः पाकाद्घनीभूते दन्त्यादीना मिलि-...ता चूर्णं पादिक प्रक्षेप्यं कुटजलेहवत्। शिवा हरीतकी। कान्तेति।— ...रतपुटितकान्तलौहादिचूर्णम, अस्य सर्वो विधिर्लौहान्तरवत्। व्यायामजनित

योजनानां शतं गच्छेदधिकं वा निरन्तरम् ॥
मेहान् जेतुं वने वापि नीवारामलकाशनः ॥ २९ ॥
शराविकाद्याः पिड़काः साधयेच्छोथवद्भिषक्।
पक्वाश्चिकित्सेद् व्रणवत् तासां पाने प्रशस्यते।
क्वाथं वनस्पतेर्वास्तं मूत्रञ्च व्रणशोधनम्।
एलादिकेन कुर्वीत तैलञ्च व्रणरोपणम् ॥
आरग्वधादिना कुर्य्यात् क्वाथमुद्वर्त्तनानि च।
शालसारादिसेकञ्च भोज्यादिष्व कणादिना ॥ ३० ॥
सौवीरकं सुरां शुक्तं तैलं क्षीरं घृतं गुड़म्।
अम्लेक्षुरसपिष्टान्नानूपमांसानि वर्जयेत् ॥ ३१ ॥
प्रमेहिणां यदा मूत्रमनाविलमपिच्छिलम्।
विशदं कटु तिक्तञ्च तदारोग्यं प्रचक्षते ॥ ३२ ॥

इति प्रमेहचिकित्सा।

---

मिति मलयुद्धादिर्जनितम्। नीवारस्य पलक्षणम्, तेन श्यामाकादिकमपि बोध्यं यदाह सुश्रुत —"महावने वा श्यामाक-नीवारामलक कपित्थ-तिन्दुकाश्मन्तकफलाहारी मृगै सह वसेत्" इति ॥ २८ २९ ॥

प्रमेहपिडकाचिकित्सामाह शराविकाद्या इत्यादि।—शोथवदिति व्रणशोथवत वनस्पतेरिति वटादेः, वास्त मत्र क्वाथमलम्। एलादिकेनेत्यादि।—एलादिगणश्च सौश्रुतः, "कल्ककाथाद्यनिर्देशे गणात्तस्मात् समावपेत्" इति वचनात एलादिगणस्य क्वाथः कल्कश्च। अन्ये तु एलादिगणस्य कल्को जलञ्च चतुर्गुणमित्याहु आरग्वधादिरपि सौश्रुतो गणः। क्वाथमिति पानार्थं परिषेकार्थञ्च। भोज्यादिमित्यादि शब्दात् पानमपि बोध्यम्। कणादिनेति पिप्पल्यादिगणेन सौश्रुतेन निदानपरिवर्जनमाह सौवीरकमित्यादि ॥ ३०--३२ ॥

इति प्रमेह प्रमेहपिडका चिकित्सा-विवृतिः।

---

## अथ स्थौल्यचिकित्सा।

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रियः।
हन्त्यवश्यमतिस्थौल्यं यवश्यामाकभोजनः॥
अस्वप्नञ्च व्यवायञ्च व्यायामं चिन्तनानि च।
स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत्॥ १॥
प्रातर्मधुयुतं वारि सेवितं स्थौल्यनाशनम्।
उष्णमन्नस्य मण्डञ्च पिबन् कृशतनुर्भवेत्॥ २॥
सचव्यजीरकव्योषहिङ्गुसौवर्चलानलाः।
मस्तुना शक्तवः पीता मेदोघ्ना वह्निदीपनाः॥ ३॥

विडङ्गाद्यं चूर्णम्—

विडङ्गनागरक्षारकाललोहरजोमधु।
यवामलकचूर्णन्तु प्रयोगः स्थौल्यनाशनः॥ ४॥

विडङ्गाद्यं लौहम्—

विडङ्गत्रिफलामुस्तैः कणानागरकेण च।
विल्वचन्दनह्रीवेरपाठोशीरं तथा बला॥
एषां सर्वसमं लौहं जलेन वटिकां कुरु।
घृतयोगेन कर्त्तव्या माषिका वटिका शुभा॥
अनुपानं प्रयोक्तव्यं लौहस्याष्टगुणं पयः।
सर्वमेहहरं बल्यं कान्त्यायुर्बलवर्द्धनम्॥

---

प्रमेहवत् स्थौल्यस्यापि व्यायामसाध्यत्वात् तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सामाह श्रमेत्यादि। मधुयुतं वारीति अत्र सक्षारत्वेन कर्षणत्वात् काप जलमेव यौगिकमिति वृद्धाः। सचव्येत्यादौ।—अनलश्चित्रकः। शक्तव इह वक्ष्यमाणव्योषादिशक्तुप्रयोगन्यायात् सर्वचूर्णात् षोडशगुणाः। अनेन एक वार भोजनमाहारह्रूपत्वादित्याहुः। विडङ्गेत्यादौ।—क्षारो यवक्षारः, काललौहो वज्रादि., अस्य चूर्णं मारणपुटननिष्पन्नं ग्राह्यम्। अत्र सर्वचूर्णानामेव समभाग

अग्निसन्दीपनकरं वाजीकरणमुत्तमम् ।
सोमरोगं निहन्त्याशु भास्करस्तिमिरं यथा ।
विड़ङ्गाद्यमिदं लौहं सर्वरोगनिसूदनम् ॥ ५ ॥

व्योषाद्यशक्तुप्रयोगः—

व्योषं विड़ङ्गशिग्रूणि त्रिफलां कटुरोहिणीम् ।
बृहत्यौ द्वे हरिद्रे द्वे पाठामतिविषां स्थिराम् ॥
हिङ्गुकेवुकमूलानि यमानीधान्यचित्रकम् ।
सौवर्च्चलमजाजीञ्च हवुषाञ्चेति चूर्णयेत् ॥
चूर्णतैलघृतक्षौद्रभागाः स्युर्मानतः समाः ।
शक्तूनां षोड़शगुणो भागः सन्तर्पणं पिबेत् ॥
प्रयोगात् तस्य शाम्यन्ति रोगाः सन्तर्पणोत्थिताः ।
प्रमेहा मूढ़वाताश्च कुष्ठान्यर्शांसि कामलाः ।
प्लीहपाण्डामयः शोथो मूत्रकृच्छ्रमरोचकः ।
हृद्रोगो राजयक्ष्मा च कासश्वासौ गलग्रहः ॥
क्रिमयो ग्रहणीदोषाः श्वैत्र्यं स्थौल्यमतीव च ।
नराणां दीप्यते चाग्निः स्मृतिर्बुद्धिश्च वर्द्धते ॥ ६ ॥
वदरीपत्रकल्केन पेया काञ्जिकसाधिता ।
स्थौल्यनुत् स्यात् साग्निमन्थरसं वापि शिलाजतु ॥ ७ ॥

---

ग्राहयन्ति, किन्तु लौहस्य महावीर्य्यत्वेन प्राधान्यादितरमिलितचूर्णसमत्वम नाग स्याधिको भाग, मधुना चावावलेह इत्यप्याह । व्योषमित्यादौ ।—तैलघृतचाद्राण मर्य्यक मिलितचूर्णसमत्वम्, शक्तूनाञ्च षोडशगुणो भाग समुदितचूर्णापेक्षया। सन्तर्पणमिति जलालोडितशक्तुस्वरूपतया। तेन सन्तर्पणसज्ञस्याप्यसन्तर्पणत या। मात्रा चास्य श्राहारद्रव्यप्रधानत्वाद भूयसी। मूढवातो वाताप्रवृत्ति श्चेत्र श्वित्रत्वम्। श्वैत्यमिति पाठे श्व तावभासता, सा च कफकृता ॥ १—६

बदरीत्यादि।—बदरीपत्रपलं पिष्टा काञ्जिकद्रवेण पेया साध्या। साग्नि मन्थेत्यादि।—द्वितीयो योग.। रस. क्वाथः। शिलाजतु प्रक्षेप्यम्। अत्र

अमृताद्यगुग्गुलुः—

अमृतात्रुटिविल्ववत्सकं कलिङ्गपथ्यामलकानि गुग्गुलुः।
क्रमवृद्धमिदं मधुप्लुतं पिडका श्लीपदभगन्दरं जयेत्॥८॥

नवकगुग्गुलुः—

व्योषाग्नित्रिफलामुस्तविडङ्गैर्गुग्गुलुं समम्।
खादन् सर्वान् जयेद्व्याधीन् मेदःश्लेष्मामवातजान्॥ ९॥

लौहरसायनम्—

गुग्गुलुस्तालमूली च त्रिफला खदिरं वृषम्।
त्रिवृतालम्बुषा स्नुक् च निर्गुण्डी चित्रकं शटी॥
एषां दशपलान् भागांस्तोये पक्त्वाढ़के पचेत्।
पादशेषं ततः कृत्वा कषायमवतारयेत्॥
पलं द्वादशकं देयं तीक्ष्णलौहं सुचूर्णितम्।
पुराणसर्पिषः प्रस्थं शर्कराष्टपलोन्मितम्॥
पचेत् ताम्रमये पात्रे सुशीते चावतारिते।
प्रस्थार्द्धं माक्षिकं देयं शिलाजतुपलद्वयम्॥
एलात्वचाः पलं द्वे च विडङ्गानि पलत्रयम्।
मरिचञ्चाञ्जनं कृष्णा द्विपलं त्रिफलान्वितम्॥
पलद्वयन्तु काशीश श्लक्ष्णचूर्णीकृतं बुधैः।

---

अमृताद्यो।—त्रुटि सूक्ष्मैला, वत्सकं विडङ्गं, कलिङ्गं इन्द्रयवं, केचिच्छन्दोभङ्गभिया कलिपाठं कुर्वन्ति, तन्मते कलिर्विभीतकं, किन्तु महेश्वरपत्रिकायामपि इन्द्रयव एव व्याख्यातं। तस्मादनन्तत्वाच्छन्दोमागाणामेव छन्दोभङ्गदोषो नाशङ्कनीयः। क्रमवृद्धमिति अमृताया एको भागः, द्वौ त्रुटेरित्यादि। मधुना आलोड्य पेयम्॥ ७। ८॥

व्योषाद्यौ।—अग्निश्चित्रकं॥ ९॥

गुग्गुलुरित्यादि। अत्र पिण्डितस्य गुग्गुलोः क्वाथितस्य च क्वाथकरणसमय एव क्वाथमध्ये प्रक्षेपः। अलम्बुषा मुण्डिरी। पुराणं सर्पिर्दशवर्षस्थितम्, यदुक्तम्, "उग्रगन्धं पुराणं स्याद् दशवर्षस्थितं घृतम्। लाक्षारससनिभं शीतं

चूर्णं दत्त्वा सुमथितं स्निग्धे भाण्डे निधापयेत् ॥
ततः संशुद्धदेहस्तु भक्षयेदक्षमात्रकम् ।
अनुपानं पिबेत् क्षीरं जाङ्गलानां रसं तथा ।
वातघ्नं श्रहरं श्रेष्ठं कुष्ठमेहोदरापहम् ।
कामलां पाण्डुरोगञ्च श्वयथुं सभगन्दरम् ॥
मूर्च्छामोहविषोन्मादगराणि विविधानि च ।
स्थूलानां कर्षणं श्रेष्ठं मेदुरे परमौषधम् ॥
कर्षयेच्चातिमात्रेण कुक्षिं पातालसन्निभम् ।
बल्यं रसायनं मेध्यं वाजीकरणमुत्तमम् ॥
श्रीकरं पुत्रजननं वलीपलितनाशनम् ।
नाश्नीयात् कदलीं कन्दं काञ्जिकं करमर्दकम् ।
करीरं कारवेल्लञ्च षट्ककाराणि वर्जयेत् ॥ १० ॥

त्रिफलाद्यं तैलम्—

त्रिफलातिविषामूर्वात्रिवृच्चित्रकवासकैः ।
निम्बारग्वधषड्ग्रन्थासप्तपर्णनिशाद्वयैः ॥
गुडूचीन्द्रसुराकृष्णाकुष्ठसर्षपनागरैः ।
तैलमेभिः समं पक्वं सुरसादिरसाप्लुतम् ॥
पानाभ्यञ्जनगण्डूषनस्यवस्तिषु योजितम् ।
स्थूलतालस्यकण्ड्वादीन् जयेत् कफकृतान् गदान् ॥ ११ ॥

---

प्रपराणमत परम्” इति । एलात्वचाभिर्मिलित्वा पलार्द्धम, मरिचादीना त्रिफलान्ताना प्रत्येक पलद्वयम्, अञ्जन रसाञ्जनम, शिलाजतुपलत्रयञ्च शोधित भावितञ्च ग्राह्यम् । एषा चूर्णाना पाणिसहत्वमालोण्डदशाया प्रक्षेप, मधुनस्तु दिनान्तरे । मधुन प्रस्थार्द्ध षोडशपलानि । खण्डखाद्यलोहवदस्य पाक. । लौहान्तरवदस्य मर्दनादिक्रिया बोध्या ॥ १० ॥

त्रिफलाद्यतैले इन्द्रसुरा गोरक्षकर्कटी निर्गुण्डी वा । सुरसादिरसाप्लुतमिति सुश्रुतोक्तसुरसादिगणस्य क्वाथश्चतुर्गुण ॥ ११ ॥

शिरीषलामज्जकहेमलोध्रै स्त्वग्दोषसंस्वेदहरः प्रघर्षः।
पत्राम्बुलोध्राभयचन्दनानि शरीरदौर्गन्ध्यहरः प्रदेहः ॥१२॥

वासादलरसो लेपाच्छङ्खचूर्णेन संयुतः।
बिल्वपत्ररसो वापि गात्रदौर्गन्ध्यनाशनः ॥ १३ ॥

हरीतकीलोध्रमरिष्टपत्रम्
चूतत्वचो दाडिमवल्कलञ्च।
एषोऽङ्गरागः कथितोऽङ्गनानाम्
जङ्घाकषायश्च नराधिपाणाम् ॥ १४ ॥

गोमूत्रपिष्टं विनिहन्ति कुष्ठम्
वर्णोज्ज्वलं गोपयसा च युक्तम्।
कक्षादिदौर्गन्ध्यहरं पयोभिः
शस्तं वशीकृद्रजनीद्वयेन ॥ १५ ॥

चिञ्चापत्रस्वरससम्मर्दितं कक्षादियोजितं जयति।
पुटदग्धहरिद्रोद्वर्त्तनमचिराद्देहदौर्गन्ध्यम् ॥ १६ ॥

---

मदादोषजन्ययोः स्वेददौर्गन्ध्ययोश्चिकित्सामाह, शिरीषेत्यादि।—लामज्जक-मुशीरम्, हेम नागकेशरचूर्णम्, पत्र तेजपत्र तमालपत्रमित्यन्ये, अम्बु वालकम्, लोध्र अगरु, चन्दन श्वेतचन्दनम्। शङ्खचूर्णेन संयुत इति दग्धशङ्खचूर्णेन मिश्रित। एवं बिल्वपत्ररसोऽपि ॥ १२। १३ ॥

हरीतकीत्यादौ।—अरिष्टपत्र निम्बपत्र, दाडिमवल्कल त्वचस्य फलस्य वा, अङ्गरागो वर्णप्रसादः। जङ्घाकषाय इति गजवाजिवाहनेन विवर्णयोर्जङ्घयोर्वर्ण प्रसादनार्थ कषायो विलेपनम्। यदुक्तं, मेदिनीकरकोषे "कषायो रसभेदे च निर्यासे च विलेपने" इति ॥ १४ ॥

गोमूत्रपिष्टमित्यादि।—योगान्तरम्। वर्णोज्ज्वलं हरिताल गन्धक इत्यन्ये। हरितालं गोमूत्रपिष्टं सत् कुष्ठं निहन्ति। गोपयसा युक्तमिति पिष्टं तदेव दौर्गन्ध्य हरं, तथा रजनीद्वयेन सहितं तदेव हरिताल पयसा क्षीरेण पिष्टा तिलकदानेन वशीकरणं भवतीत्यर्थः ॥ १५ ॥

दलजललघुमलयाभयविलेपनं हरति देहदौर्गन्ध्यम् ।
विमलारनालसहितं पीतमिवालम्बुषाचूर्णम् ॥
हस्तपादस्रुतौ योज्यं गुग्गुलुं पञ्चतिक्तकम् ।
अथवा पञ्चतिक्ताख्यं घृतं खादेदतन्द्रितः ॥ १७ ॥
इति स्थौल्यचिकित्सा ।

---

## अथोदर-चिकित्सा ।

उदरं दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनलः ।
तस्माद्भाज्यानि योज्यानि दीपनानि लघूनि च ॥ १ ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलांश्च मृगान् द्विजान् ।
पयामूत्रासवारिष्टमधु शीधु तथा पिबेत् ॥ २ ॥
वातोदरं बलवतः पूर्वं स्नेहैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्नेहविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
तथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥ ३ ॥
दोषातिमात्रोपचयात् स्रोतोमार्गविरोधनात् ।

---

चिञ्चेत्यादि ।—चिञ्चापत्रस्वरसमार्दों मक्षण कक्ष्यामलदनन्तरं पुटदग्धहरिद्र पिष्टा उद्वर्त्तन कार्य्यमित्यर्थ । दलेत्यादि । दल तेजपत्र , जल वालक , लघु अगुरु , मलयज श्वेतचन्दन , अभयमुशीर ; अलम्बुषा मुण्डिरी ॥ १६ ॥ १७ ।
इति स्थौल्याधिकार ।

---

उदरोक्तं धसाधस्यात स्थौल्यानन्तरमुदरचिकित्सामाह उदर इत्यादि । उदर इति उदररोगे । वातोदरमित्यादि ननु "विवर्जयेत् स्नेहपानमजीर्णी चोदरी ज्वरी" इति वचनात स्नेहपानं निषिद्धं, तथा "नोदरी नातिसारी च" इत्यादिना च स्वेदोऽपि निषिद्ध., तत् कथमत स्नेहस्वेदोपदेश उच्यते । स्वतन्त्रयोर्निषेधो

प्रभवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ॥
विरिक्तं च यथादोषहरैः पेया शृता हिता ॥ ४ ॥
वातोदरी पिबेत् तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥ ५ ॥
यमानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
पिबेन्मधुयुतं तक्रं व्यक्ताम्लं नातिपेलवम् ॥ ६ ॥
मधुतैलवचाशुण्ठीशताह्वाकुष्ठसैन्धवैः ।
युक्तं प्लीहोदरी जातं सव्योषन्तु दकोदरी ॥
बद्धोदरी तु हवुषा दीप्यकाजाजिसैन्धवैः ।
पिबेच्छिद्रोदरी तक्रं पिप्पलीक्षौद्रसंयुतम् ॥
त्र्यूषणक्षारलवणैर्युक्तन्तु निचयोदरी ॥ ७ ॥
गौरवारोचकार्त्तानां समन्दाग्न्यतिसारिणाम् ।
तक्रं वातकफार्त्तानाममृतत्वाय कल्पते ॥ ८ ॥
वातोदरं पयोऽभ्यासो निरूहो दाशमूलिकः ।

---

[illegible] न तु शोधनाद्भ्मतयो, अन्यथा दोषहरणस्य दुष्करत्वात् । परिम्लानामात् लग्नम् । तर्थेति वस्त्रवष्टनेन । उदरे पुनः पुनः शोधनार्थोपपत्तिमाह दोषाति मात्रेत्यादि । स्रोतोमार्गे स्रोतोमुखे, मार्गशब्दोऽत्र मुखरूपमार्गवाची यथा-दोषहरैरिति ।—यस्मिन्नुदरे यो दोष उद्भूतस्तत्र तद्दोषप्रत्यनीकद्रव्यसृतेत्यादि ॥ १—५ ॥

यमानीत्यादि नातिपेलवमित्यन्तो नैको योगः, नातिपेलवं नातितनु । अन्ये कफोदरोत्पन्न एको योग एवेत्याह । तन्न, "यमानीसैन्धवाजाजीव्योषैः कफोदरे" इति वाग्भटविरोधात् । मधुतैलत्यादौ जातमिति छेदः, सुजातदोष भवमित्यर्थः । सव्योषन्तु दकोदरीति । दकोदरी तु सव्योषं तक्रं पिबेदित्यर्थः । दीप्यकं यमानी । निचयोदरी सन्निपातोदरी । गौरवत्यादौ—असंस्कृतस्य केवलतक्रस्यायं गुण इति ज्ञेयम् ॥ ६—८ ॥

वातोदर इत्यादि ।—पयोऽभ्यास इति क्रमेण, बलार्थं ; बलजननानन्तरं पयो

सोदावर्त्ते वातघ्नाम्लशृतैरण्डानुवासनः ॥ ९ ॥

सामुद्राद्यं चूर्णम्—

सामुद्रसौवर्चलसैन्धवानि क्षारं यवानीमजमोदकञ्च ।
सपिप्पलीचित्रकशृङ्गवेरं हिङ्गु विडङ्गेति समानि कुर्यात् ॥
एतानि चूर्णानि घृतप्लुतानि भुञ्जीत पूर्वं कवलं प्रशस्तम् ।
वातोदरं गुल्ममजीर्णभुक्तं वायुप्रकोपं ग्रहणीञ्च दुष्टाम् ।
अर्शांसि दुष्टानि च पाण्डुरोगं भगन्दरञ्चेति निहन्ति सद्यः ॥१०॥

पित्तोदरेषु बलिनं पूर्वमेव विरेचयेत् ।
अनुवास्याबलं क्षीरबस्तिशुद्धं विरेचयेत् ॥
पयसा सत्रिवृत्कल्केनोरुबूकशृतेन वा ॥
सातलात्रायमाणाभ्यां शृतेनारग्वधेन वा ॥ ११ ॥

---

निर्दम्मोयम् । निरूहो दाशमूलिक इति दशमूलक्वाथेन निरूहः कार्य इत्यर्थः । किंवा "द्विपञ्चमूलस्य रसोऽम्लयुक्तः सच्छागमांसस्य सपूर्वकल्कः । निरूहयुक्तः भवेन्निरूहः सर्वानिलव्याधिहरः प्रदिष्टः" इति । अयञ्च तीक्ष्णविरेचनद्रव्ययुक्तः कार्यः, चरकप्रामाण्यात् । सोदावर्त्ते वातोदरे इत्यन्वयः । वातघ्नाम्लशृतैरण्डानुवासन इति वातघ्नैर्द्रव्यैस्तथा अम्लैश्च काञ्जिकादिभिः शृतमेरण्डमित्येरण्डतैलमनुवासनं यस्य वस्तु स तथा इति । अनुवासनस्य स्नेहरूपत्वात् एरण्डपदेनैरण्डतैलमुच्यते ॥ ९ ॥

सामुद्रेत्यादि ।—यवानी क्षारो यवक्षारः । अस्य हिङ्ग्वष्टकवदुपयोगः । चूर्णीत्यनन्तरं सम्मिश्र्यात ग्रास ॥ १० ॥

पित्तोदरेत्यादि ।—क्षीरप्रधानो बस्तिः क्षीरबस्तिः । अत बलिनं पुरुषं पूर्वमिति अनुवासनमकृत्वैव विरेचयेत् । अनुवासनव्यतिरिक्तस्तु स्नेह कर्त्तव्य एव । अतएवोक्तं वाग्भटे—"बलिनं स्वादुसिद्धेन पैत्ते संस्नेह्य सर्पिषा । श्यामात्रिभण्डीत्रिफलातिपक्केन विरेचयेत्" इति । अबलं पुनरादौ अनुवास्य ततः क्षीरबस्तिशुद्धं विरेचयेत् । विरेकोऽवाग्निबलजननानन्तरमेव कार्य्यः । उक्तं हि वाग्भटे—"दुर्बलं त्वनुवास्यादौ शोधयेत् क्षीरबस्तिभिः । जाते चाग्निबले स्निग्धं भूयो भूयो विरेचयेत्" इति । केन विरेचयेदित्याह पयसेत्यादि । अत्र तु उरुबूकस्य